(मूलम्)

स्थिताविति निरावरणेन तथैव गृह्येते । आसन्नामललोचनेनेव यथोदितसर्षपयष्टौ सर्षपा रत्नादौ वा तद्गुणा इति । न ह्यसौ सर्षपान् न पश्यति तथाप्रतीतेः, न च तद्यष्टिमपि, अत एव हेतोः । न चान्यतरदपि अत्र न, तदितराभावापत्तेः । न च परिकल्पितमपि, अत एव हेतोरिति । एवं रत्नादिगुणेष्वपि तज्ज्ञमाश्रित्य योजनीयम् ॥

स्यादेतदेवं योगिभिर्न ते विविक्ता एव गृह्यन्ते । न, क्वचिद् ग्रहणात्, विविक्तानामपि भावात्, पुद्गलास्तिकायवैचित्र्यात्, वचनप्रामाण्यात् । तथा चार्षम्–"खंधा खंधदेसा खंधपएसा परमाणुपोग्गला"[1] इति ।

---

(स्वो॰ व्या॰)

स्थिताविति कृत्वा निरावरणेन–योगिना तथैव गृह्येते यथा व्यवस्थितौ । निदर्शनमाह–आसन्नामललोचनेनेव–प्रमात्रा यथोदितसर्षपयष्टौ अनन्तरोपन्यस्तायां सर्षपाः साधारणासाधारणरूपा एव । न ह्यसौ सर्षपमात्र यष्टिशून्यं यष्टिं वा सर्षपशून्यां गृह्णाति । निदर्शनान्तरमाह–रत्नादौ वा तद्गुणाः–रत्नगुणा इति । एतदपि भावयन्नाह–न ह्यसौ–आसन्नामललोचनः–सर्षपान् न पश्यति तथाप्रतीतेः–सर्षपत्वेन प्रतीतेः[2] । न च तद्यष्टिमपि–सर्षपयष्टिमपि न पश्यति; अत एव हेतोः–तथाप्रतीतेरेव । न चान्यतरदपि–सर्षपादि अत्र–यष्टौ न; तर्हि? उभयमस्ति[3] । कुत इत्याह–तदितराभावापत्तेः, अनुभूयमाननिषेधेनेति भावः । न च परिकल्पितमपि अन्यतरत् सर्षपादि । कुत इत्याह–अत एव हेतोः–तदितराभावापत्तिलक्षणादिति । एवं रत्नादिगुणेष्वपि–शिरःशूलशमनादिप्रभावादिषु तज्ज्ञमाश्रित्य रत्नपरीक्षाकुशलं योजनीयम् । न ह्यसौ रत्न न पश्यति तथाप्रतीतेः । न च न तद्गुणानप्यत एव हेतोरित्यादि ॥

स्यादेतदित्यादि । स्यादेतत्–अथैव मन्यसे एवं–सर्षपयष्टिदृष्टान्तेन योगिभिरपि–निरावरणैर्न ते, प्रक्रमात् सर्षपकल्पाः परमाणवो विविक्ता एव गृह्यन्ते । एतदाशङ्क्याह–न क्वचिद् ग्रहणाद् विविक्तानाम् । कथमित्याह–विविक्तानामपि भावात्, प्रक्रमात् परमाणूनाम् । कथं भाव इत्याह–पुद्गलास्तिकायवैचित्र्यात् कारणात् । वैचित्र्यं च वचनप्रामाण्याद्धेतोः । वचनमाह तथा चार्षमित्यादिना–

---

१ छाया–स्कन्धाः स्कन्धदेशाः स्कन्धप्रदेशाः परमाणुपुद्गलाः । २ 'तत. प्रतीते' इति क–पाठ । ३ 'उभयमपि कुत' इति क–पाठ ।

(मूलम्)

अतो विविक्तास्ते गृह्यन्ते तथास्वभावत्वात् प्रत्येकसर्षपवत्। स्थूलाकारस्य छद्मस्थेनापि ग्रहणानुगुण्यतस्तु[1] एवमुपन्यास इति। एवं च 'अग्राह्या इत्यपि किं प्रमाणमिति चेत्', इत्येतदाशङ्क्य यदुक्तम्[2]–'ननु तद्युक्त्ययोगः' इत्येतदपि तुच्छमेव द्रष्टव्यम्, तद्युक्त्ययोगासिद्धेः। आह[3]–'परमाणवो हि मूर्त्ता इष्यन्ते। मूर्त्तत्वे च सत्यवश्यं दिग्भागभेदेन भाव्यम्। सति चास्मिन् सावयवत्वमहत्त्वैकत्वानेकत्वविचाराक्षमत्वात् कुतस्ते' इत्यादिना[4] तद्युक्त्ययोग उक्तः। सत्यमुक्तः, अयुक्तस्तूक्तः, मूर्त्तत्वादेवाणूनामुक्तदोषाभावात्, तत्त्वतोऽभ्युप-

(स्वो० व्या०)

"खंधा खंधदेसा खंधप्पदेसा[5] परमाणुपोग्गला"[6] इति। अत्र स्कन्धा विशिष्टैकपरिणामपरिणताः। स्कन्धदेशास्तु द्व्यादिविभागाः। स्कन्धप्रदेशास्तत्स्था एव परमाणवः। परमाणुपुद्गलाः प्रत्येकपरमाणु[7]परिणता इति। **अतो** ये **विविक्ताः** परमाणुपुद्गलास्ते **गृह्यन्ते,** अधिकृतक्वचिद्ग्रहणे। कुत इत्याह–**तथास्वभावत्वात्** तेषां–परमाणुपुद्गलानां **प्रत्येकसर्षपवत्**[8] यष्टिर्बाह्या इति निदर्शनम्। **स्थूलाकारस्य** स्कन्धपरिणामरूपस्य **छद्मस्थेनापि**–प्रमात्रा **ग्रहणानुगुण्यतः** पुनः कारणात्। **एवमुपन्यासः** स्कन्धाः स्कन्धा देशा इत्यादिरूपसूत्र[9] **इति। एवं चाग्राह्या इत्यपि किं प्रमाणम्?। इति चेत्, एतदाशङ्क्य यदुक्तं** पूर्वपक्षग्रन्थे[10]–**'ननु तद्युक्त्ययोगः' इत्येतदपि तुच्छमेव**–असारमेव **द्रष्टव्यम्।** कुत इत्याह–**तद्युक्त्ययोगासिद्धेः,** तेषां–परमाणूनां युक्त्ययोगासिद्धेरिति[11]। **आह–परमाणवो** यस्मान्**मूर्त्ता इष्यन्ते। मूर्त्तत्वे च सति** तेषां किमित्याह–**अवश्यं दिग्भागभेदेन** भवितव्यम्। ततः किमित्याह–**सति चास्मिन्**–दिग्भागभेदे **सावयवत्वमहत्त्वैकत्वानेकत्वविचाराक्षमत्वात्** कारणात् **कुतस्ते**–परमाणव **इत्यादिना** ग्रन्थेन[12] **तद्युक्त्ययोगः**–परमाणुयुक्त्ययोग **उक्तः।** एतदाशङ्क्याह–**सत्यमुक्तः**–नात्रान्यथात्वम्[13]; **अयुक्तस्तूक्तः,** अघटमान इत्यर्थः। कुत इत्याह–**मूर्त्तत्वादेव** कारणा**दणूनामुक्तदोषाभावात्।** अभावश्च **तत्त्वतोऽभ्युपगतत्वात्** सावयवत्वादीनाम्। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**

१ 'ग्रहणमनुगण्यतेस्तु' इति क–पाठः। २ द्वितीये पृष्ठे। ३ द्वितीये पृष्ठे तृतीये च। ४ 'इत्यादिना यावद्युक्त्य०' इति क–पाठः। ५ 'खंधपदेसा' इति ङ–पाठः। ६ छाया–स्कन्धाः स्कन्धदेशाः स्कन्धप्रदेशाः परमाणुपुद्गलाः। ७ 'परिमाणु०' इति क–पाठः। ८ 'बाह्यसर्षपवत्' इति भाति। ९ 'रूपस्त्रत्र' इति ङ–पाठः। १० द्वितीये पृष्ठे। ११ 'युक्त्यायोगा०' इति क–पाठः। १२ द्रष्टव्ये द्वितीयं तृतीयं च पृष्ठे। १३ नान्यथा०' इति क–पाठः।

( मूलम् )

गतत्वात्, अन्यथा मूर्त्तत्वायोगादभ्युपगमानां चादोषत्वादिति। न युक्तिबाधिता अप्यभ्युपगमा इष्टसिद्ध्यर्थम्, अतिप्रसङ्गात्, सर्वसिद्ध्यापत्तेः, तन्मात्रनिबन्धनत्वात्, असमञ्जसत्वापत्तेरिति। नैतदेवम्, अधिकृताभ्युपगमस्य युक्तिबाधितत्वासिद्धेः। तथाहि–परमाणवो मूर्त्ताः, अत एव द्रव्यसन्तस्तथासतां च नियमात् क्वचिदवस्थानम्, अवस्थाने चावश्यं दिग्भागभेदः, द्रव्यसतः सर्वत्र विच्छेदात्, अन्यथाऽवस्थानाभावात्। स्वात्मन्येवावस्थानमिति चेत्, न तत्रापि न सर्वत्र विच्छेदः। यदि नामैवं ततः किमिति चेत्, हन्त

( स्वो० व्या० )

सावयवत्वाद्यभावे **मूर्त्तत्वायोगादभ्युपगमानां चादोषत्वात्**। न ह्यभ्युपगमा एव बाधायै भवन्ति इति आह–**न युक्तिबाधिता अप्यभ्युपगमाः**। किमित्याह–**इष्टसिद्ध्यर्थं** भवन्ति। कुत इत्याह–**अतिप्रसङ्गात्**–अतिप्रसङ्गेन[१] **सर्वसिद्ध्यापत्तेः**। आपत्तिश्च **तन्मात्रनिबन्धनत्वात्**, इष्टसिद्धेरित्यर्थः। एवम**समञ्जसत्वापत्तेः** 'न युक्तिबाधिता अपि' इत्यादि योजनीय**मिति**। एतदाशङ्क्याह–**नैतदेवं** यदुक्तं परेण। कुत इत्याह–**अधिकृताभ्युपगमस्य**–प्रस्तुतपरमाणुगोचरस्य **युक्तिबाधितत्वासिद्धेः**। असिद्धिमेवाह **तथाही**त्यादिना। **तथाहि–परमाणवो मूर्त्ताः**–रूपादिमन्तः; **अत एव**–मूर्त्तत्वादेव **द्रव्यसन्तः**–परमार्थसन्तो वर्तन्ते। **तथासतां च** द्रव्यसत्त्वेन **नियमात् क्वचिदवस्थानम्**; **अवस्थाने चावश्यं दिग्भागभेदः**। किमत्र युक्तिबाधितत्वम्?। कुत इत्याह–**द्रव्यसतः सर्वत्र विच्छेदात्** कारणात्। इत्थं चैतदङ्गीकर्तव्यम्, **अन्यथा अवस्थानाभावात्** सतोऽसर्वगतस्य सर्वत्र विच्छेदमन्तरेण कथमवस्थानमिति परिभावनीयम्। **स्वात्मन्येवावस्थानमिति चेत्**, एकान्तनिरंशपरमाणुवादिमतमेतत्। एतदाशङ्क्याह–**न तत्रापि**–स्वात्मन्यवस्थाने **न सर्वत्र विच्छेदः**, किन्तु विच्छेद

( विवरणम् )

(२२) **द्रव्यसतः सर्वत्र विच्छेदात् कारणा**दिति। परमार्थसतोऽसर्वगतस्य पदार्थस्य सर्वासु दिक्षु विच्छेदेन पर्यन्तलक्षणेन भाव्यमिति॥

(२३) **सतोऽसर्वगतस्ये**ति। सतः–परमार्थतो विद्यमानस्यासर्वगतस्य–प्रतिनियतदेशव्यापिनः, न त्वाकाशवत् सर्वगतस्य॥

१ 'प्रसङ्गे च सर्व०' इति ङ–पाठ।

(मूलम्)

**[1]तत्तद्दिग्भागभेदसिद्धिः । का पुनरत्र भावनेति चेत्, पूर्वादिप्रदेशेषु तदभावः, नैतदप्रदेशेषु भाव्यत इति चेत्, तद्भावे समाधीयतां चेतः, नैवं सति स निरवयव एव । भवतु नामैवं ततः किम्? कथं नु तत् परमाणुत्वम्? । ननु तदल्पतराभावेन, कथं ततो नास्त्यपरः? सर्वाल्पस्य विवक्षितत्वात्, कथं तथादिग्भागभेदेन तत्? द्रव्यतोऽशक्यभेदतया सत्त्वावस्थानाभ्यां च तत्रापि दिग्भागभेदात्, तस्यापि**

(स्वो० व्या०)

एव । **यदि नामैवं**–सर्वत्र विच्छेदः, **ततः किम्?** । **इति चेत्**, एतदाशङ्क्याह–**हन्त दिग्भागभेदसिद्धिः । का पुनरत्र**–दिग्भागभेदसिद्धौ **भावना?** । **इति चेत्**, एतदाशङ्क्याह–**पूर्वादिप्रदेशेषु** वास्तवेषु **तदभावः**, प्रक्रमादण्वभावः । [2]**नैतद्**इत्यनन्तरोक्तं **अप्रदेशेषु** अणुषु **भाव्यते । इति चेत्**, एतदाशङ्क्याह–**तद्भावे**–भावनाभावे–**समाधीयतां चेतः, नैवं सति सः**–अणु**र्निरवयव एव** । एतदाशङ्क्याह–**भवतु नामैवं** न निरवयव एव । **ततः किम्?** । अत्राह–[3]**कथं नु तत् परमाणुत्वं** अनिरवयवत्वेन? । एतदाशङ्क्याह–**ननु तदल्पतराभावेन** तत् परमाणुत्वम् । आह–**कथं ततः**–अधिकृतादणो**र्नास्त्यपरः?** एतदाशङ्क्याह–**सर्वाल्पस्य विवक्षितत्वा**न्नास्त्यपर इति । आह–**कथं तथादिग्भागभेदेन**–पूर्वादिभेदेन **तत्**–सर्वाल्पत्वम्? । एतदाशङ्क्याह–**द्रव्यतोऽशक्यभेदतया** कारणेन तत् सर्वाल्पत्वं **सत्त्वावस्थानाभ्यां च** कारणाभ्यां **तत्रापि**–द्रव्य-

(विवरणम्)

(१२) **प्रक्रमादण्वभाव** इति । अयमत्राभिप्रायः–मध्यप्रदेशे वर्तते परिपूर्णः परमाणुः; तद्बहिर्वर्त्तिषु प्राच्यादिप्रदेशेषु पुनर्न वर्तते परिपूर्णः । किं तर्हि? स्पर्शमात्रेणैव । ततो दिग्भागभेदसिद्धिरिति । कोऽर्थः? यत्राकाशप्रदेशे स्वयमवगाढस्तं परिपूर्णमाक्रामति पूर्वादिप्रदेशांस्तत्र परिपूर्णान् स्पृशतीति व्यक्तैव सावयवताऽणोः ॥

(१९–२०) **द्रव्यतोऽशक्यभेदतया कारणेन तत् सर्वाल्पत्वमिति** । परमाणुद्रव्यं यतो द्विधा कर्तुं न पार्यते, ततः सर्वाल्पमुच्यत इत्यर्थः ॥

(२०) **सत्त्वावस्थानाभ्यां च कारणाभ्यामिति** । दिग्भागभेदे साध्ये एतद्धेतुद्वयमुपन्यस्तं सत्त्वमवस्थानं च । ततोऽयमर्थः–यत् सत्–विद्यमानमवस्थितं च तत् क्वापि तत्र दिग्भागभेदेन भवितव्यं, यथा घटादेः । सन्तोऽवस्थिताश्च परमाणवस्तस्मादमीषामप्यस्ति [4]दिग्भागभेदः । तत्सद्भावे च सावयवत्वसिद्धिरनिवारणीयेति ॥

१ 'तद्दिग्भाग०' इति क–पाठः । २ 'नैतत् पूर्वादिप्रदेशेषु तदभाव(?)त्यन्यतरोक्तं अत्र प्रदेशेष्वणुषु भावः इति' इति ङ–पाठः । ३ 'कथं तत्०' इति ङ–पाठः । ४ 'दिग्भागभावभेदः' इति क–पाठः, च–पाठस्तु 'दिग्भावभेदः' इति ।

(मूलम्)

**तद्धर्मत्वात्, अतद्धर्मत्वे तत्तदभावप्रसङ्गात् तदभावे च सत्त्वाद्ययोगात् कथञ्चिदमीषां सावयवत्वादिसिद्धिः, द्रव्यतो [1]निरंशादित्वेऽपि पर्यायतः सांशादित्वात्। न चैतदनार्षम्–"[2]एगपएसोगाढं सत्तपएसा य से फुसण त्ति", मुनीन्द्रवचनश्रवणात्। इतश्चैतदेवं तेषामेव रूपाद्यात्मकत्वात्, अतदात्मकत्वेऽरूपादित्वेनासत्त्वप्रसङ्गात्। किं हि तत् मूर्त्तं सद् यद् रूपादि न भवति?। तदाधार इति चेत्, कोऽसावतदात्मकः?। [3]किं वाऽपतनधर्माणां तेन?। तद्द्रव्यमेवेति चेत्, किं**

---

(स्वो० व्या०)

तोऽशक्यभेदे **दिग्भागभेदात्** कारणात् कथञ्चिदमीषां सावयवत्वादिसिद्धिरिति सम्बन्धः। कुत इत्याह–**तस्यापि**–दिग्भागभेदस्य **तद्धर्मत्वात्**, प्रक्रमादणुधर्मत्वात्। **अतद्धर्मत्वे** सति तस्मिन्–अणौ **तदभावप्रसङ्गात्**–दिग्भागभेदाभावप्रसङ्गात् **तदभावे च**–यथोदितदिग्भागभेदाभावे च **सत्त्वाद्ययोगात्** कारणात् **कथञ्चित्**–केनचित् पर्यायप्रकारेण **अमीषाम्**–अणूनां **सावयवत्वादिसिद्धिः**, सावयवत्वैकत्वादिसिद्धिरित्यर्थः। कुत इत्याह–**द्रव्यतो [4]निरंशादित्वेऽपि** सति अशक्यभेदतया **पर्यायतः सांशादित्वात्** कारणात्। **न चैतत्**–सांशत्व**मनार्षम्**–अनागमिकम्–"**[5]एगपदेसोगाढं सत्तपदेसा य से फुसण त्ति**" **मुनीन्द्रवचनश्रवणात्**। एकप्रदेशावगाढ परमाणुद्रव्य सप्तप्रदेशा च तस्य स्पर्शना सहावगाढप्रदेशेन, षड्दिक्स्थप्रदेशस्पर्शनात्। एवम्भूतमुनीन्द्रवचनश्रवणादिति। **इतश्चैतदेव**मित्यभ्युच्चयमाह–**तेषामेव**–परमाणूनां **रूपाद्यात्मकत्वात्, अतदात्मकत्वे**–अरूपाद्यात्मकत्वे **अरूपादित्वेन** हेतुना **असत्त्वप्रसङ्गात्** तेषाम्। एतद्भावनायाह–**किं हि तत् मूर्त्तं सद् यद् रूपादि न भवति?। तदाधार इति चेत्**, रूपाद्याधारस्तदिति। एतदाशङ्क्याह–**कोऽसौ**–आधारः **अतदात्मकः**–अरूपाद्यात्मकः? **किं वाऽपतनधर्माणाम्**–अमूर्ततया रूपादीनां **तेन**–आधारेण?

---

(विवरणम्)

(२५) **किं वाऽपतनधर्माणाममूर्त्ततया रूपादिनां तेनाधारेणे**ति। अत्रैवं **वैशेषिक**मतमवबुध्यते–येऽमी रूपादयो गुणास्ते सर्वेऽप्यमूर्त्ता एव, यतः 'असर्वगतद्रव्यपरिमाणं मूर्त्तिः' इति वचनान्मूर्त्तिः परिमाणलक्षणो गुण एव, अतः कथं रूपा-

---

१ 'निरशत्वेऽपि' इति क-पाठ। २ छाया–एकप्रदेशावगाढं सप्तप्रदेशा च तस्य स्पर्शनेति। ३ 'किञ्चापतन०' इति क-पाठ। ४ 'निरशत्वादित्वे' इति ङ-पाठ। ५ छायार्थं द्रष्टव्यं द्वितीयं टिप्पणकम्।

( मूलम् )

**तदरूपाद्यात्मकं यदतदाभया धिया गम्यते ?। द्रव्यधीगम्यमिति चेत्, काऽसावरूपाद्याभा ? कथं वा मूर्त्तं स्वतोऽरूपादि ?। मूर्त्तत्वयोगादिति चेत्, कथं मूर्त्तामूर्त्तयोर्योगः ?। तत्स्वरूपानापत्तौ वा तत्त्वम्, अतिप्रसङ्गात्, नभसोऽपि मूर्त्ततापत्तेः, भिन्नतद्धर्मयोगात् सर्वगतत्वादिति ॥**

( स्वो० व्या० )

**तद्द्रव्यमेव इति चेत्**—रूपादिसम्बन्धि द्रव्यमेवेति चेदाधारः। एतदाशङ्क्याह—**किं तत्**—द्रव्य**मरूपाद्यात्मकं यदतदाभया**—अरूपाद्याकारया **धिया**—बुद्ध्या **गम्यते ?** न किञ्चिदित्यर्थः। **द्रव्यधीगम्यमिति चेत्**, एतदाशङ्क्याह—**काऽसौ**—द्रव्यधीः **अरूपाद्याकारा ?** न काचिदिति भावः। **कथं वा मूर्त्तं** तत् **स्वतः**—आत्मना **अरूपादि** सत् ?। **मूर्त्तत्वयोगादिति चेन्**मूर्त्तम्। एतदाशङ्क्याह—**कथं मूर्त्तामूर्त्तयोः**—द्रव्य-मूर्त्तत्वयो**र्योगः**—सम्बन्धः ?। **तत्स्वरूपानापत्तौ वा**—मूर्त्तत्वस्वरूपानापत्तौ वा द्रव्यस्यामूर्त्तस्य **तत्त्वं**—मूर्त्तत्वं कथं च न स्यादित्याह—**अतिप्रसङ्गात्**। एनमेवाह—**नभसोऽपि**—आकाशस्यापि **मूर्त्ततापत्तेः**[1]। आपत्तिश्च **भिन्नतद्धर्मयोगाद्** भिन्नेन—स्वरूपतस्तद्धर्मेण मूर्त्तत्वाख्येन योगात्। योगश्च **सर्वगतत्वात्** नभस **इति**। 'असर्वगतद्रव्यपरिमाणं मूर्त्तिः' इति यद्यप्येतन्न तद्गुण इष्यते तथापि गुण-गुणिनोर्भेदाविशेषादुक्तापत्तिरनिवार्येति भावनीयम् ॥

( विवरणम् )

दिषु गुणेषु वर्तते, निर्गुणत्वाद् गुणानाम् ? ततोऽमूर्त्ततयाऽपतनधर्माणां सतां रूपादीनां किमाधारकल्पनया ? यदुक्तम्—

"स्यादाधारो जलादीनां गमनप्रतिबन्धकः ।
अगतीनां किमाधारैर्गुणसामान्यकर्मणाम् ? ॥" इति ॥

(१२-१३) **कथं वा मूर्तं तत् स्वतः—आत्मना अरूपादि सदिति ?**। अस्यायमभिप्रायः—यदाधारभूतं द्रव्यं परिकल्प्यते परैः कथं तन्मूर्तं भवति, आत्मभूतरूपादिगुणाभावात्। लोके हि रूपादिगुणग्रामस्वभावा एव घटादयो मूर्त्ता दृश्यन्ते, न तु तद्व्यतिरिक्ता आकाशादयः। अथेत्थमाचक्षीथाः—मूर्त्तत्वयोगान्मूर्त्तमिष्यते अस्माभिर्द्रव्यं गोत्वयोगादिव गौरिति। एतदपि न, मूर्त्तामूर्त्तयोः परस्परं सम्बन्धाभावात्। तथाहि—रूपाद्याधारद्रव्यं स्वरूपेणामूर्त्तं मूर्त्तत्वं तु मूर्त्तम्, अतः कथमनयोर्द्वयोरपि सम्बन्धः ?॥

अत्र चान्यदपि दूषणं समस्ति। यथा—(१८-१९) **असर्वगतद्रव्यपरिमाणं मूर्ति-**

१ 'मूर्तत्वापत्तेः' इति क-पाठः।

(मूलम्)

**किञ्चास्यानेकगुणसम्बन्धस्वभावत्वे सति तदुपपत्तिः, अन्यथा अयोगात्। न चायमेक एव, उपाधिभेदाद् रूपादीनामनेकत्वात्, रूपसम्बन्धस्वभावस्यैव रसादिसम्बन्धस्वभावत्वे तदतत्त्वप्रसङ्गात्, अन्यथा रूपसम्बन्धस्वभावत्वविरोधात् एकान्तैकत्वेन अस्याचित्र-**

(स्वो० व्या०)

दूषणान्तरमाह **किञ्चे**त्यादिना। **अस्ये**ति अक्रमादणो**रनेकगुणसम्बन्धस्वभावत्वे सति** रूपाद्यपेक्षया **तदुपपत्तिः,** अक्रमाद् रूपाद्यात्मकत्वोपपत्तेः। कुत इत्याह—**अन्यथा**—अतत्स्वभावत्वे सति **अयोगात्। न चायम्**—अनेकगुणसम्बन्धस्वभावः अक्रमात् तस्याणोरेक **एव**। कुत इत्याह—**उपाधिभेदात्**। एनमेवाह—**रूपादीना**मुपाधीना**मनेकत्वात्। रूपसम्बन्धस्वभावस्यै**वाणुगतस्य **रसादिसम्बन्धस्वभावत्वे** सति किमित्याह—**तदतत्त्वप्रसङ्गात्,** तस्य—रसादेरसादित्वप्रसङ्गादित्यर्थः। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथे**त्यादि। **अन्यथा**—एवमनभ्युपगम्यमाने **रूपसम्बन्धस्वभावत्वविरोधा**दणोः रसादिसम्बन्धे सति [1]तत्स्वभावापत्तेरिति हृदयम्। किमित्येतदेवमित्याह—**एकान्ते**त्यादि। **एकान्तैकत्वेन**

(विवरणम्)

**रिति यद्यप्येतन्न तद्गुण इष्यते तथापि गुण-गुणिनोर्भेदाविशेषादुक्तापत्तिरनिवार्येति भावनीयमिति**। [2]असर्वगतद्रव्यपरिमाणं मूर्तिरिति कृत्वा यद्यप्येतत्—मूर्तत्वं न तद्गुणः—नैवाकाशगुण इष्यते, तथापि गुण-गुणिनोः—मूर्तत्व-द्रव्याख्ययोर्भेद[3]स्याविशेषात् कारणादुक्तस्य—आकाशस्यापि मूर्तताप[4]त्तिरिति। एवं लक्षणस्यार्थस्यापत्तिरनिवार्या। स्यादयमत्र परमार्थः—यद्यप्याकाशस्य सम्बन्धी गु[5]णो नेष्यते मूर्तत्वं 'असर्वगतद्रव्यपरिमाणं मूर्त्तिः' इति वचनात्, तथापि यथाविवक्षितद्रव्यादेकान्तेन भिन्नमपि मूर्त्तत्वं तद्गुण इष्यते, एवं किमिति नाकाशस्यापि, भेदाविशेषादिति ?॥

(१५-१६) **रसादिसम्बन्धे सति तत्स्वभावापत्तेरिति**। रसादिना सम्बन्धो रसादिसम्बन्धस्तस्मिन् सति तत्स्वभावतापत्तेः—रूपादिसम्बन्धस्वभावतापत्तेः। रूपसम्बन्धस्वभावत्वस्य यदि हि रूपसम्बन्धस्वभावस्यैवाणुगतस्य रसादिसम्बन्धस्वभावत्व-[[6]मिति तर्हि रूपसम्बन्धस्वभावत्व]मभ्युपगम्यते तदा रसादे. रूपान्त.प्रविष्टत्वादभाव एव स्यात्। अथ व्यत्ययोऽभ्युपगम्यते यदुत रसादिसम्बन्धस्वभावत्वमेव रूपसम्बन्धस्वभावत्वमिति, तर्हि रूपसम्बन्धस्वभावत्वस्य [7]विरोधः, रूपरसाद्यन्तर्गतत्वेनाभावात्।

---

१ 'तत्स्वभावत्वापत्ते' इति ङ-पाठ। २ 'भावनीय असर्व०' इति च-पाठ। ३ 'भेदविशेषात्' इति क-पाठ। ४ 'पत्तेरिति' इति च-पाठ.। ५ 'गुणोऽपेष्यते' इति क-पाठः। ६ क-प्रतौ नास्त्यय पाठः। ७ 'विशेष' इति ख-पाठ।

( मूलम् )

त्वात्, चित्रत्वे [1]चैकत्वायोगादिति, स्वभाववैचित्र्याद् रूपादिवैचित्र्यमेवास्तु । यथाऽऽहुर्न्यायवृद्धाः–

“कारणमेव तदन्त्यं नित्यः सूक्ष्मस्तु भवति परमाणुः ।
एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥”

एवं च रूपादीनामेवैकत्वपरिणामोऽयमिति सावयवत्वादिसिद्धिः ॥

अन्ये तु प्रत्येकं रूपादिरूपा एव परमाणव इति मन्यन्ते तदप्ययुक्तम्, असम्भवात्, तेषां हि मूर्त्तत्वेन स्पर्शादिभावः, अन्यथा

( स्वो० व्या० )

हेतुनाऽस्य–अधिकृतस्याणुस्वभावस्य **अचित्रस्वभावत्वात् चित्रत्वे च** अस्य **एकत्वायोगात्** सर्वथा इति–एवं **स्वभाववैचित्र्यादणोः रूपादिवैचित्र्यमेवास्तु** । न च स्वभाववैचित्र्यमन्तरेण तद्योगसिद्धिरिति भावनीयम् । अतो रूपादिवैचित्र्यमेवास्तु **यथाऽऽहुर्न्यायवृद्धाः–कारणमित्यादि** । कारणमेव **तदन्त्यं**–पर्यन्तवर्त्ति[2] द्व्यणुकादीनां **नित्यः**–सदा स्वसत्ताऽपरित्यागेन **सूक्ष्मः** च **भवति परमाणुर्**द्रव्यतः अशक्यभेदः **एकरस**स्तिक्ताद्यपेक्षया, एक**गन्धः** सुरभ्याद्यपेक्षया, एक**वर्णः** कृष्णाद्यपेक्षया, **द्विस्पर्शः** शीतमृदुत्वाद्यविरुद्धभावेन **कार्यलिङ्गश्च**–घटादिकार्येण लिङ्ग्यते । उपसंहरन्नाह–**एवं चेत्यादि** । एवं च–उक्तनीतेः **रूपादीनामेवैकत्वपरिणामः अयम्**–अणुरिति **सावयवत्वादिसिद्धिः** अस्य ॥

**अन्ये त्वित्यादि** । अन्ये तु–**सौगतविशेषाः** [3]**प्रत्येकं रूपादिरूपा एव परमाणव इति**–एवं **मन्यन्ते** । **एतदप्ययुक्तम्** । कुत इत्याह–**असम्भवात्** प्रत्येकं रूपादिरूपपरमाणूनाम् । असम्भवमाह–**तेषां** यस्मा**न्मूर्त्तत्वेन** हेतुना

( विवरणम् )

(२०-२१) **प्रत्येकं रूपादिरूपा एव परमाणव** इति । **सौत्रान्तिका** हि अन्ये रूपाणवोऽन्ये [4]रसाणवोऽन्ये गन्धाणवो व्यतिरिक्ताश्च स्पर्शपरमाणव इति प्रतिपन्नाः, न त्वेकैक एवाणू रूपरसगन्धस्पर्श[5]भाव इति ॥

(२२) **मूर्त्तत्वेन हेतुने**ति । यद् यन्मूर्त्तं तस्य तस्य स्पर्शादिभिर्भाव्यम्, यथा घटस्य । मूर्त्ताश्च परमाणवो इति तेषामपि स्पर्शादिभिः समुदितैर्भाव्यम् । न च वाच्यं घटेऽपि व्यतिरिक्ता एव स्पर्शादिपरमाणव इति, प्रतीतिबाधितत्वात् । तथाहि–य(? त) एव स्पृश्यन्ते दृश्यन्ते रस्यन्ते घ्रायन्ते चेति प्रतीतिरविसंवादिनी समुपलभ्यत इति ॥

१ 'वैकत्वा०' इति ग–पाठः । २ 'वर्तित्वात् द्व्यणु०' इति क–पाठः । ३ 'प्रत्येकं रूपा एव परमाणव इव इत्येवं' इति ङ–पाठः । ४ 'रसाणवो भिन्ना गन्धा०' इति च–पाठः । ५ 'स्पर्शस्वभाव' इति च–पाठः ।

( मूलम् )

**मूर्त्तत्वाभावात्, अमूर्त्तत्वे चैषां सदैवाग्रहणम्, भूयसामप्यमूर्त्तत्वानतिक्रमात्, तथाभूतेभ्योऽतथाभूतोत्पत्तौ युक्त्यभावः, हेत्वन्तराभावात्। न चैकस्तदन्ययोगाद् रूपादिमान्, सङ्घातात्मकत्वेन तदणुत्वविरोधात्। देशकात्स्न्र्यविकल्पद्वारेण तत्तद्योगानुपपत्तेः देशयोगपक्षे सदेशत्वादन[1]णुत्वम्, व्याप्तितो रूपादिमत्त्वा-**

( स्वो० व्या० )

मूर्त्ताः परमाणव इति कृत्वा। किमित्याह—**स्पर्शादिभावः, अन्यथा**—एवमनभ्युपगमे **मूर्त्तत्वाभावात्, अमूर्त्तत्वे चैषां**—परमाणूनां **सदैवाग्रहणं** सञ्चयावस्थायामपि। कुत इत्याह—**भूयसामप्यमीषाम् अमूर्त्तत्वानतिक्रमादिति। तथाभूतेभ्यः**—[2]अदृश्यस्वभावेभ्यो**ऽतथाभूतोत्पत्तौ**—दृश्योत्पत्तौ इष्यमाणायां **युक्त्यभावः**। कथमित्याह—**हेत्वन्तराभावात्** कारणात्। न च हेतुभेदमन्तरेण कार्यभेदो न्याय्य इति भावनीयम्। **न चैकः**—अणुः **तदन्ययोगात्**—रूपाण्वादियोगाद् **रूपादिमान्**। कुत इत्याह—**सङ्घातात्मकत्वेन** हेतुना **तदणुत्वविरोधात्**। दोषान्तरमाह—**देशकात्स्न्र्यविकल्पद्वारेण** च। किमित्याह—**तत्तद्योगानुपपत्तेः** तस्य—अणोस्तैः—रूपाण्वादिभिर्योगानुपपत्तेः। एतद्भावनायैव आह—**देशयोगपक्षे** रूपाण्वादीनां मूलाणुना। किमित्याह—**सदेशत्वात्** कारणात्

( विवरणम् )

(१०-११) **सञ्चयावस्थायामपीति**। यदि परैर्ह्येकैकोऽणुः स्पर्शादिचतुष्टयस्वभावो नाश्रीयते, तदानीममूर्त्ता एव ते परमार्थतोऽभ्युपगता इति प्राप्तम्। तादृशानां न कदाचिद् ग्रहणम्। नहि केवलः स्पर्शाणुः केनापि क्वापि च कदाचिदपि दृश्यते। एवं रूपाद्यणुष्वपि योज्यम्। ततो यथा प्रत्येकावस्थाया न ग्रहणमणूनामेवं सञ्चयावस्थायामपि न स्यात्, भूयसामप्येकैकस्वभावत्वेनामूर्त्तत्वानतिक्रमादिति ॥

(१५) **रूपादिमानिति**। अयमभिप्रायो भविष्यति कदाचित् परस्य यदुतैक एव परमाणुः रूपाण्वादियोगाद् भवति रूपादिमान्। तथाहि—स्पर्शाणुः रूपाणुयोगाद् रूपवान्, [3]रसाणुसम्बन्धनाद् रसयुक्तः, गन्धपरमाणुसम्पर्काच्च गन्धवान्। एवं च स एव स्पृश्यते दृश्यते रस्यते घ्रायते चेति। एतच्चासम्बद्धमेव, अणुत्वविरोधात्। एवं ह्येकोऽपि स्पर्शाद्यणू रूपाण्वादिसङ्घातस्वभावः प्राप्त इति कृत्वा ॥

---

१ 'नणुरूपत्वम्' इति ग-पाठ। २ 'अवश्यस्व०' इति क-पाठ। ३ 'रसाणुबन्धात्' इति च-पाठ।

(मूलम्)

भावश्च, कात्स्र्न्ययोगपक्षे त्वितरेतररूपापत्तेः, अन्यथा कात्स्र्न्ययोगाभावाद् रूपादिमत्त्वानुपपत्तिः । एतेनामूर्त्तरूपादियोगः प्रत्युक्तः। अमूर्त्तत्वेऽपि तद्वस्तुत्वेनोक्तवद् विकल्पदोषानतिक्रमात्, अन्यथा तद्वस्तुत्वाभावः, अतः स्वगतरूपादिपरिणामापेक्षया रूपाद्यात्मकास्ते इति स्थितम् । एवं च 'न च निरवयवत्वादमीषामयमदोषः, मूर्त्तत्वेन निरवयवत्वायोगात्' इत्यादि यदुक्तं² तदप्यबाधकमेव, तत्त्वतस्तथेष्टेः ॥

(स्वो० व्या०)

अनणुत्वं मूलाणोः, तथा व्याप्तितो रूपादिमत्त्वाभावश्च मूलाणोः । कात्स्र्न्ययोगपक्षे तु रूपादिमूलाणूनामितेरतररूपापत्तेः कारणात् । इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा कात्स्र्न्ययोगाभावात् न्यायतः । किमित्याह–रूपादिमत्त्वानुपपत्तिः कात्स्र्न्येन । एतेनेत्यादि । एतेन–रूपाण्वादियोगनिराकरणेन किमित्याह–अमूर्त्तरूपादियोगः प्रत्युक्तः । कथमित्याह–अमूर्त्तत्वेऽपि सति तद्वस्तुत्वेन तेषां–रूपादीनां वस्तुत्वेन हेतुना । किमित्याह–उक्तवद् विकल्पदोषानतिक्रमात् । तथाहि–देशयोगपक्षे सदेशत्वादनणुत्वमित्यादि समानमत्र । इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा तद्वस्तुत्वाभावः तेषाम्–अमूर्तत्वरूपादीनां वस्तुत्वाभावः । न चैतदेवमिति, अतः स्वगतरूपादिपरिणामापेक्षया रूपाद्यात्मकास्ते–परमाणव इति स्थितम् । एवं च 'न च निरवयवत्वादमीषामयमदोषः, मूर्त्तत्वेन निरवयवत्वायोगात्' इत्यादि यदुक्तं पूर्वपक्षग्रन्थे³ तदप्यबाधकमेव । कथमित्याह–तत्त्वतः–परमार्थेन तथैवेष्टेः कारणात् ॥

(विवरणम्)

(११) व्याप्तितो रूपादिमत्त्वाभावश्चेति । यदि ह्येकेन देशेन मूलाणुरूपाणुना सह सम्बन्धमनुभवति तदा तस्मिन्नेव देशे असौ रूपवान्, न तु परिपूर्ण इति व्याप्त्या रूपवत्त्वाभावः । एवं रसाद्यणुभिरपि सह द्रष्टव्यमिति ॥

(१५) अमूर्त्तरूपादियोग इति । वैशेषिका हि अमूर्तैः रूपादिभिर्गुणैर्योगः परमाणोरिति प्रतिजानते ॥

१ 'गतपरिणामा०' इति ग–पाठः । २–३ तृतीये पृष्ठे ।

(मूलम्)

यच्चोक्तम्[1]–'एतेन तत्समूहः प्रत्युक्तस्तेषामेव नैरन्तर्या[2]वस्थानस्य तत्समूहत्वात् निरवयवानां च तत्त्वतो नैरन्तर्यावस्थानायोगात् सर्वत एकस्य तदपरभावापत्तेः, एवं च निरवयवत्वविरोधात्' इत्यादि एतदपि यथोदितपरमाणुसमाश्रयणे निरवकाशमेव। तथाहि–तन्नैरन्तर्यावस्थानमेव तेषां तथास्वभावतया कथञ्चिदपृ[3]थग्भूततथाविधैकपरिणामवत् तत्समूहः। तदेव च द्रव्यम्, तेषामेव तत्त्वात् तत्समानधर्मत्वात् तथा तथा तद्द्रवणात् तद्भावाव्ययत्वात्। स्यादेतत् तेषां तथास्वभावतयेति। कोऽर्थः?। उच्यते–परमाणूनामेवायं स्वभावो येन [4]ते तत्तत्कालाद्यपेक्षया तत्र तत्र तैस्तैर्मिथो नैरन्तर्येण विशिष्टसंस्थानवता अवतिष्ठन्ते बादरीभवन्ति च। आह–किमिदं बादर-

---

(स्वो० व्या०)

**यच्चोक्तं** पूर्वपक्षग्रन्थ[5] एव–**एतेन तत्समूहः प्रत्युक्तस्तेषामेव**–अणूनां **नैरन्तर्यावस्थानस्य**। किमित्याह–**तत्समूहत्वान्निरवयवानां च तत्त्वतो नैरन्तर्यावस्थानायोगात्**। अयोगश्च **सर्वत एकस्य**–अणोः **तदपरभावापत्तेः। एवं च निरवयत्वविरोधादित्यादि**। एतदप्ययुक्तं **यथोदितपरमाणुसमाश्रयणे** सति। किमित्याह–**निरवकाशमेव**। [6]तद्भावनायैवाह–**तथाहीत्यादि**। तथाहीत्युपप्रदर्शने। **तन्नैरन्तर्यावस्थानमेव** तस्य–अधिकृताणोर्नैरन्तर्येण–सर्वतोऽवस्थान नैरन्तर्यावस्थानमेतदेव। **तेषाम्**–अणूनां **तथास्वभावतया** कारणेन **कथञ्चित्**–केनचित् प्रकारेण **अपृथग्भूतश्चासौ** [भूत.] **तथाविधैक**[त्व]**परिणामश्चे**ति समासः। भूतः–अपरिकल्पितः सोऽस्यास्तीति तद्वत् नैरन्तर्यमेव **तत्समूहः**–अणुसमूहः। **तदेव च**–तन्नैरन्तर्यमेव **द्रव्यम्**। कुत इत्याह–**तेषामेव**–अणूनां **तत्त्वात्**–तद्भावत्वात्, तत्त्व च **तत्समानधर्मत्वात्**–परमाणुसमानधर्मत्वाद् द्रव्यस्य **तथा तथा**–तेन तेन चित्रसस्थानरूपेण **तद्द्रवणात्** तेषामेव–परमाणूनां द्रवणात्–गमनात्, द्रवण च **तद्भावाव्ययत्वात्**–विशिष्टपरमाणुभावाव्ययत्वेन। तदेव च द्रव्यमिति वर्तते। **स्यादेतदित्यादि**। स्यादेतत् **तेषाम्**–अणूनां **तथास्वभावतयेति। कोऽर्थः?**। एतदाशङ्क्याह–**उच्यते–परमाणूनामेवायं स्वभावो येन ते**–परमाणवस्तत्तत्कालाद्य**पेक्षया तत्र तत्र**–क्षेत्रे **तैस्तैः**–परमाणुभि**र्मिथः**–परस्परं [7]**नैरन्तर्येण**। किंविशिष्टेनेत्याह–**विशिष्टसंस्थानवता**–

---

१ तृतीये पृष्ठे चतुर्थे च। २ 'वस्था तस्य' इति क–पाठ। ३ 'पृथग्भूत तथा०' इति ग–पाठोऽशुद्ध। ४ 'ते तत्काला०' इति ग–पाठ। ५ तृतीये पृष्ठे चतुर्थे च। ६ 'तत्परिभावना' इति ङ–पाठ। ७ 'नैरन्तर्येणापि कि०' इति ङ–पाठ।

(मूलम्)

त्वम्?। उच्यते–तथासमुदितानामिन्द्रियग्राह्यस्वभावता, स्थूरत्वमित्यर्थः। कथं सूक्ष्माणां सत्ताऽनुपचये तत्? तत्तत्स्वभावतया। इयमेव तदनुपचये अन्याय्या, न, तत्स्वभाववैचित्र्यसिद्धेः। अनिदर्शनमभिधानमात्रमेतदिति चेत्, न, निदर्शनभावात्। किं तदेवंविधं लौकिकमिति वाच्यम्। ननु वज्रभाण्डादिभावः। तत्र हि तुल्ये तौल्ये प्रकटोऽल्पमहत्त्वादिभेदः। न च तदणवो न तुल्याः, तौल्याभेदात्। न च हीनाधिका तत्सत्ता, अत एव हेतोः। न चाभिन्नपरिणामाऽसौ, दर्शनादिभेदात्, न चातत्स्वभावत्वेऽयम्, अतिप्रसङ्गात्। इति बादरभावसिद्धिः॥

(स्वो० व्या०)

घटादिसंस्थानवता अवतिष्ठन्ते। न केवलमेतद् बादरीभवन्ति च ते परमाणवः। आह–किमिदं बादरत्वं नाम?। उच्यते–तथा–सौक्ष्म्यपरित्यागादिना प्रकारेण समुदितानां सतामिन्द्रियग्राह्यस्वभावता। किमुक्तं भवति? स्थूरत्वमित्यर्थः। आह–कथं सूक्ष्माणां सतां सत्ताऽनुपचये सति तत्–स्थूरत्वम्?। एतदाशङ्क्याह–तत्तत्स्वभावतया तेषामेव–अणूनां तत्स्वभावतया कारणेन। आह–इयमेव–तत्तत्स्वभावता तदनुपचये तेषाम्–अणूनामनुपचये सति अन्याय्या। एतदाशङ्क्याह–न–नैतदेवम्। कुत इत्याह–तत्स्वभाववैचित्र्यसिद्धेः–अणुस्वभाववैचित्र्योपलब्धेः। आह–अनिदर्शनम्–अनुदाहरणमभिधानमात्रं–वचनमात्रमेतद् यदुत तत्स्वभाववैचित्र्यसिद्धेरिति। एतदाशङ्क्याह–न, निदर्शनभावात्। किं तत्–निदर्शनं एवंविधम्–अभिप्रेतार्थसाधकं लौकिकं लोके भवमिति एतद् वाच्यमिति परः। ननु वज्रभाण्डादिभाव एवंविधं लौकिकं निदर्शनमित्याचार्यः। तदेव भावयन्नाह–तत्र हीत्यादि। तत्र–वज्रभाण्डादौ यस्मात् तुल्ये तौल्ये कर्षाद्यपेक्षया प्रकटः–सर्वलोकसिद्धः। कोऽसावित्याह–अल्पमहत्त्वादिभेदः। 'आदि'शब्दात् सारत्वादिग्रहः। न च तदणवः–वज्रभाण्डाणवो न तुल्या एव। कुत इत्याह–तौल्याभेदात् कारणात्। न च हीनाधिका तत्सत्ता–वज्रभाण्डाणुसत्ता। कुत इत्याह–अत एव हेतोः–तौल्याभेदादेव। न चाभिन्नपरिणामाऽसौ, तत्सत्तेति प्रक्रमः। कुत इत्याह–दर्शनादिभेदात्। अनुभवसिद्धोऽयमशक्यापलापः। न चातत्स्वभावत्वे सति अणूनामयं–भिन्नः

१ 'तदेवंविधौ लौकिक०' इति क–पाठः। २ 'भेण्डादि०' इति क–पाठः। ३ 'भेण्डादौ' इति क–पाठः। ४ 'भेण्डाणवः' इति क–पाठः।

( मूलम् )

एवं च 'इन्द्रियाग्राह्यसमूहत्वेन तदग्रहणतो व्यवहारायोगात्'[1] इति प्रत्युक्तम्, उक्तवत् तेषां तथास्वभावतया सर्वथेन्द्रियाग्राह्यत्वासिद्धेः, तेषामेव तथाभवनादिति। आह-एवमन्यूनानतिरिक्ततत्सत्ताभावे न "उत्पादव्ययध्रौव्ययुक्तं सत्" इति न्याय्यं वचः, तत्र तत्त्वत उत्पादव्ययाभावात्, सत्तालेशस्यापि व्ययायोगात्, असतश्चोत्पादानुपपत्तेः; अन्यथा यो व्येति[2] तस्य निरन्वयो व्ययः, यश्चोत्पद्यते तस्याप्यसत एवोत्पादः, या च तत्रापरा सत्ता तस्याः कूटस्थनित्यतैवेति कथमुत्पादव्ययध्रौव्ययुक्तं सदिति ? । अत्रोच्यते-अन्याय्यमिदं वचः, तत्सम्पूर्णसत्ताया एव परिणामित्वात्

(स्वो० व्या०)

परिणामः । कुत इत्याह-अतिप्रसङ्गात्, चेतनादिपरिणामापत्तेरित्यर्थः । इति-एवं बादरभावसिद्धिरणूनाम् ॥

एवं चेत्यादि। एवं च कृत्वा इन्द्रियाग्राह्यसमूहत्वेन हेतुना तदग्रहणतः, प्रक्रमादण्वग्रहणेन, व्यवहारायोगादिति-एवं तत् पूर्वपक्षोक्तं प्रत्युक्तमिति । कथमित्याह-उक्तवत् तेषां-परमाणूनां तथास्वभावतया कारणेन । किमित्याह-सर्वथा-एकान्तेन इन्द्रियाग्राह्यत्वासिद्धेः कारणात् । असिद्धिश्च तेषामेव-अणूनां तथाभवनात्-इन्द्रियग्राह्यतया भवनादिति। आह परः-एवम्-उक्तनीत्या अन्यूनानतिरिक्ततत्सत्ताभावे-अधिकृताणुसत्ताभावे सति। किमित्याह-न "उत्पादव्ययध्रौव्ययुक्तं सत्" इति एतन्न्याय्यं वच इति। कथमन्याय्यमित्याह-तत्र-अन्यूनातिरिक्ततत्सत्ताभावे तत्त्वतः-परमार्थेन । किमित्याह-उत्पादव्ययाभावात् । अभावश्च सत्तालेशस्यापि कस्यचिद् व्ययायोगाद् भावाभावाभवनेन । तथा असतश्च-सत्तालेशस्य कस्यचिदुत्पादानुपपत्तेः अभावभाव(?)भावेन । इत्थं चैतदङ्गीकर्त्तव्यमित्याह-अन्यथेत्यादि । अन्यथा-एवमनभ्युपगमे यो व्येति-विनश्यति भावः तस्य निरन्वयो व्ययः-विनाशः, यश्चोत्पद्यते तस्याप्यसत एवोत्पादः, या च तत्रापरा सत्ता-या नोत्पद्यते न विनश्यति तस्या अमुना प्रकारेण कूटस्थनित्यतैव-एकान्तेन इति-एवं कथं "उत्पादव्ययध्रौव्ययुक्तं सत्" इति ? । एतदाशङ्क्याह-अत्रोच्यते-अन्याय्यमिदं वचो यदुक्तं भवता । कुत इत्याह-तत्सम्पूर्णसत्ताया

१ द्रष्टव्यं चतुर्थं पृष्ठम् । २ 'विनश्यति' इत्यधिकः क-पाठ । ३ 'कूटस्थितिनित्यतैतवेति' इति ग-पाठः । ४ 'दिव्यतत्पूर्वे०' इति क-पाठः । ५ 'अभावसावाभावेन' इति क-पाठः ।

( मूलम् )

**परिणामित्वे च तत्तत्कालाद्यवस्थानलक्षणस्य तत्सत्त्वस्वभावस्य कथञ्चित् क्ष(? व्य)ययोगात्, अन्यथा तत्तादवस्थ्यापत्त्या सदा तद्भावेन वर्तमानतादिप्रसङ्गः। युक्तिबाधितश्चायं तत्कार्यासिद्धेरिति व्यययोगः समयान्तराद्यवस्थानलक्षणस्य च तत्सत्त्वस्वभावस्य कथञ्चिदसत एवोत्पादः। सर्वथा सत्त्वे प्रागपि तद्भावात् तदा तद्भावविरोधः। अस्ति चयाम्, समयान्तराद्यवस्थानयोगादिति भावाधारौ चैतौ, वान्ध्येयादावसम्भवादनयोः। तत्स्वभाववैकल्ये**

( स्वो० व्या० )

**एव** तेषां—परमाणूनां सम्पूर्णसत्ताया एव। किमित्याह—**परिणामित्वात्** [२]सैव तेन तेनाकारेण। **परिणामित्वे च** सति किमित्याह—**तत्तत्कालाद्यवस्थानलक्षणस्य** [३]**तत्सत्त्वस्वभावस्य**—प्रस्तुताणुसत्त्वस्वभावस्य **कथञ्चित्**—केनचित् प्रकारेण **व्यययोगात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे **तत्तादवस्थ्यापत्त्या** तस्य—तत्सत्त्वस्वभावस्य तादवस्थ्यं तत्तादवस्थ्यं तस्यापत्तिस्तया हेतुभूतया। किमित्याह—**सदा तद्भावेन**—तत्सत्त्वस्वभावभावेन। किमित्याह—**वर्त**[४]**मानतादिप्रसङ्गः**। आकालं तदेककालादिसम्बन्धिस्वभा[५]वाप्रच्युत्येति भावनीयम्। **युक्तिबाधितश्चायं**—वर्तमानतादिप्रसङ्गः, **तत्कार्यासिद्धेः**—वर्तमानतादिकार्यासिद्धेः। **इति**—एवं **व्यय**[६]**योग**स्तत्सत्त्वस्वभावस्य **समयान्तराद्यवस्थानलक्षणस्य च** 'आदि'शब्दात् क्षेत्रान्तरादिग्रहः, **तत्सत्त्वस्वभावस्य**—अधिकृताणुसत्त्वस्वभावस्य। किमित्याह—**कथञ्चित्**—केनचित् प्रकारेण **असत एवोत्पादः**। **सर्वथा**—एकान्तेन **सत्त्वे**। किमित्याह—**प्रागपि तद्भावात्**—समयान्तरावस्थानलक्षणतत्स्वभावभावात्। किमित्याह—**तदा**—समयान्तरादौ **तद्भावविरोधः**—समयान्तराद्यवस्थानादिलक्षणतत्स्वभावविरोधः। **अस्ति चायं**—भावः। कुत इत्याह—**समयान्तराद्यवस्थानयोगादिति**। **भावाधारौ चैतौ**—व्ययोत्पादौ। कुत इत्याह—**वान्ध्येयादावसम्भवादनयोः**—व्ययोत्पादयोः। **तत्स्वभाववैकल्ये च**—यथोदितव्ययोत्पादस्वभाववैकल्ये च सति। कस्येत्याह—**तत्सत्त्वस्य**—अधिकृताणुसत्त्वस्य तत्सत्त्वस्वभावसत्त्वस्य

( विवरणम् )

(२७) **तत्सत्त्वस्वभावसत्त्वस्येति**। तयोः—उत्पाद-व्यययोः सत्त्वं—स्वरूपं तत्सत्त्वम्, तत्सत्त्वं स्वभावो यस्य तत् तत्सत्त्वस्वभावम्, तच्च तत् सत्त्वं च—ध्रौव्यलक्षणोऽंशः

१-'तत्तत्कालाद्यवस्थानव्ययोत्पादयोः योगादिति, भावाधारौ चैतौ' इति क-पाठे सति पाठप्रपातः। २ 'सेवते नातना(?)कारणेन' इति ङ-पाठः। ३ 'तत्तत्सत्त्व०' इति ङ-पाठः। ४ 'मानादिप्रसङ्गः' इति क-पाठः। ५ 'भावप्रच्युत्वेति' इति ङ-पाठः। ६ 'योगस्तत्सत्त्वभावस्य' इति ङ-पाठः।

( मूलम् )

**च तत्सत्त्वस्यासम्भव एवेति भावनीयम्। आह–एवमपि किञ्चित् तत्रासदेवोत्पद्यत इतीष्टं तद्वत्। तत् प्रतीत्य तदपरभावे को दोषः?। उच्यते–दृष्टहान्यदृष्टपरिकल्पनाख्यः । तथाहि–भावाश्रितमसद् भवद् दृष्टं मृद्घटादिसंस्थानादिवत्, तत्समयान्त[1]राद्यवस्थानादितत्त्यागे दृष्टहानिः। न दृष्टं चातदाश्रयं वान्ध्येयबालाद्याकारवत् मृदभावघटाकारवद् वा। तदङ्गीकरणेऽदृष्टपरिकल्पना। न च तत्तथाभावाभावे असत् सद् भवतीति न्यायवादिनः। तत् प्रतीत्य तद्भाव**

( स्वो० व्या० )

वा **असम्भव एवोक्तनीत्या इति भावनीयम्। आह** परः–**एवमपि**–यथा भवतोक्तं तथापि **किञ्चित्**–समयान्तराद्यवस्थानादि **तत्र**–अधिकृताणुसत्त्वे **असदेवोत्पद्यत इति**–एव**मिष्टं तद्वदि**ति निदर्शनम्। **तत् प्रतीत्य**–अधिकृताणुसत्त्वं **तदपरभावे**–तदन्योत्पादे यन्नोत्पद्यत इतीष्यते तत्र **को दोषः?** पर्यायवद् द्रव्यमपि स्वहेतु प्रतीत्योत्पद्यतामिति। एतदाशङ्क्याह–**दृष्टहान्यदृष्टपरिकल्पनाख्यः**, दोष इति वर्तते। अक्षरगमनिका सुज्ञेया। भावार्थं त्वाह **तथाही**त्यादिना। तथाहीत्युपप्रदर्शने। **भावाश्रि[2]तं** सत् **असत्**–अविद्यमान **भवद् दृष्टम्।** निदर्शनमाह–**मृद्घटादिसंस्थानादिवत्** मृदि घटादिसंस्थानादि तद्वत्। किं दृष्टमित्याह–**(तत्)समयान्तराद्यवस्थानादितत्त्यागे**–[3]भावाश्रितासत्सद्भवनत्यागे। किमित्याह–**दृष्टहानिः**। तथा **न दृष्टं चे**त्यादि। न दृष्टं च **अतदाश्रयं** न तदाश्रयमतदाश्रयम्, अभावाश्रयमित्यर्थः। निदर्शनमाह–**वान्ध्येयबालाद्याकारवदि**ति निदर्शनं सुज्ञानं सुखप्रतिपत्त्यर्थम्। एवमयमसद्वाद इति च ख्यापनार्थं निदर्शनान्तरमाह–**मृदभावघटाकारवद् वा** मृदभावे घटाकार इति समासस्तद्वत्। 'वा'शब्दो विकल्पान्तरप्रदर्शनार्थः। **तदङ्गीकरणे** च–अभावा[4]श्रयासत्सद्भवनाङ्गीकरणे च। किमित्याह–**अदृष्टपरिकल्पनं** यन्न दृष्ट प्रत्यक्षानुमानाभ्यामसद्भवनं तत् परिकल्पनम्। इत्यारेकाशेषनिरासायाह–**न च तत्तथाभावाभावे** तस्यैव–हेतोः प्रक्रमाद् विशिष्टस्य भावस्य, तथा–कार्यरूपेण विवक्षितपर्यायात्मना भावाभावे सति

( विवरणम् )

तत्सत्त्वस्वभावसत्त्वं तस्य। उत्पादव्ययसम्बन्धिसत्त्वस्वभावं हि ध्रौव्यम्। (ततो) यदि यथोदिततद्व्ययोत्पादस्वभाववैकल्यमभ्युपगम्यते ध्रौव्यस्य, तदा न सम्भवत एवोत्पाद-व्ययौ, निराधारत्वात्। तस्मादुत्पादव्ययस्वभावं ध्रौव्यमङ्गीकर्तुमुचितमिति ॥

१ 'रादिवस्वतत्त्यागे दृष्ट०' इति क–पाठ । २ 'भावासत' इति ङ–पाठ । ३ 'भावासता' इति ङ–पाठ । ४ 'श्रयेऽसत्सद्भवना०' इति ङ–पाठ ।

(मूलम्)

इत्यपि कल्पनाऽयुक्ता, पुष्कलबीजाभावात्। इति तदुपादानमन्तरेणैव स्यात् तद्भावः, यद्यसदेव सद् भवेत्। न चासावतो यदपि किञ्चित् तत्र असदुत्पद्यते तदपि भावाश्रयत्वात्, तत्तथाशक्तियोगात् तस्यैव तथाभवनात्, अन्यथोक्तवदयोगान्नासदेव। किं तर्हि? कथञ्चित्, पूर्वभवनभूतान्यथाभूतभवनात्मकत्वादुत्पादस्य। एतेनै[1]तत्स्वभाव एव तत्त्वतो व्यय इत्यर्थत उक्त एव, यतोऽस्यायमर्थः–

(स्वो० व्या०)

असत् सद् भवतीति न्यायवादिनः–एवं न्यायवादिनः। किमित्याह–तत् प्रतीत्य–कारणं तद्भावः–कार्यभाव इत्यपि कल्पना युक्ता न च। कुत इत्याह–पुष्कलबीजाभावात्। एकान्तेनैवासतः सद्भावेन सर्वथा तदनुपयोगादिति गर्भः। इति–एवं स[2]र्वथाऽसद्भवनेन किमित्याह–तदुपादानमन्तरेणैव, प्रक्रमात् कार्योपादानमन्तरेणैव, स्यात् तद्भावः–कार्यभावः। कथमित्याह–यद्यसदेव सद् भवेत् न तस्यासतः कारणसत्तया कश्चित् प्रतिबन्धः। न चासौ–कार्यभावो भवति, अतो यदपि किञ्चित् तत्र–अधिकृताणुभावे असदुत्पद्यते तदपि भावाश्रयत्वात् कारणात्, नासदेवेति सम्बन्धः। भावाश्रयत्वं च तत्तथाशक्तियोगात् तस्य–भावस्य तथा–प्रतिनियतकार्यकर्तृत्वशक्तियोगात्। तथा शक्तियोगश्च तस्यैव तथाभवनात् तस्यैव–का[3]रणभावस्य तथा–कार्यभावरूपेण भावभवनात्। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–अन्यथा–एवमनभ्युपगमे उक्तवत् अयोगात् कारणात् नासदेव उत्पद्यते। किं तर्हि? कथञ्चिदसदिति। कुत इत्याह–पूर्वभवनभूतान्यथाभूतभवनात्मकत्वात् कारणात्। कस्येत्याह–उत्पादस्य। एतेन–उत्पादलक्षणेन एतत्स्वभाव एव–भावस्वभाव एव यद्वोत्पादधर्म एव तत्त्वतः–परमार्थेन व्यय इ[4]त्यर्थतः–सामर्थ्येन उक्त एव व्ययः। इहैव भावार्थमाह यतोऽस्यायमित्यादिना। यतोऽस्यायमर्थः। उत्पादलक्षणवाक्यस्य पूर्वभवनभूतमन्यथाभूतं भवनम्–आत्मा यस्य स तथाविधस्तद्भावस्तस्मात्

(विवरणम्)

(२६) पूर्वभवनभूतमन्यथाभूतं भवनम्–आत्मा यस्य स तथाविधस्तद्भावस्तस्मादिति। अयं सुखावबोधाय वृत्तिकृता समासः कृतः पूर्वभवनभूतान्यथाभूतभवनात्मकत्वादिति वाक्यस्येति॥

१ 'एतेनैव स्वभाव' इति क–पाठः। २ 'सर्वथा असंत्स(?)द्भावनेन' इति ङ–पाठः। ३ 'कारणाभावस्य' इति ङ–पाठः। ४ 'इत्यर्थः सामर्थ्योनोक्त एव' इति ङ–पाठः।

(मूलम्)

**पूर्वभवनेन भूतत्वमुत्पादतया अन्यथाभूतं तु भवनं व्ययतया तदेतदुभयमात्मा यस्येत्यन्यपदार्थेनोत्पादः सम्बध्यते व्ययाविनाभूतः, व्यपदेशस्त्वस्य पूर्वभवनाभूतान्यथाभूतभवनात्मक इति । तच्चैवम्[1], तत्त्वतस्तथास्वभावत्वात्, यथाक्षयोपशमं तत्रैव[2] व्यय-**

(स्वो० व्या०)

तत्र **पूर्वभवनेन**–कारणसम्बन्धिना **भूतत्वम्**–अतीतत्वं **उत्पादतया** तत्प्रागभावानिवृत्तौ प्राग्वत् तद्भावानुपपत्तेः[3] । **अन्यथाभूतं तु भवनं** कारणगतमेव **व्ययतया** तदभावेऽन्यथाभूतत्वाभावः, **तदेतदुभयम्**–अनन्तरोदितं **आत्मा यस्येत्यन्यपदार्थेन उत्पादः सम्बध्यते** । किंविशिष्ट इत्याह–**व्ययाविनाभूत** इति निदर्शितमेतत् । **व्यपदेशस्त्वस्य**–व्ययस्य **पूर्वभवनाभूतान्यथाभूतभवनात्मक इति** । पूर्वभवनेनाभूतं अन्यथाभूतं भवनं–आत्मा यस्य स तथाविध इति । इहैव भावनामाह **तच्चैवमि**त्यादिना । तच्च–भवनमेवं पूर्वभवनाभूतान्यथाभूतभवनात्मकम् । कुत इत्याह–**तत्त्वतः**–परमार्थेन **तथास्वभावत्वात्**–

(विवरणम्)

(८) **उत्पादतये**ति । उत्पादरूपतया वस्तुन उत्पद्यमानत्वेनेत्यर्थः । घटरूपं हि वस्तु पिण्डादिकारणरूपे[4] अतीत एवोत्पद्यते, उत्पादस्य व्ययाविनाभूतत्वात् । कुत इत्याह–(८-९) **तत्प्रागभावानिवृत्तौ प्राग्वत् तद्भावानुपपत्ते**रिति । तत्प्रागभावस्य–कार्यप्रागभावस्य कारणस्वरूपलक्षणस्यानिवृत्तौ–अविनाशे सति प्राग्वत्–कारणावस्थायामिव तद्भावानुपपत्तेः–कार्योत्पादस्याघटनात् । कार्यस्य हि कारणकालः प्रागभावः "क्षीरे दध्यादि यन्नास्ति प्रागभावः स कथ्यते" इति वचनात् । प्रागभावे चानिवृत्तौ नोत्पद्यत एव कार्यम् । नहि मृत्पिण्डावस्थायां समुत्पद्यमानः समुपलभ्यते घटः, किन्तु तदभाव एवेति ॥

(९) **अन्यथाभूतं तु भवन**मिति । अन्यथास्वरूपम् ॥

(१०) **व्ययतये**ति व्ययरूपतया, वस्तुनो व्ययमानत्वेनेत्यर्थः । व्ययो ह्युत्पादाविनाभावी, यतः ॥

(१०) **तदभावेऽन्यथाभूतत्वाभाव** इति । तस्य–व्ययस्याभावेऽन्यथाभूतत्वस्य–अन्येन रूपेणोत्पादलक्षणस्याभावो वर्तते[5], यतः ॥

(१२) **पूर्वभवनेनाभूत**मिति । पूर्वरूपतया असम्पन्नम् ॥

(१३) **अन्यथाभूत**मिति । अन्यथा रूपतया सञ्जातम् ॥

१ 'तत्रैव तत्त्व०' इति क-पाठ । २ 'तथैव' इति ग-पाठ । ३ 'तदभावा०' इति क-पाठः । ४ 'रूपो अतीत' इति च-पाठ. । ५ 'वर्तते पूर्व०' इति च-पाठ. ।

( मूलम् )

**प्रतीतेः । तत्तुच्छाभवनस्य तु व्ययत्वे सर्वत्राविशेषात् स्यात् तद्व्ययबुद्धिः । न च भवति, तथाऽप्रतीतेः ॥**

**एवमनयोस्तत्त्वे सर्वथा भावाविच्छेदात् ध्रौव्यमपि सिद्धमेव, भावविच्छेदे सत्येतदनुपपत्तेः तद्धर्मत्वात्, अतद्धर्मत्वे तत्तत्त्वा[1]योगात् [2]सर्वथा तुच्छत्वादिति, अतः तच्चित्रस्वभावत्वात्, अन्यथा तदनुपपत्तेः तदुत्पादादिबुद्धिभेदवेदनात्, निमित्तभेदमन्तरेण तदयोगात्, अन्यथाऽतिप्रसङ्गात्, अन्यतरभ्रान्तत्वकल्पनायां प्रमाणा-**

( स्वो० व्या० )

पूर्वभवनाभूतान्यथाभूतभवनात्मकस्वभावत्वात् । तथास्वभावत्वं च **यथाक्षयोपशमं** यस्य यथा क्षयोपशमः, क्षयोपशमानुरूपेणेत्यर्थः । **तत्रैव**–अधिकृतभवने किमित्याह–**व्ययप्रतीतेः** । तथाहि–कपालादिष्वेव घटादिव्ययप्रतीतिः । इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**तत्तुच्छे**त्यादि । तत्तुच्छा**भवनस्य तु**, प्रक्रमाद् भावतुच्छाभवनस्यैव **व्ययत्वे** । किमित्याह–**सर्वत्राविशेषात्** कारणात् तत्तुच्छाभवनस्य । किमित्याह–**स्यात् तद्व्ययबुद्धिः**–विशिष्टभावव्ययबुद्धिः, निमित्ताविशेषादित्यभिप्रायः । **न च भवति** । कुत इत्याह–**तथाऽप्रतीतेः** कारणात् ॥

**एवम्**–उक्तनीत्या **अनयोः**–उत्पाद-व्यययो**स्तत्त्वे**–तद्भावे सति । किमित्याह–**सर्वथा भावाविच्छेदात्** कारणात् **ध्रौव्यमपि सिद्धमेव** । कुत इत्याह–**भावविच्छेदे सति** । किमित्याह–**एतदनुपपत्तेः**–उत्पादव्ययानुपपत्तेः । अनुपपत्तिश्च **तद्धर्मत्वात्**–भावधर्मत्वात् तयोः । इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अतद्धर्मत्वे**, अभावधर्मत्वे इत्यर्थः । किमित्याह–**तत्तत्त्वायोगात्** तयोः–उत्पाद-व्यययोः तत्त्वायोगात् । अयोगश्च **सर्वथा तुच्छत्वादिति** । **अत** इत्यादि । अतः स्थितमेतत्–यद्वाऽतः–अस्माद्धेतोः **तच्चित्रस्वभावत्वात्**, प्रक्रमात् तस्य–भावस्य चित्रस्वभावत्वात्, उत्पादाद्यपेक्षया "उत्पादव्ययध्रौव्ययुक्तं सत्" इति कथमन्याय्यं वच इति योगः । [3]तच्चित्रस्वभावत्वं च **अन्यथा**–उत्पादाद्यपेक्षया तच्चित्रस्वभावत्वमन्तरेण **तदनुपपत्ते**स्तस्य–अधिकृतभावस्यानुपपत्तिस्तदनुपपत्तिस्ततः । इत्थं चैतदङ्गीकर्तव्यमित्याह–**तदुत्पादादिबुद्धिभेदवेदनात्** तस्मिन्–भावे उत्पादादिबुद्धिभेदवेदनमित्यनु[4]भवस्तस्मात् **निमित्तभेदमन्तरेण**, प्रक्रमादधिकृतभावे **तदयोगात्**–उत्पादादिबुद्धिभेदवेदनायोगात् । अयोगश्च **अन्यथाऽतिप्रसङ्गात्**

१ 'तत्त्वस्यायोगात्' इति ग–पाठः । २ 'सर्वथाऽनुविच्छेत्वादित्यतः' इति क–पाठः । ३ 'तच्चित्रत्वं च' इति ङ–पाठः । ४ 'भवभवस्तस्मात्' इति ङ–पाठः ।

( मूलम् )

**भावात्। एवमपि तत्कल्पने सर्वत्रानाश्वासप्रसङ्गात् "उत्पादव्ययध्रौव्ययुक्तं सत्" इति कथमन्याय्यं वचः ?। प्रतिविहितं चात्र पूर्वाचार्यैरिति न प्रयासः ॥**

**एवं च विशिष्टबादरभावसिद्धौ तत्तत्स्वभावतयैव विशिष्टसंस्थानभावोपपत्तेः याऽपि घटशरावादिबुद्धितुल्यतापत्तिचोदना साऽप्यनवकाशैव, विशिष्टसंस्थानवत्त्वात् तदेकत्वपरिणामस्य, तच्चित्रस्वभावतया तद्वास्तवत्वोपपत्तेः, अविगानतस्तथोपलम्भात्**

( स्वो० व्या० )

अन्यथा–निमित्तभेदमन्तरेण तदुत्पादादिबुद्धिभेदवेदनेऽतिप्रसङ्गात्–तद्वदनुत्पादादिबुद्धिभेदापत्तेरिति । **अन्यतरे**त्यादि । अन्यतर**भ्रान्तत्वकल्पनायां**, प्रक्रमादन्यतरोत्पादादिबुद्धिभेदभ्रान्तत्वकल्पनायां **प्रमाणाभावात्** । उत्पादव्ययबुद्धिर्भ्रान्ता यद्वा ध्रौव्यबुद्धिरित्यत्र न वस्तुस्थित्या प्रमाणमस्तीत्यर्थः । **एवमपि**–प्रमाणाभावेऽपि **तत्कल्पने**–भ्रान्तत्वकल्पने । किमित्याह–**सर्वत्रानाश्वासप्रसङ्गात्** भ्रान्तबुद्धिभेदवदभ्रान्तत्वाभिमतेऽप्यनाश्वासः, प्रमाणाभावाविशेषादिति भावनीयम्, अत एवम् **"उत्पादव्ययध्रौव्ययुक्तं सत्" इति कथमन्याय्यं वचः?**। ननु न्याय्यमेव **प्रतिविहितं चात्र पूर्वाचार्यैः–अजितयशः**प्रभृतिभि**रिति न प्रयासः**॥

प्रकृतमधिकृत्याह–**एवं चे**त्यादि । एवं च **विशिष्टबादरभावसिद्धौ** सत्यां किमित्याह–**तत्तत्स्वभावतयैव** तेषाम्–अधिकृताणूनां तत्स्वभावतयैव–विशिष्टसंस्थानभवनस्वभावतयैव । किमित्याह–**विशिष्टसंस्थानभावोपपत्ते**र्घटशरावाद्यपेक्ष(?या) **याऽपि घटशरावादिबुद्धितुल्यत्वापत्तिचोदना** पूर्वपक्षे ग्रन्थान्तरे च **साऽप्यनवकाशैव** वेदितव्या । कुत इत्याह–**विशिष्टसंस्थानवत्त्वात्** कारणात् **तदेकत्वपरिणामस्य**, प्रक्रमादेवैकत्वपरिणामस्य, **तच्चित्रस्वभाव**-

( विवरणम् )

(२२) **घटशरावादिबुद्धितुल्यत्वा[1]पत्तिचोदना पूर्वपक्षे ग्रन्थान्तरे चे**ति । घटशरावादयो हि वस्तुभेदा एकाकारैः परमाणुभिरारब्धत्वादेकाकारामेव बुद्धि जनयन्त्वित्यभिप्रायेणापि परैः प्रेरणा कृता पूर्वपक्षेऽत्रैव ग्रन्थे उपलक्षणद्वा[2]रेण, न तु साक्षात् । ग्रन्थान्तरे च क्वापि सा[3]क्षादेवोक्ता साऽपि निरवकाशैव ॥

१ 'त्वापत्तिबोधनात् पूर्व०' इति च–पाठः। २ 'द्वारेण तु साक्षाद्' इति च–पाठ । ३ 'साक्षादेवोक्त्वा साऽपि' इति क–पाठ ।

( मूलम् )

**निमित्तान्तराभावात्। बोधमात्रतत्त्ववादे तु वासनाद्ययोगात् अस्य चोक्तत्वादभिधीयमानत्वाच्च। अविशिष्टरूपादिनिबन्धनवादिनस्त्वेष दोषोऽनिवारित एव, अवैशिष्ट्येन तेषामेकस्वभावत्वात् घटशरावादिसंस्थानानुपपत्तेः, तदव्यतिरिक्तत्वेन तन्मात्ररूपत्वात्, तत्तत्स्वभावत्वे तद्धर्मभेदोपपत्तेः, रूपादित्वाविशेषे तद्विशेषाभावात्,**

( स्वो० व्या० )

**तया**–अण्वेकत्वपरिणामचित्रस्वभावतया कारणेन **तद्वास्तवत्वोपपत्तेः**–विशिष्टसंस्थानभाववास्तवत्वोपपत्तेः । तथा **अविगानतः**–अविगानेन **तथोपलम्भात्**–विशिष्टसंस्थानवत्त्वेनोपलम्भात् **निमित्तान्तराभावात्**। एकत्वपरिणाममात्राधिकसंस्थानभावेन वासनाऽस्य [1]निमित्तमिति निराकरणायाह–**बोधमात्रतत्त्ववादे तु**–पुनरेकान्तेन **वासनाद्ययोगात्, अस्य च**–वासनाद्ययोगस्य **उक्तत्वात् अभिधीयमानत्वाच्च** ऊर्ध्वं 'याऽपि घटशरावादिबुद्धितुल्यत्वापत्ति[2]चोदना साऽप्यनवकाशैव' [3]इति क्रियायोगोऽनुवर्त्तते। **अविशिष्टरूपादिनिबन्धनवादिनस्तु**–घटादिबुद्धेः **सौत्रान्तिकस्य** । किमित्याह–**एष दोषोऽनिवारित एव** घटशरावादिबुद्धितुल्यत्वापत्तिलक्षणः। कुत इत्याह–[4]**अवैशिष्ट्येन** हेतुना **तेषामेकस्वभावत्वात्** परपरिकल्पितरूपादीनाम् । किमित्याह–**घटशरावादिसंस्थानानुपपत्तेः** तत्त्वतस्**तदव्यतिरिक्तत्वेन**–रूपाद्यव्यतिरिक्तत्वेन हेतुना । किमित्याह–**तन्मात्ररूपत्वात्**–रूपादिमात्ररूपत्वात् **तत्तत्स्वभावत्वे** तेषां–रूपादीनां तत्स्वभावत्वे, प्रक्रमाद् घटशरावादिसंस्थानभवनैकस्वभावत्वे **तद्धर्मभेदोपपत्तेः**–रूपादिधर्मभेदोपपत्तेः । तथा **रूपादित्वाविशेषे** सति **तद्विशेषाभावात्** प्रक्रमादेव घट-

( विवरणम् )

(१५–१६) **अविशिष्टरूपादिनिबन्धनवादिनस्तु घटादिबुद्धेः सौत्रान्तिकस्येति**। अविशिष्टान् रूपादीन् निबन्धनं–कारणं वदतीत्येवंशीलो यः [5]**सौत्रान्तिकः** तस्य । अविशिष्टान् रूपादीन् निबन्धनं वदतीत्याह–घटादिबुद्धेः–घटपटइत्यादिकाया मतेः । मृदाद्यात्मक( ? त्वे ) एव सत्यमीषामिति । घटाख्यो ह्यवयवी मृदात्मक एव, मृत्परमाणुभिरारब्धत्वात् । ततो मृदात्मक एव सन् असौ मृदात्मकेभ्योऽवयवेभ्यः पृथग्रूप इति **वैशेषिकाः** प्रतिपन्ना इति । एवं पटादिष्वपि योज्यम् ॥

१ 'निमित्यमिति निरा०' इति ङ–पाठः । २ 'वेदना' इति क–पाठः । ३ द्रष्टव्यं ३३तमं पृष्ठम् । ४ इत्याह–'अविशिष्ट्यो न हेतुना' इति क–पाठः; ङ–पाठस्तु 'इत्याहावैशिष्ट्येन हेतुना' इति । ५ 'सौत्रान्तिककस्या अपि विशिष्टान्' इति ख–पाठः ।

(मूलम्)

**भावे त्वस्मदभ्युपगमसिद्धेः, अन्यथा तथा तत्सन्निवेशित्वायोगात् ॥**

**न चेयमविकल्पिकाऽतुल्यैव, रूपादिस्वलक्षणालम्बनत्वात्, विकल्पिकाया अपि तथाभेदानुपपत्तेः, अस्या अपि तत्त्वतोऽविकल्पिकालम्बनत्वात्, प्रत्यक्षपृष्ठभावित्वेनाध्यवसिततद्भावतो गृहीतग्राहित्वेन विकल्पिकाया अप्रामाण्याभ्युपगमात्, अन्यथा गृहीतग्राहित्वानुपपत्तेः, अविशिष्टतद्बोधमात्रात् तद्भेदायोगात्, विषयभेदमन्तरेण च तद्वैशिष्ट्यानुपपत्तेः,तद्भेदाभ्युपगमे चास्मदभ्युपगतद्रव्यसंस्थानाभ्युपगमः, अन्यथा तथा तद्भेदायोगात्, भेदका-**

(स्वो० व्या०)

शरावादिसंस्थानभवनविशेषाभावात्। **भावे** पुनस्तद्विशेषभावस्य **अस्मदभ्युपगमसिद्धिः**। **अन्यथा**–[1]अस्मदभ्युपगमसिद्धिमन्तरेण किमित्याह–**तथा**–घटशरावादिसंस्थानभवनेन **तत्सन्निवेशित्वायोगात्** तेषां–रूपादीनां सन्निवेशित्वायोगात्। 'अविशिष्टरूपादिनिबन्धनवादिनस्त्वेष दोषोऽनिवारित एव'[2] इति क्रियायोगोऽनुवर्तते॥

**न चेय**मित्यादि। न चेयमिति [3]दीर्घतरप्रक्रमाद् घटशरावादिबुद्धिर्गृह्यते **अविकल्पिकाऽतुल्यैव, रूपादिस्वलक्षणालम्बनत्वात्** कारणात्। कुत इत्याह–**विकल्पिकाया अपि तथा**–घटशरावादिप्रतिभासभेदेन **भेदानुपपत्तेः**। अनुपपत्तिश्चापि **अस्या अपि** विकल्पिकाया घटशरावादिबुद्धेः **तत्त्वतः**–परमार्थेन। किमित्याह–**अविकल्पिकालम्बनत्वात्** अविकल्पिकालम्बनं रूपादिस्वलक्षणं आलम्बनं यस्याः सा अविकल्पिकालम्बना एकालम्बनशब्दलोपेन तद्भावस्तस्मात्। एतदेवाह **प्रत्यक्षे**त्यादिना। प्रत्यक्ष**पृष्ठभावित्वेन** हेतुनाऽ**ध्यवसिततद्भावतः** परिच्छिन्नप्रत्यक्षालम्बनतया **गृहीतग्राहित्वेन एव विकल्पिकाया** बुद्धेः **अप्रामाण्याभ्युपगमात्**। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा गृहीतग्राहित्वानुपपत्तेः**। तथा [4]**अविशिष्टतद्बोधमात्रात्**–रूपादिस्वलक्षणबोधमात्रात् **तद्भेदायोगात्** विकल्पिकाया बुद्धेर्भेदायोगाद् घटशरावादिबुद्धित्वेन तथा **विषयभेदमन्तरेण च** [5]तात्त्विकं **तद्वैशिष्ट्यानुपपत्तेः**, प्रक्रमात् तन्निबन्धनभूताया अविकल्पिकाया वैशिष्ट्यानुपपत्तेः। **तद्भेदाभ्युपगमे च**–विषयभेदाभ्युपगमे च किमित्याह–**अस्मदभ्युपगतद्रव्यसंस्थानाभ्युपगमः**। **अन्यथा**–एवं तदभ्युपगमाभावे **तथा**–घटशरावादिविकल्पबुद्धिजनकत्वेन **तद्भेदायोगात्**, [6]प्रक्रमात्

१ 'अस्मादभ्युपगमसिद्धि०' इति ङ–पाठ। २ द्रष्टव्यं ३४तम पृष्ठम्। ३ 'दीर्घतवप्रक्रमोद् घट०' इति ङ–पाठ। ४ 'अवशिष्ट०' इति ङ–पाठ। ५ 'तात्त्विक तद्वै०' इति ङ–पाठ। ६ 'प्रमत् अवि०' इति ङ–पाठ।

( मूलम् )

भावात्, व्यक्तिभेदमात्रस्याप्रयोजकत्वात् तद्भावेऽपि तथाबोधभेदासिद्धेः, समानजातीयेभ्योऽतुल्येतरबुद्ध्यभावादिति रूपादीनामनेकस्वभावत्वसिद्धिः ॥

स्यादेतत् सिद्धसाधनमेतदुक्तमेव नः पूर्वाचार्यैः–"द्विविधा हि रूपादीनां शक्तिः सामान्या प्रतिनियता च । तत्र सामान्या यथा घटसन्निवेशिनामुदकाद्याहरणादिकार्यकरणशक्तिः, प्रतिनियता यथा चक्षुर्विज्ञानादिकार्यकरणशक्तिरिति" । अत्रोच्यते–उक्तमिदमयुक्तं तूक्तं, पूर्वाभ्युपगमविरोधात्, एकान्तैकस्वभाववस्तुवादिनो भवन्तः, स्वलक्षणानां निरंशत्वप्रतिज्ञानात्, तत् कथमिदमित्थमभिधातुं युज्यत इति ? ॥

( स्वो० व्या० )

अविकल्पिकबुद्धिभेदायोगात् । अयोगश्च भेदकाभावात् अविशिष्टरूपादिस्वलक्षणालम्बनत्वेन, व्यक्तिभेदमात्रस्य अधिकृताविकल्पकबुद्धिनां किमित्याह–अप्रयोजकत्वात्[1] । एतदेवाह–तद्भावेऽपि–व्यक्तिमात्रभेदभावेऽपि तथा–भिन्नविकल्पबुद्धिजनकत्वेन बोधभेदासिद्धेः । असिद्धिमेवाह–समानजातीयेभ्यः रूपाद्यविकल्पबोधभेदेभ्यः । किमित्याह–अतुल्येतरबुद्ध्यभावात् । अतुल्याश्च ता इतरबुद्धयश्च अविकल्पबोधभेदानामितरबुद्धयो विकल्पिका गृह्यन्ते, तासामभावस्तस्मात् । न हि नीलस्वलक्षणबोधभेदेभ्यो नीलानीलविकल्पबुद्धिभाव इति भावनीयम् । ;ति–एवं रूपादीनामनेकस्वभावत्वसिद्धिः ॥

स्यादेतत् सिद्धसाधनमेतद् यदुक्तं भवता । कुत इत्याह–उक्तमेव ः–अस्माकं पूर्वाचार्यैः–धर्मपाल-धर्मकीर्त्यादिभिः द्विविधा यस्माद् पादीनां शक्तिः सामान्या एका प्रतिनियता च अपरा । तत्र सामान्या क्तेः यथा घटसन्निवेशिनां–रूपादीनां उदकाद्याहरणादिकार्यकरणक्तिः, यतः सर्वैरेव घटैरेतत् क्रियते । प्रतिनियता तु रूपादीनां शक्तिर्यथा क्षुर्विज्ञानादिकार्यकरणशक्तिरिति । रूपं हि चक्षुर्विज्ञानमेव जनयति, न ादिविज्ञानम्; एवं रसादयोऽपि रसादिविज्ञानान्येवेति । एतदाशङ्क्याह–अत्रोग्ते–उक्तमिदं वः पूर्वाचार्यैः अयुक्तं तूक्तम् । कुत इत्याह–पूर्वाभ्युपगमरोधात् । विरोधश्च एकान्तैकस्वभाववस्तुवादिनो भवन्तः–बौद्धाः । । इत्याह–स्वलक्षणानां निरंशत्वप्रतिज्ञानात् कारणात् तत् कथमिदं–

[1] 'त्याह प्रयोजक०' इति ङ–पाठः ।

( मूलम् )

**किञ्च किमिदं सामान्यप्रतिनियतशक्तिमद्भ्यो रूपादिभ्योऽन्यदुतानन्यदिति ?। अन्यत्वे सङ्गायोगः, अनन्यत्वे रूपादिभ्यस्तदेकत्वादि। त एव तदिति चेत्, कथमेकस्वभावास्तदुभयभाजः ?। परिकल्पितं तदिति चेत् निर्हेतुकं तर्हि तत्कार्यम्। रूपादिभ्य एव तदिति चेत्, कथमेकस्वभावेभ्योऽनेकम् ?। तत्तत्स्वभावत्वादिति चेत्, न तदचित्रतायामेतदित्युक्तप्रायम् ॥**

**एवं सर्वथैकस्वभाववस्तुवादिनो रूपादय एव घट इत्ययुक्तम्। रूपादय एव रूपादय इति वाक्यार्थापत्तेः भिन्नशब्दप्रयोगायोगात्, प्रवृत्तिनिमित्ताभावात्, कार्यभेदानुपपत्तेः, तस्य च प्रतिक्षेपा-**

---

( स्वो० व्या० )

द्विविधा हि रूपादीनां शक्तिरित्यादि **इत्थमभिधातुं युज्यत इति,** शक्तिद्वैविध्ये एकस्वभावत्वानुपपत्तेरित्यर्थः ॥

अभ्युच्चयमाह **किञ्चे**त्यादिना। किञ्च **किमिदं–सामान्यप्रतिनियत**शक्तिद्वयं **शक्तिमद्भ्यः रूपादिभ्यः अन्यदुतानन्यदिति** विकल्पद्वयम्। किञ्चातः ? उभयथाऽपि दोष इत्याह–**अन्यत्वे संयोगायोगः,** सम्बन्धाभाव इत्यर्थः। **अनन्यत्वे** शक्तिद्वयस्य **रूपादिभ्यस्तदेकत्वादि** तयोः–शक्त्योरेकत्वम्। एकस्माद् रूपादेरनन्यत्वात् तत्स्वरूपवद् रूपादिभेदो वेत्यादि शब्दार्थः। **त एवे**त्यादि। त एव–रूपादय एव **तत्**–शक्तिद्वयम्। **इति चेत्,** एतदाशङ्क्याह–**कथमेकस्वभावाः**–रूपादयः **तदुभयभाजः,** तच्छक्तिद्वयभाज इत्यर्थः। **परिकल्पितं तत्**–शक्त्युभयम्। **इति चेत्,** एतदाशङ्क्याह–**निर्हेतुकं तर्हि तत्कार्यं**–शक्तिद्वयकार्यमुदकाद्याहरणादि। **रूपादिभ्य एव तत्**–कार्यम्। **इति चेत्,** एतदाशङ्क्याह–**कथमेकस्वभावेभ्यो** रूपादिभ्यः **अनेकं** कार्यमुदकाद्याहरणादि चक्षुर्विज्ञानादि च ?। **तत्तत्स्वभावत्वात्** तेषां–रूपादीनां अनेककार्यजननस्वभावत्वात्। **इति चेत्** अनेकं कार्यम् एतदाशङ्क्याह–**न तदचित्रतायाम्**–अधिकृतस्वभावचित्रतायाम**एतत्**–तत्स्वभावत्वम**इत्युक्तप्रायं**–प्रायेणोक्तम् ॥

एवं च कृत्वा **सर्वथैकस्वभाववस्तुवादिनः**–बौद्धस्य **रूपादय एव घट** इत्येतदप्य**युक्तम्**। कथमित्याह–**रूपादय एव रूपादय इति**–एव **वाक्यार्थापत्तेः** कारणात्। आपत्तिश्च **भिन्नशब्दप्रयोगायोगात्** भिन्नौ चैतौ रूपादय

---

१ 'तदैति' इति भ्रान्तिमूलक क–पाठ.। २ 'भावेभ्य. अनेकान्ततत्स्व०' इति ग–पाठोऽनादरणीय। ३ 'तयेवेत्यादि' इति ङ–पाठ।

(मूलम्)

**योगात् सकललोकसिद्धत्वात् उदकाद्याहरणज्ञानादिभावात्। एवं च तदग्रहे तद्बुद्ध्यभावादिति युक्तिरप्ययुक्तिरेव, तद्ग्रहणस्यैव तद्बुद्धित्वेन तद्भेदाभिधानायोगात्, तद्भेदाभिधाने च रूपादिबुद्ध्यविनाभूता घटबुद्धिरिति बलादापद्यते। एवं च भवन्ती नियमत एवेयं तत्प्रति[1]बद्धं निमित्तान्तरमुपदर्शयतीति यथोदिततत्परिणामसिद्धिः। अवश्यं चैतदित्थमङ्गीकर्तव्यम्–यदि तु रूपादय एव घटस्ततस्तदतिरिक्ततत्त्वान्तराभावाद् घटस्य रूपादय इति व्यतिरेकाभिधायी**

(स्वो० व्या०)

एव घट इति च। अयोगश्च **प्रवृत्तिनिमित्ताभावात्**। न हि यदेव रूपादिशब्दस्य प्रवृत्तिनिमित्तं तदेव घटशब्दस्यापि भवितुमर्हत्यतिप्रसङ्गादिति भावनीयम्। इतश्चायुक्तं रूपादय एव घट इत्येतत् **कार्यभेदानुपपत्तेः** कारणात्, नैकान्तेन एकस्वभावेभ्यः कार्यभेदो न्याय्यः, **तस्य च**–कार्यभेदस्य **प्रतिक्षेपायोगात्**। अयोगश्च **सकललोकसिद्धत्वात्** कार्यभेदस्य। अत एवाह–**उदकाद्याहरणज्ञानादिभावात्** उदकाद्याहरणादि सामान्यशक्तिकार्यं ज्ञानादि च प्रतिनियतशक्तिकार्यमिति। **एवं चे**त्याद्यभ्युच्चयार्थम्। एवं च कृत्वा **तदग्रहे**–रूपाद्यग्रहे **तद्बुद्ध्यभावात्**–घटबुद्ध्यभावा**दिति युक्तिरपि** रूपादीनां घटत्वे साध्ये। किमित्याह–**अयुक्तिरेव**। कुत इत्याह–**तद्ग्रहणस्यैव**–रूपादिग्रहस्यैव **तद्बुद्धित्वेन**–घटबुद्धित्वेन हेतुना **तद्भेदाभिधानायोगात्** तयोः–[2]रूपादिघटग्रहबुद्ध्योर्भेदेनाभिधानं त[3]स्यायोगात्। **तद्भेदाभिधाने च** सति किमित्याह–**रूपादिबुद्ध्यविनाभूता**। केत्याह–**घटबुद्धिरिति** एतद् **बलादापद्यते**। **एवं च भवन्ती** रूपादिबुद्ध्यविनाभावेन **नियमत एवेयं**–घटबुद्धिः **तत्प्रतिबद्धं**–रूपादिप्रतिबद्धं **निमित्तान्तरमुपदर्शयतीति** कृत्वा। किमित्याह–**यथोदिततत्परिणामसिद्धिः** यथोदितश्चासौ, प्रक्रमात् तत्परिणामश्च–अण्वादिपरिणामश्चेति समासः, तस्य सिद्धिरिति। अभ्युच्चयमाह–**अवश्यं चैतदित्थमङ्गीकर्त्तव्यम**नन्तरोदितम्। विपक्षे बाधामाह **यदि त्वि**त्यादिना। यदि तु **रूपादय एव घटः ततस्तदतिरिक्ततत्त्वान्तराभावात्**–रूपाद्यतिरिक्ततत्त्वान्तराभावात् कारणात् **घटस्य रूपादय इति**–एवं **व्यतिरेकाभिधायी**–भेदाभिधायी **व्यपदेशो**

१ 'बन्धनिमित्ता०' इति क–पाठोऽनादरणीयः। २ 'रूपादिग्रहघटो बुद्ध्यो०' इति ङ–पाठः। ३ 'तस्य योगात्' इति ङ–पाठः।

(मूलम्)

व्यपदेशो न स्यात्। स्यादेतत् तथाकृतसङ्केतत्वाद् ये यथा शब्दा नियुज्यन्ते तथा वाचका इत्यव्यतिरेकेऽप्येवंव्यपदेशो युक्त एव, केवलं प्रयोजनानपेक्षो न भवति तदप्यस्त्येव यथाऽऽह न्यायवादी–"रूपादयो घटस्येति तत्सामान्योपसर्जनास्तद्व्यक्तिभेदाः ख्याप्यन्ते" इति। अयमत्रार्थः–रूपादयो घटस्येति व्यपदेशे घटसामान्यविशेषणा रूपादिशक्तिभेदाः प्रतिनियता उच्यन्ते, प्रतिनियतशक्तिस्वभावाः सन्तः सामान्यशक्तिस्वभावाः ख्याप्यन्त इति यावत्। एतदप्ययुक्तम्, वचनमात्रत्वात्। एवं हि प्रतिनियतचक्षुर्विज्ञानादिकार्यैकरणस्वभावाः सन्त उदकाद्याहरणकार्यैकरणस्वभावाः ख्याप्यन्त इत्येतदापन्नम्। एतच्चैवमभिधीयमानं असति वास्तवे तत्स्वभाववैचित्र्ये नीलादिविज्ञानकार्यैकरणभावस्वभावा

---

(स्वो० व्या०)

**न स्यात्**, अस्ति चायं घटस्य रूपादय इति। **स्यादेतदित्यादि**। **तथा**–तेन प्रकारेण **कृतः सङ्केतो** येषां, प्रक्रमाच्छब्दानां, ते तथाविधास्तद्भावस्तस्मात् **ये यथा शब्दा नियुज्यन्ते** वाचकत्वेन ते **तथा वाचका इति** कृत्वा **अव्यतिरेकेऽपि**–अभेदेऽपि एवं घटस्य रूपादय इति **व्यपदेशो युक्त एव, केवल**मन्यत्र **प्रयोजनानपेक्षो न भवति तदप्यस्त्येव** इह प्रयोजनं [1]व्यपदेशे **यथाऽऽह–न्यायवादी धर्मकीर्त्तिः–रूपादयो घटस्येति**–एवं **तत्सामान्योपसर्जनाः**–रूपादिसामान्योपसर्जनास्**तद्व्यक्तिभेदाः**–रूपादिव्यक्तिभेदाः **ख्याप्यन्त इति। अयमत्र**–ग्रन्थे भाव**ार्थः–रूपादयो घटस्येति व्यपदेशे**ऽस्मिन् **घटसामान्यविशेषणा**स्तदुपसर्जनभावेन **रूपादिशक्तिभेदाः प्रतिनियता उच्यन्ते। प्रतिनियतशक्तिस्वभावाः सन्तो** वस्तुस्थित्या **सामान्यशक्तिस्वभावाः ख्याप्यन्त इति यावत्**। एतदाशङ्क्याह–**एतदप्ययुक्तम्**। कुत इत्याह–**वचनमात्रत्वात्**। एतदेवाह **एवं ही**त्यादिना। एवं यस्मात् **प्रतिनियतचक्षुर्विज्ञानादिकार्यैकरणस्वभावाः सन्तो** रूपादय **उदकाद्याहरणकार्यैकरणस्वभावाः ख्याप्यन्त इत्येतदापन्नं** नीला। **एतच्चैवमभिधीयमानं** सत् **असति वास्तवे**–तात्त्विके **तत्स्वभाववैचित्र्ये** तेषां–रूपादीनां स्वभाववैचित्र्ये। किमित्याह–**नीलादिविज्ञानकार्यैकरण(भाव)**-

---

१ 'देशो यथाऽऽह' इति ङ–पाठः।

( मूलम् )

**नीलादयः पीतादिविज्ञानकार्यकरणस्वभावाः ख्याप्यन्त इत्यसन्दिग्धं तुल्यमनेन, अन्यतरशब्दादेः प्रवृत्तिनिमित्ताभावाविशेषात् एकान्तैकस्वभावत्वात्। तत्स्वभाववैचित्र्याभ्युपगमे तु न विप्रतिपत्तिरावयोः, सर्वत्र निरुपचरितप्रवृत्तिनिमित्तोपपत्तेः तत्तत्परिणामापेक्षया तथा तथोपसर्जनादिभावेन विचित्रक्षयोपशमयोगतस्तत्तच्छब्दादिसिद्धेरिति ॥**

**एतेन चन्दनस्य गन्ध इत्यत्रापि न चन्दनं नाम गन्धव्यतिरिक्तं किञ्चिद् द्रव्यमस्ति। किं तर्हि? अनेकात्मकस्य गन्धस्य चन्दनस्वभावो यो गन्धः स तथा निर्दिश्यत इति यदुच्यते परैस्तदपि प्रत्युक्तमेव, सर्वथैकस्वभावत्वे सति अस्याप्यनुपपत्तेः। तथाहि—चन्दनस्वभावो**

---

( स्वो० व्या० )

**स्वभावा नीलादयः पीतादिविज्ञानकार्यकरणस्वभावाः ख्याप्यन्त इति**—एवं **असन्दिग्धं तुल्यमनेन**। कथमित्याह—**अन्यतरशब्दादे**र्नीलपीताद्यपेक्षया **प्रवृत्तिनिमित्ताभावाविशेषात्**। अविशेषश्च **एकान्तैकस्वभावत्वात्** रूपादीनाम्। एवं चैककार्यपरिकल्पनाबीजमप्यस्तु कार्यान्तरपरिकल्पनाबीजमप्यस्तु। कार्यान्तरपरिकल्पनाबीजं तु न तत्र युज्यते इत्यभिप्रायः। **तत्स्वभाववैचित्र्याभ्युपगमे** पुनः किमित्याह—**न विप्रतिपत्तिरावयोः**। कुत इत्याह—**सर्वत्र**—चक्षुर्विज्ञानादिकार्यादौ **निरुपचरितप्रवृत्तिनिमित्तोपपत्तेः** मुख्यशक्तिद्वयभावेन। एतदेवाह **तत्त**दित्यादिना। **तत्तत्परिणामापेक्षया**—चक्षुर्विज्ञानादिकार्यकरणपरिणामापेक्षया **तथा तथा**—तेन तेन प्रकारेण **उपसर्जनादिभावेन**—अविवक्षितादिरूपेण **विचित्रक्षयोपशमयोगतः** कारणात् **तत्तच्छब्दादिसिद्धेः**—रूपादिघटादिशब्दविज्ञानादिसिद्धे**रिति** ॥

**एतेने**त्यादि। एतेन—अनन्तरोदितेन वस्तुना **चन्दनस्य गन्ध इत्यत्रापि**—भेदाधिकारे **न चन्दनं नाम गन्धव्यतिरिक्तं किञ्चिद् द्रव्यमस्ति। किं तर्हि? अनेकात्मकस्य गन्धस्य** कुङ्कुमाद्यपेक्षया **चन्दनस्वभावो यो गन्धः स तथा**—तेन चन्दनोपलक्षणप्रकारेण **निर्दिश्यते** चन्दनस्य गन्ध **इति**—एवं **यदुच्यते परैः**—एकस्वभाववस्तुवादिभिः **तदपि प्रत्युक्तमेव**—परिहृतमेव। कथमित्याह—**सर्वथैकस्वभावत्वे सति** वस्तुनः **तस्याप्यनुपपत्तेः**। यदुच्यते

---

१ 'इत्यत्रापि चन्दनं नाम न गन्ध०' इति ग-पाठः। २ 'अचन्दन०' इति ङ-पाठः।

(मूलम्)

**यो गन्ध इत्यनेन गन्धविशेषणाभिधानात्, अन्यथा गन्धस्वभावो यो गन्ध इति प्राप्नोति, तन्मात्रस्य वैशिष्ट्यायोगेन विशेषणानुपपत्तेरित्यलं प्रसङ्गेन ॥**

**अवयविपक्षोक्तदूषणानि तु तथातदनभ्युपगमान्न नो बाधायै। न ह्यवयवेभ्योऽन्य एवावयवीत्यभिदधति जैनाः। किं तर्हि? कथञ्चिदनन्यः, तदेकत्वपरिणाम एवासाविति। इत्थं चैतदङ्गीकर्तव्यं तथाप्रतीतेः, तदग्रह एव सर्वथाऽग्रहणात्, समन्धकारे तदनुपलब्धेः। नेयमवयवाग्रहणत इति चेत्, कुतस्तर्हीति वाच्यम्। समन्धकारेण तद्ग्रहणावरणादिति चेत् स्यात् तदभावे तद्भेदग्रहः। अस्त्ये-**

(स्वो० व्या०)

परैरिति एतामेव भावनिकयाऽऽह **तथाहीत्यादिना**। **चन्दनस्वभावो यो गन्ध इत्यनेन**–ग्रन्थेन **गन्धविशेषणाभिधानात्** चन्दनस्वभावतया, **अन्यथा गन्धस्वभावो यो गन्ध इति प्राप्नोति**, न चन्दनस्वभाव इति। कुत इत्याह– **तन्मात्रस्य**–गन्धमात्रस्य **वैशिष्ट्यायोगेन** हेतुना **विशेषणानुपपत्तेः**। चन्दनस्वभावो य इत्येवमित्यलं **प्रसङ्गेन**–[1]इति प्रकृतोपसंहारः ॥

**अवयविपक्षोक्तदूषणानि तु** पूर्वपक्षग्रन्थे **तथा**–तेनावयवभिन्नत्वादिना प्रकारेण **तदनभ्युपगमात्**–अवयव्यनभ्युपगमात् कारणात् **न नो बाधायै**–नास्माकं बाधायै। एतदेवाह **न हीत्यादिना**। न यस्माद् **अवयवेभ्यः** सकाशात् **अन्य एव**–एकान्तेन **अवयवीत्यभिदधति**–भणन्ति **जैनाः**। **किं तर्हि? कथञ्चिदनन्यः**। कुत इत्याह–**तदेकत्वपरिणाम एव**–अवयवैकत्वपरिणाम **एवासौ**–अवयवी **इति**। **इत्थं चैतदङ्गीकर्तव्यमित्याह**–**तथाप्रतीतेः**–अवयवैकत्वपरिणामत्वेन प्रतीतेः। प्रतीतिश्च **तदग्रह एव**–अवयवाग्रह एव **सर्वथाऽग्रहणाद**वयविनः। एतदेव भावयति **समन्धकारे**ऽवयवाग्रहणेन **एतदनुपलब्धेः**–अवयव्यनुपलब्धेः। **नेयमवयव्यनुपलब्धिः, अवयवाग्रहणतः। इति चेत्**, एतदाशङ्क्याह–**कुतस्तर्हीति वाच्यम्**। इयमवयव्यनुपलब्धिः **समन्धकारेण** हेतुना [2]**तद्ग्रहणावरणात्**–अवयविग्रहणावरणात्। **इति चेत्**, एतदाशङ्क्याह–**स्यात् तदभावे**–समन्धकाराभावे **तद्भेदग्रहः**–अवयवभेदेन ग्रहोऽवयविनः। **अस्त्येवाय-**

१ 'इति कृतोप०' इति क–पाठ। २ 'तद्ग्रहणात्' इति क–पाठ।

( मूलम् )

**वायमिति चेत्, न, प्रतीतिविरोधात् । असिद्धोऽयमिति चेत्, कयोपपत्त्येति वाच्यम्, न ह्यनेकेषु क्वचिदेकबुद्धिः । को वा किमाहेत्यविप्रतिपत्तिरत्र । अस्ति चेयमनेकावयवेऽवयविनि । सत्यम्, न[1] तु तद्गर्भैति भाव्यताम् । तद्गर्भैति कोऽर्थः? कथञ्चित् तद्ग्रहणात्मिका । यदि नामैवं ततः किम्[2]? तत्तदेकत्वपरिणामता । यदि ह्यसौ तदन्य एव स्यात् ततस्तदन्यान्यबुद्धिवदतद्ग्रहणा(?)त्मिकैव भवेत् । न चेयमित्थम्, तथाऽननुभवात् । न ह्यमृदादिग्रहणरूपा घटादिबुद्धिः अनुभूयते । न चानुभवविरुद्धा कल्पना न्याय्या । न ह्यस्यां प्रभवन्त्यां कस्यचिदसिद्धिर्नाम । न चामृदाद्यात्मकत्व एवामीषां तद्भेद एव,**

( स्वो० व्या० )

**मिति चेत्** तद्भेदग्रहः । एतदाशङ्क्याह—**न, प्रतीतिविरोधात्** । न ह्येवंभूता प्रतीतिः । **असिद्धोऽयमिति चेत्** प्रतीतिविरोधः । एतदाशङ्क्याह—**कयोपपत्त्या** असिद्ध इति **वाच्यम्** । **न** यस्मा**दनेकेषु**—भावेषु **क्वचिदेकबुद्धि**रितीयमेवोपपत्तिः । एतदाशङ्क्य सामान्येनाह—**को वा किमाहेत्यविप्रतिपत्तिरत्र**—वस्तुनि यदुत नानेकेषु क्वचिदेकबुद्धिरिति । अत्राह—**अस्ति चेयमनेकावयवेऽवयविनि** एकबुद्धिर्घटोऽयमित्यादिरूपा । एतदाशङ्क्याह—**सत्य**मस्ति, **न[3] तु तद्गर्भैति भाव्यताम्**, प्रक्रमात् न पुनरनवयवगर्भैति । अत्राह—**तद्गर्भैति कोऽर्थः?** । इहोत्तरम्—**कथञ्चित् तद्ग्रहणात्मिका**, प्रक्रमादनेकावयवग्रहणात्मिकेति । **यदि नामैवं ततः कि**मिति परः । **तत्तदेकत्वपरिणामते**त्युत्तरम् । तस्य—अवयविनः तदेकत्वपरिणामता, अत एवाद्यवयवैकत्वपरिणामतेति । एतदेव भावयति **यदी**त्यादिना । यदि **हि असौ**—अवयवी **तदन्य एव** तेभ्यः—अवयवेभ्योऽन्यः **स्यात्** ततः किं स्यादित्याह—**ततस्तदन्यान्यबुद्धिवत्** तेभ्यः—घटावयवेभ्योऽन्यो घटावयवीति तदन्यस्तस्मादन्यः पटाद्यवयवीति तद्बुद्धिवदिति निदर्शनम् । **अतदात्मिकैव**—मृदात्मिकैव **भवेद्** घटावयव्येकत्वबुद्धिः । **न चेयमित्थम**धिकृतैकत्वबुद्धिः । कुत इत्याह—**तथाऽननुभवात्** । एतदेवाह—**न** यस्मा**दमृदादिग्रहणरूपा घटादिबुद्धिरनुभूयते** । किं तर्हि? मृदादिग्रहणरूपैव । **न चानुभवविरुद्धा कल्पना न्याय्या** । किमित्यत आह—**न** यस्मा**दस्यां प्रभवन्त्या**मनुभवविरुद्धकल्पनायां **कस्यचिदसिद्धिर्नाम**, तत्प्रसादतः सर्वसिद्ध्यापत्तेः । **न चामृदा-**

१ 'नवतद्गर्भैति' इति ग—पाठः । २ 'किं तत्, तदेक०' इति ग—पाठः । ३ 'न तद्गर्भैति वाच्यतां' इति ङ—पाठः ।

(मूलम्)

[1]देशाद्यभेदानुपपत्तेः। इति [2]यथोदित एवायं प्रतीतिर्[3]न्यायाविरुद्धः। तथाहि–अस्ति तावदियं विच्छिन्नार्थग्रहणस्वभावप्रतिभासा स्थूलाकारा प्रतीतिः। न चायं स्थूलः तत्तत्स्वभावतया समानजातीयावयवैकत्वपरिणामरूपः तत्तत्सहकारियोगात् तथाभवन् विरुध्यत इति। न चात्रावयविपक्षोक्तदूषणावकाशः, ततोऽस्य जात्यन्तरत्वात्, कथञ्चित् स्वावयवात्मकत्वेन सर्वथा तद्व्यतिरेकासिद्धेः। एतेन मूर्त्तत्वेन तदभिन्नदेशताऽनुपपत्तिः प्रत्युक्ता, तत्स्वभावतया [4]तेषामेव तथाभवनात्, अत एव वृत्त्ययोगदूषणासम्भवात् अर्थान्तरभूतस्यैवावृत्तेः। [5]"भिन्नदेशस्य [6]चाग्रहणात्" इत्यप्यनङ्गीकरणाद-

(स्वो० व्या०)

द्यात्मकत्व एव सति अमीषां–घटाद्यवयविनां तद्भेद एव–मृदाद्यात्मकावयवेभ्यो भेद एव। कुत इत्याह–देशाद्यभेदानुपपत्तेः–सामान्यतो देशकालस्वभावाभेदानुपपत्तेः। इति–एवं यथोदित एवायम्–अवयवी प्रतीतिन्यायाविरुद्धः। इहैव भावार्थमाह तथाहीत्यादिना। तथाहि अस्ति तावदियं विच्छिन्नार्थग्रहणस्वभावप्रतिभासा, बहिर्मुखावभासेत्यर्थः, स्थूलाकारा प्रतीतिः प्रतिप्राण्यनुभवात्मिका। न चायम्–आकारः स्थूलः तत्तत्स्वभावतया, प्रक्रमादणूनां स्थूलरूपभवनस्वभावतया, समानजातीयावयवैकत्वपरिणामरूपः सन् तत्तत्सहकारियोगात्–कालादृष्टादिसहकारियोगात् तथा–तेन प्रकारेण भवन् विरुध्यत इति। न चात्र–यथोदितैकत्वपरिणामेऽवयविपक्षोक्तदूषणावकाशः। कुत इत्याह–ततोऽस्य जात्यन्तरत्वात्–अवयविनो जात्यन्तरत्वात्। अवयविनो जात्यन्तरमयमेकत्वपरिणामः। जात्यन्तरत्वं च कथञ्चित् स्वावयवात्मकत्वेन हेतुना सर्वथा–एकान्तेन तद्व्यतिरेकासिद्धेः कारणात्। एतेनेत्यादि। एतेन–कथञ्चित् स्वावयवात्मकत्वेन यथोदितैकत्वपरिणामस्य मूर्त्तत्वेन तदभिन्नदेशताऽनुपपत्तिः–अवयवाभिन्नदेशताऽनुपपत्तिरवयविनः पूर्वपक्षोदिता प्रत्युक्ता। कथमित्याह–तत्स्वभावनया–तथैकत्वभवनस्वभावतया तेषामेव–अण्वाद्यवयवानां तथाभवनात्–कथञ्चिदभिन्नैकत्वपरिणामेन भवनात्, अत एव अनन्तरोदितादेकत्वपरिणामाद् वृत्त्ययोगदूषणासम्भवात् कारणात्। असम्भवश्च अर्थान्तरभूतस्यैव, अवयवेभ्य इति

१ 'देशादिभेदा०' इति क–पाठ। २ 'तथोदित एवायं' इति क–पाठ। ३ 'न्यायविरुद्ध' इति क–पाठ। ४ 'तेषामेव' इति पाठो ग–प्रतौ न विद्यते। ५ द्रष्टव्यं पञ्चमं पृष्ठम्। ६ 'वा ग्रहणा०' इति ग–पाठ.। ७ द्रष्टव्य चतुर्थं पृष्ठम्।

(मूलम्)

बाधकम्। न हि तत्स्वभावतया तेषामेव तथाभावस्तद्भिन्नदेश उपादानशून्यो वा, कथञ्चित् [1]तदव्यतिरेकात्, हेतूनां च परनीत्या स्वभावनियतत्वेन तत्त्वतोऽहेतुत्वोपपत्तेः। एवं तुलानतिविशेषाग्रहणमपि न दोषकृत्, तत्त्वतो विशेषाभावात्, तेषामेव तथापरिणतेः धर्मोत्पादव्ययभावेऽपि वस्तुनस्तुल्यत्वात्। एवं च '[2]न चासावमूर्त्तोऽग्रहणप्रसङ्गात्' इत्यपि यथोक्तावयविवादिनो न बाधायै तत्तथाभावस्य तदेकत्वपरिणामतया तथाविकल्पनायोगादिति ॥

(स्वो० व्या०)

प्रक्रमः, **अवृत्तेरधिकृतैकत्वपरिणामस्य**। नायमवयवी सर्वथा अवयवेभ्यो भिन्न एवेति कथं तद्दोषसम्भव इति भावना। तथा **भिन्नदेशस्य चाग्रहणादित्यपि** [3]पूर्वपक्षोदितमनङ्गीकरणाद् हेतोः। किमित्याह–**अबाधकम्**। एतद्भावनायाह **न ही**त्यादिना। न यस्मात् **तत्स्वभावतया तेषामेव तथाभावः**–अनन्तरोदितस्वरूप एकत्वपरिणाम इत्यर्थः, **तद्भिन्नदेशः**–अण्वाद्यवयवभिन्नदेश **उपादानशून्यो वा**। कुत इत्याह–**कथञ्चित्**–केनचित् प्रकारेण **तदव्यतिरेकात्**, तथाभाविनामण्वादीनामभेदादिति भावः। दूषणान्तरमाह–**हेतूनां च** अण्वादीनां **परनीत्या**–वैशेषिक-न्यायतः **स्वभावनियतत्वेन**–[4]नियततया **तत्त्वतः**–परमार्थेन **अहेतुत्वोपपत्तेः**। न [5]ह्यधिकृतस्वभावान्तरस्य हेतव इति भावनीयम्। **एवम्**–उक्तनीत्या **तुलानतिविशेषाग्रहणमपि** पूर्वपक्षोक्तं[6] **न दोषकृत्**–न दोषकरणशीलम्। कथमित्याह–**तत्त्वतो विशेषाभावाद्** यथोदितैकत्वपरिणामे। कुत इत्याह–**तेषामेव**–अण्वादीनां **तथा**–एकत्वेन **परिणतेः**। तथापि धर्मोत्पादव्ययौ स्त एव तत्र इत्यारेकानिरासायाह–**धर्मोत्पादव्ययभावेऽपि** सत्यण्वादीनां **वस्तुनस्तुल्यत्वात्** तत्स्वभावतयैव। **एवं च न चासावमूर्त्तो**ऽवयवी **अग्रहणप्रसङ्गादित्यपि** पूर्वपक्षोक्तं[7] **यथोक्तावयविवादिनः**, अनन्तरोक्तैकत्वपरिणामावयविवादिन इत्यर्थः। किमित्याह–**न बाधायै तत्तथाभावस्य** तेषाम्–अण्वाद्यवयवानामेकत्वेन भवनस्य **तदेकत्वपरिणामतया** कारणेन **तथा**–पूर्वपक्षोदितप्रकारेण **विकल्पनायोगादिति** ॥

१ 'तद्व्यति०' इति ग–पाठः। २ द्रष्टव्यं नवमं पृष्ठम्। ३ द्रष्टव्यं पञ्चमं पृष्ठम्। ४ 'नित्यतया' इति क–पाठः। ५ 'ह्यविकृत०' इति क–पाठः। ६ द्रष्टव्यं षष्ठं पृष्ठं सप्तमं च। ७ द्रष्टव्यं नवमं पृष्ठम्।

( मूलम् )

**यच्चोक्तम्**[1]**-'न चार्थे सत्यपि तद्ग्रहणोपायः समस्ति, युक्त्ययोगात्। स हि संवेदनग्राह्यः स्यात्। तच्च साकारमनाकारं वा। साकारत्वेऽपि स्वाकारं विषयाकारं चेति। यदि स्वाकारं तमेव तद् वेदयते। कथमनेनार्थो गृहीतो नाम' इति?**[2]**। एतदप्ययुक्तम्, तदर्थग्रहणपरिणामस्यैव स्वाकारत्वादर्थग्रहणपरिणामता चास्य तथाप्रतीतेर्बोधमात्रावेदनात्। सति चास्मिन् कथमनेनार्थो न गृहीतो नाम? तद्वेदनस्यैव तद्रूपत्वात्। तत्स्वाकारवेदनमेव ह्यर्थग्रहणरूपं तथाप्रतीतेरिति ॥**

**आह-वचनमात्रमेतत्, बोधमात्रतत्त्वस्य स्वभावनियतात्मनोऽर्थानुपरक्तस्य तद्ग्रहणरूपत्वायोगात्, नियमहेत्वनुपपत्तेः, अतिप्रस-**

---

( स्वो० व्या० )

**यच्चोक्त**मित्यादि। यच्चोक्तं पूर्वपक्षग्रन्थे एव। किमित्याह-**न चार्थे सत्यपि तद्ग्रहणोपायः**-अर्थग्रहणोपायः **समस्ति**-विद्यते। कुत इत्याह-**युक्त्ययोगात्**। अयोगमाह **स ही**त्यादिना। स यस्मादर्थः **संवेदनग्राह्यो** भवेत्। **तच्च**-संवेदनं **साकारमनाकारं** चेति विकल्पद्वयम्। **साकारत्वेऽपि** सति **स्वाकारं विषयाकारं चेति** विकल्पद्वयमेव। इह दोषमाह **यदी**त्यादिना। यदि **स्वाकारं** विज्ञानं ततः किमित्याह-**तमेव**-स्वाकारं **तत्**-विज्ञानं **वेदयते**। **कथमनेन**-विज्ञानेनात्मवेदिनाऽर्थो **गृहीतो नामेति**?। **एतदपि**-पूर्वपक्षोदित-**मयुक्तम्**। कथमित्याह-**तदर्थे**त्यादि। तस्य-विज्ञानस्यार्थग्रहणपरिणामः **तदर्थग्रहणपरिणामः तस्यैव स्वाकारत्वात्** कारणात् **अर्थग्रहणपरिणामता चास्य तथाप्रतीतेः**-बहिर्मुखावभासितयाऽनुभवात्। इत्थं चैतदङ्गीकर्त्तव्य-मित्याह-**बोधमात्रावेदनात्**। नार्थग्रहणगर्भविकलं बोधमात्रं वेद्यत इत्यनुभवः। **सति चे**त्यादि। सति च **अस्मिन्** तदर्थग्रहणपरिणामे **कथमनेन**-विज्ञानेन **अर्थो न गृहीतो नाम?** किन्तु गृहीत एव। कुत इत्याह-**तद्वेदनस्यैव**, प्रक्रमात् स्वाकारवेदनस्यैव, **तद्रूपत्वात्**-अर्थग्रहणरूपत्वात्। एतदेव भावयति-**तत्स्वाकारवेदनमेव**-विज्ञानस्वाकारवेदनमेव तस्मादर्थ[3]**ग्रहणरूपं तथाप्रतीतेरिति**।

**आह-वचनमात्रमेतत्**-अनन्तरोदितम्। कुत इत्याह-**बोधमात्रतत्त्वस्य**-बोधमात्रस्वरूपस्य **स्वभावनियतात्मनः** तदतिरिक्तायोगेन **अर्थानुपरक्तस्य** अर्थेनानुपरक्तमर्थानुपरक्तं तस्यैवम्भूतस्य सतो विज्ञानस्य **तद्ग्रहणरूपत्वा-**

---

१-२ नवमे पृष्ठे दशमे च। ३ 'यस्मादर्थं०' इति क-पाठ।

( मूलम् )

ङ्गादिति, न, बोधमात्रतत्त्वस्यैव तथास्वभावत्वात्, अर्थक्षयोपशमसन्निधानतः तथा तथा चैतन्यविक्रियोपपत्तेः, स्वस्वभावनियतात्मकत्वेऽप्यस्योक्तार्थाविरोधात्, तच्छक्तिवैचित्र्यात्, तथाविधतच्छक्तेरेव च तत्त्वतोऽर्थोपरागत्वात्, अधिकयोगाभावेनान्यथा तदसिद्धेः। इत्यर्थक्षयोपशमसन्निधानस्यैव नियमहेतुत्वोपपत्तेः अतिप्रसङ्गदोषोऽप्यनवकाश एव, तथाविशिष्टविच्छिन्नार्थग्रहणरूपविज्ञानवेदनाच्च। इति विशिष्टचैतन्यविक्रियाज्ञानपक्षे न कश्चिद् दोषः परिभाव्यतामेतत्॥

स्यादेतदसत्यप्यर्थे स्वप्नादिषु तथाविशिष्टविच्छिन्नार्थग्रहणरूप-

---

( स्वो० व्या० )

योगात्–अर्थग्रहणरूपत्वायोगात्। अयोगश्च[1] नियमहेत्वनुपपत्तेर्नीलाद्यर्थग्रहणरूपतया सर्वथाऽसंस्पर्शितयेति भावः। अनुपपत्तिमेवाह–अतिप्रसङ्गादिति। अर्थानुपरक्तमपि नीलार्थग्रहणरूपं न पीतार्थग्रहणरूपमित्यतिप्रसङ्गः। एतदाशङ्क्याह–न, बोधमात्रतत्त्वस्यैव। किमित्याह–तथास्वभावत्वात्–अर्थग्रहणस्वभावत्वात्। तथास्वभावत्वं च अर्थक्षयोपशमसन्निधानतः। अर्थश्च क्षयोपशमश्च तयोः सन्निधानं ततः। तथा तथा–चित्ररूपतया चैतन्यविक्रियोपपत्तेः स्वस्वभावनियतात्मत्वेऽप्यस्य–विज्ञानस्य उक्तार्थाविरोधात्, तद्वेदनस्यैव तद्रूपत्वाविरोधादित्यर्थः। अविरोधश्च तच्छक्तिवैचित्र्यात्, प्रक्रमाद् बोधमात्रतत्त्वस्यैव शक्तिवैचित्र्यात् तथाविधतच्छक्तेरेव च–विशिष्टाया बोधमात्रतत्त्वशक्तेरेव च तत्त्वतः–परमार्थेन अर्थोपरागत्वात्। अधिकयोगाभावेन–उपरञ्जकसम्बन्धाभावेन अन्यथा तदसिद्धेः–अर्थोपरागत्वासिद्धेः। नेति सर्वत्र क्रियायोगोऽनुवर्तते, न, बोधमात्रतत्त्वस्यैव[2] तथास्वभावत्वादित्यतः। इति–एवं अर्थक्षयोपशमसन्निधानस्यैव नियमहेतुत्वोपपत्तेः कारणात् अतिप्रसङ्गदोषोऽप्यनवकाश एव य उक्तः पूर्वम्[3], तथाविशिष्टविच्छिन्नार्थग्रहणरूपविज्ञानवेदनाच्च कारणात्। इति–एवं विशिष्टचैतन्यविक्रियाज्ञानपक्षे। किमित्याह–न कश्चिद् दोष इति परिभाव्यतामेतत्–अनन्तरोदितमिति॥

स्यादेतदित्यादि। स्यादेतत्–अथैवं मन्यसे–असत्यप्यर्थे स्वप्नादिषु, 'आदि'-शब्दात् तैमरिककेशग्रहः, तथा–बहिर्मुखावभासितया विशिष्टविच्छिन्नार्थ-

---

१ 'अयोगो नियम०' क-पाठः। २ 'मात्रत्वस्यैव' इति ङ-पाठः। ३ तमे पृष्ठे।

( मूलम् )

**विज्ञानवेदनोपपत्तेर्यत्किञ्चिदेतदिति परिभावितमेव । न परिभावितम्, तत्तदाभासविवेकानवगतेः । इह यदसत्यप्यर्थे स्वप्नादिज्ञानं तत्तदाभासम्, अतोऽन्यद् यथार्थमेव, अन्यथा भ्रान्तेतरव्यवस्थाऽयोगः, भेदकहेत्वभावात् । स्यादेतत् पृथग्जनज्ञानमखिलं भ्रान्तमेव, ग्राह्यग्राहकाकारोपप्लवरूपत्वात्, अभ्रान्तं तु तद्विकलं योगिनामिति न भ्रान्तेतरव्यवस्थाऽयोगो भेदकहेत्वभावश्च । एतदप्यसत्, प्रमाणाभावात्, योगिज्ञानप्रमाणत्वे तद्यथोक्तत्वाभावः, ग्राहकाकाराद्यापत्तेः, तद्विकलतत्तदवगमायोगात् । अचिन्त्या योगिनां शक्तिरित्य-**

---

( स्वो० व्या० )

**ग्रहणरूपविज्ञानवेदनोपपत्तेः यत्किञ्चिदेतत्**–अनन्तरोदितमिति **परिभावितमेव** । एतदाशङ्क्याह–**न परिभावितम्** । कुत इत्याह–**तत्तदाभासविवेकानवगतेः** । तदित्यनेनाधिकृतयथार्थज्ञानग्रहः, तदाभासत्वं–यथार्थं स्वप्नादिज्ञानं अनयोर्विवेकानवगतेः कारणान्न परिभावितमिति । एतद्भावनायैवाह–**इहे**त्यादि । इह–लोके **यदसत्यप्यर्थे** बाह्ये **स्वप्नादौ**–स्वप्ने तिमिरभावे च **ज्ञानं** भवति, **तत्तदाभासं**–यथार्थाभासम्, अयथार्थं, भ्रान्तमित्यर्थः । **अतः**–तदाभासात् **अन्यद्** यत् सत्यर्थे जायते तिमिराद्यभावे च तद् **यथार्थम्**–अभ्रान्तमेव नियमतः । **अन्यथा**–एवमनभ्युपगमे किमित्याह–**भ्रान्तेतरव्यवस्थाऽयोगः**–भ्रान्ताभ्रान्तव्यवस्थाऽयोगः । कुत इत्याह–**भेदकहेत्वभावात्** । पराभिप्रायमाह **स्यादेतदि**त्यादिना । स्यादेतत्–**पृथग्जनज्ञानं**–तत्त्वपृथग्भूतसत्त्वज्ञानं **अखिलं भ्रान्तमेव**–एकान्तेन । कुत इत्याह–**ग्राह्यग्राहकाकारोपप्लवरूपत्वात्**, असदभिनिवेशवदिति कृत्वा । **अभ्रान्तं** पुनर्ज्ञानं **तद्विकलं**–ग्राह्यग्राहकाकारोपप्लवरूपविकलं **योगिनां**–वीतरागाणा**मिति**–एवं **न भ्रान्तेतरव्यवस्थाऽयोगः**, किन्तु योग एव, **भेदकहेत्वभावश्च** न, किन्तु भेदकहेतुरपि ग्राह्याद्युपप्लवरूपोऽस्त्ये-वेति अभिप्रायः । एतदाशङ्क्याह–**एतदपि**–अनन्तरोदित**मसत्**–अशोभनम् । कुत इत्याह–**प्रमाणाभावात्** । नाधिकृतार्थव्यवस्थाकारि तात्त्विकं प्रमाणमस्तीत्यर्थः । योगिज्ञानं प्रमाणमित्यारेकानिरासायाह–**योगिज्ञानस्य प्रमाणत्वं** तस्मिन्नभ्युपगम्यमाने । किमित्याह–**तद्यथोक्तत्वाभावः** तस्य–योगिज्ञानस्य यथोक्तत्वाभावः । कुत इत्याह–**ग्राहकाकाराद्यापत्तेः** । आपत्तिमेवाह–**तद्विकलस्य**–ग्राहकाकारादि-

---

१ 'अथ च' इति क-पाठ ।

(मूलम्)

वगम इति चेत्, नात्र प्रमाणम्, अन्यत्र पक्षपातात्। अपि च येन तेन प्रकारेणैतदवगमेऽस्य च तथाभावगतावर्थतो ग्राहकाकारादयो नियमेन, अन्यथो[1]भयायोगा[2]दिष्टासिद्धिः। बोधमात्रतत्त्ववादिनश्च सर्वत्र तद्भावे तदधिकाभावेनोपप्लवासिद्धेश्चेति प्रपञ्चयिष्यामः। कथमनयोर्भ्रान्तेतरभेदावसायः? सत्क्षयोपशमादितः अनाविलानुभवसंवादादेराविद्वदङ्गनादिलोकसिद्ध एवेति। एवं च यदुक्तम्[3]–'अथार्थाकारं जडरूपता[4]ऽस्य, अन्यथा तदाकारत्वाभावः, अनाकारत्वे तु प्रतिकर्मव्यवस्थाऽनुपपत्तिः, निबन्धनाभावात्, तत्सत्तामात्रस्य सर्व-

(स्वो० व्या०)

विकलस्य तत्तदवगमायोगात् तयोः–अधिकृतज्ञानयोः भ्रान्तेतरत्वावगमायोगात्। अचिन्त्या योगिनां शक्तिरिति कृत्वा अवगम इति चेत्, अधिकृतज्ञानयोर्भ्रान्तेतरभावस्येति सामर्थ्यम्। एतदाशङ्क्याह–नात्र–अनन्तरोदिते वस्तुनि प्रमाणम्, अन्यत्र पक्षपातात्–पक्षपातं मुक्त्वा। अभ्युच्चयमाह अपि चेत्यादिना। अपि च येन तेन प्रकारेण–अचिन्त्यया चिन्त्यया वा शक्त्या एतदवगमे, प्रक्रमादधिकृतज्ञानयोर्भ्रान्तेतरत्वावगमे [5]योगिज्ञानेन अस्य च–योगिज्ञानस्य तथाभावगतौ–अधिकृतज्ञानयोर्भ्रान्तेतरव्यवस्थाकारित्वावगताविति प्रक्रमः। किमित्याह–अर्थतः–सामर्थ्याद् ग्राहकाकारादयो नियमेन–अवश्यन्तया येन केनचित् प्रकारेण गृह्णाति तदसावस्य ग्राहकाकारः, येन च तदेवम्भूतमिति ज्ञायते स पुनर्ग्राह्याकार इति। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–अन्यथा–एवमनभ्युपगमे उभयायोगात् तेन तदवगमस्तत्तथाभावावगमश्चेत्युभयं तदयोगादिष्टासिद्धिर्भवत इति भावनीयम्। अभ्युच्चयमाह–बोधमात्रतत्त्ववादिनश्च–वादिनः सर्वत्र भ्रान्तेतरज्ञानयोस्तद्भावे सति–बोधमात्रभावे सति। किमित्याह–तदधिकाभावेन हेतुना उपप्लवासिद्धेश्च इष्टासिद्धिः इति प्रपञ्चयिष्याम ऊर्द्धम्। पर आह–कथमनयोः–यथार्थायथार्थयोरधिकृतज्ञानयोर्भ्रान्तेतरभेदावसायः–भ्रान्ताभ्रान्तविशेषावगमः?। अत्रोत्तरम्–सत्क्षयोपशमादितः कारणात्। 'आदि'-शब्दाच्छुभोदयग्रहः अनाविलानुभवसंवादादेः, दृढानुभवसंवादादेरित्यर्थः। आविद्वदङ्गनादिलोकसिद्ध [6]एव तयोर्भ्रान्तेतरभेदावसाय इति। एवं च सति

१ 'नान्यथो' इति ग-पाठः। २ 'दिष्टसिद्धिः' इति ग-पाठः। ३ द्रष्टव्यं दशमं पृष्ठम्। ४ 'रूपता स्यादन्यथा तथाकार०' इति ग-पाठः। ५ 'योगिज्ञानयोर्भ्रान्तेतरत्वागमे' इत्यधिकः क-पाठः। ६ 'एवानयोर्भ्रान्तेतर०' इति ङ-पाठः।

(मूलम्)

**त्राविशेषात्, प्रत्यासत्तेरनिबन्धनत्वात् तस्य सुप्तादि[1]कल्पत्वादिति, एतदुपन्यासमात्रफलमेव, तथाऽर्थाकारताऽनभ्युपगमात्, यथाऽभ्युपगमं तु जडरूपतासिद्धेः, तदर्थग्रहणपरिणामस्यैवार्थाकारत्वात्, अन्यथा तदनुपपत्तेः, अर्थलेशस्य कस्यचित् तत्रानुप्रवेशायोगादिति निर्लोठितमिदं सर्वज्ञसिद्धौ। यदा च तस्यैवार्थग्रहणशक्तिरर्थाकारस्तदा न तदाकारत्वाभाव इति कथं प्रतिकर्मव्यवस्थाऽनुपपत्तिः? निबन्धनोपपत्तेः, तयोरेव तत्स्वभावत्वेन तच्छक्तिविशेषभावादिति। यद् यद् ग्रहणशक्तिमत् तदेव तद्ग्राहकमितरदेव च तद्ग्राह्यमिति न त[2]त्सत्तामात्रस्य [3]सर्वत्राविशेषः तत्तथास्वभावत्वेन**

(स्वो॰ व्या॰)

**यदुक्तं** पूर्वपक्षग्रन्थे[4]–**अथार्थाकारमि**त्यादि यावत् **तस्य सुप्तादिकल्पत्वादिति, एतत्**–पूर्वपक्षग्रन्थोक्तम्। किमित्याह–**उपन्यासमात्रफलमेव,** निरर्थकमित्यर्थः। कथमित्याह–**तथा**–तेनोक्तदूषणप्रकारेण। किमित्याह–**अर्थाकारताऽनभ्युपगमात्** ज्ञानस्य। **यथाऽभ्युपगमं तु**–यथाऽभ्युपगमं पुनरर्थाकारतायाः तथा **जडरूपतासिद्धेः,** ज्ञानस्यैवेति प्रक्रमः। एनामेवाह–**तदर्थग्रहणपरिणामस्यैव** तस्येति विज्ञानस्य अर्थग्रहणपरिणामस्तस्यैव **अर्थाकारत्वाद्** विज्ञानस्य **अन्यथा**–एवमनभ्युपगमे **तदनुपपत्तेः**–अर्थाकारताऽनुपपत्तेर्विज्ञानस्य। अनुपपत्तिश्च **अर्थलेशस्य कस्यचित् तत्र**–विज्ञानेऽ**नुप्रवेशायोगात्।** न च तच्छून्यस्यार्थग्रहणपरिणामादृते तदवस्थस्य ज्ञानस्यार्थाकारता नामेति भावनीयमेत**दिति निर्लोठितमिदं सर्वज्ञसिद्धौ। यदा च तस्यैव**–विज्ञानस्य **अर्थग्रहणशक्तिः** स्वगतैवाऽ**र्थाकारस्तदा न तदाकारत्वाभावः**–अर्थाकारत्वाभाव **इति**–एवं **कथं प्रतिकर्मव्यवस्थाऽनुपपत्तिः?** किन्तूपपत्तिरेव। कथमित्याह–**निबन्धनोपपत्तेः** तदर्थग्रहणशक्तिरेव निबन्धनम्। एतदेवाह **तयोरेवे**त्यादिना। तयोरेव, प्रक्रमात् ज्ञानार्थयोः **तत्स्वभावत्वेन** हेतुना **तच्छक्तिविशेषभावात्** तयोः–ज्ञानार्थयोः शक्तिविशेषभावात्। भावार्थमाह **यद् य**दित्यादिना। यज्ज्ञानं **यद् ग्रहणशक्तिमत्** नीलाद्यपेक्षया **तदेव**–ज्ञान **तद्ग्राहकं**–नीलादिग्राहक **इतरदेव च**–नीलादि **तद्ग्राह्यं** तस्य–ज्ञानस्य विशिष्टस्यैव ग्राह्य**मिति**–एव **न तत्सत्ता-**

१ 'कल्पवादिति' इति क–पाठ। २ 'तत्तत्सत्ता' इति क–पाठ। ३ 'सर्वथा विरोध तत्तथा॰' इति क–पाठ। ४ दशमे पृष्ठे।

( मूलम् )

**प्रत्यासत्तेः सनिबन्धनत्वात् । इति बोधस्याविशेषतः सुसकल्पत्वमसिद्धम्, अर्थक्षयोपशमसन्निधानजस्योक्तवद् वैशिष्ट्यसिद्धेरिति ॥**

**स्यादेतदेवमप्यात्ममात्रवेदिना व्यतिरिक्तवेदनमयुक्तमेव । सत्यमयुक्तं तद्वत् तद्भावेन, न पुनर्ज्ञप्त्या, ज्ञानान्तराज्ञानप्रसङ्गात् । एवं च न सन्तानान्तरावगम इति चिन्त्यतां देशनादेर्विषयः, यथा**

---

( स्वो० व्या० )

**मात्रस्य**–ज्ञानसत्तामात्रस्य । किमित्याह–**सर्वत्राविशेषः**, किन्तु विशेष एव । कथमित्याह–**तत्तथास्वभावत्वेन** तयोरेव–ज्ञानार्थयोर्विशिष्टयोस्तथास्वभावत्वेन–उक्तप्रकारप्रतिनियतस्वभावत्वेन हेतुना **प्रत्यासत्तेः** कारणात् **सनिबन्धनत्वात् । इति**–एवं **बोधस्याविशेषतः सुसकल्पत्वमसिद्धम्, अर्थक्षयोपशमसन्निधानजस्य** एव **उक्तवत्**–यथोक्तं तथा **वैशिष्ट्यसिद्धेरिति ॥**

**स्यादेतदेवमपि**–उक्तनीत्या **आत्ममात्रवेदिना**, ज्ञानेनेति प्रक्रमः, **व्यतिरिक्तवेदनमयुक्तमेव**, व्यतिरिक्तश्चार्थ इति हृदयम् । एतदाशङ्क्याह–**सत्यमयुक्तम् ।** कथमित्याह–**तद्वत्**–ज्ञानवत् **तद्भावेन**–ज्ञानसत्तयैव, **न पुनर्ज्ञप्त्या**–ज्ञानेन । अयुक्तं व्यतिरिक्तवेदनम् । कुत इत्याह–**ज्ञानान्तराज्ञानप्रसङ्गात् । एवं च** ज्ञानान्तराज्ञाने सति **न सन्तानान्तरावगम इति**–एवं **चिन्त्यतां देशनादेर्विषयः**, देशनाज्ञानस्य प्रवृत्त्यादिज्ञानस्य चेत्यर्थः । **यथा**

---

( विवरणम् )

(१६-१७) **तद्वत्–ज्ञानवत् तद्भावेन–ज्ञानसत्तयैव, न पुनर्ज्ञप्त्ये**[1]ति । यथाहि–ज्ञानं स्वात्मानं तद्भावेन–ज्ञानसत्तयैव ज्ञायमानाकारैकत्वपरिणत्ये[2]त्यर्थः, परिच्छिनत्ति, तथैव यदि[3] बाह्यमर्थं परिच्छिन्द्यात्[4], स्यात् तदाऽयं भवदुक्तो दोषः । यदा[5] तु ज्ञप्त्या घटादिपदार्थप्रतिबद्धज्ञायमानत्वधर्मलक्षणया अर्थपरिच्छेदं करोति ज्ञानं, तदोपपद्यत एव स्वात्मवेदिनोऽपि तस्य बाह्यार्थवेदनमिति ॥

(१९) **देशनाज्ञानस्य**[6] **चे**(?)ति । देशनायां ज्ञानं देशनाज्ञानं कथं[7] कस्य यद् भवति यद्धि यस्मै च दिश्यते यच्च दिश्यते तयोर्ज्ञाने सति सम्भवति । यदा तु ज्ञानं सन्तानान्तरावगमं प्रति निर्व्यापारमेव, तदा कथं[8] देशना ? तथा प्रदर्शकप्रवर्त्तकप्रापकज्ञानानामपि को विषयः परसन्तानानवगमे सति इति सम्यक् पर्यालोच्य मुच्यतां कदाग्रहः ॥

---

१ 'तथा' इति **क**–पाठः । २ 'णतेत्यर्थः' इति **ख–च**–पाठः । ३ 'यदि वा स्वमर्थं इति **ख**–पाठः । ४ 'परिच्छिन्द्या स्यात्' इति **च**–पाठः । ५ 'यदाऽनुज्ञप्त्या' इति **क**–पाठः । ६ 'ज्ञानस्य वेदेति' इति **च**–पाठः । ७ 'कथयस्य यद्' इति **ख**–पाठः; **च**–पाठस्तु 'कथय स्वयद्भवद्धि तद्धियस्यैव दिश्यते' । ८ 'देशानां तथा' इति **क**–पाठः ।

( मूलम् )

**कथञ्चित् तदवगमे कः खलु तथैवार्थे तद्विरोधः?। अर्थस्यैवाभावादिति चेत्, कुतस्तदभावनिश्चयः?। ज्ञानानुभवादिति चेत्, केन ज्ञानान्तरानुभवः?। ज्ञानत्वात् तेनैवेति चेत्, किमत्र भवतः प्रमाणम्?। लोकानुभव एवेति चेत्, नासौ नार्थेऽपीति चिन्त्यताम्। न चार्थो युक्तिबाधित इति न्याय्यम्, तथाविधयुक्त्यभावात्। न चाभिहिता एव तास्तथाविधा इति, तासां जाति[1]युक्तित्वात्। न चैतद् वचनमात्रमेव, तद्भावस्य दर्शितत्वात्। न चैवं भूताज्ञानेऽपि न सन्ति, प्रायः सर्वत्रगत्वादिति। तच्च वक्ष्यामः॥**

**एतेन "सहोपलम्भनियमादभेदो नील-तद्धियोः द्विचन्द्रादिवत्"**

---

( स्वो० व्या० )

**कथञ्चित्**–[2]तत्स्वभावत्वादिना **तदवगमे**–सन्तानान्तरावगमे **कः खलु तथैव**–तेनैव प्रकारेण **अर्थे**–रूपादौ **तद्विरोधः**–अवगमविरोधः?। **अर्थस्यैवाभावात् इति चेत्** अवगमविरोधः। एतदाशङ्क्याह–**कुतस्तदभावनिश्चयः**–अर्थाभावनिश्चयः? **ज्ञानानुभवात्** एव **इति चेत्**, न तद्वदर्थोऽनुभूयत इत्यभिप्रायः। एतदाशङ्क्याह–**केन ज्ञानान्तरा[3]नुभ[4]वः**, केनचित् सन्तानान्तरवर्तिन इति भावः। **ज्ञानत्वात् तेनैवेति चेत्**, एतदपि स्वसंविदितमेवेति भावना। एतदाशङ्क्याह–**किमत्र भवतः प्रमाणम्?** न किञ्चित् तत्त्वनीत्येति भावः। **लोकानुभव एवेति चेत्** प्रमाणम्। एतदाशङ्क्याह–**न असौ**–लोकानुभवो **नार्थेऽपीति चिन्त्यताम्**। किं तर्हि? ज्ञानान्तरे इवास्त्येव। इहैव भङ्ग्यन्तरमाह–**न चार्थो युक्तिबाधित इति न्याय्यम्**, वच इति शेषः। कुत इत्याह–**तथाविधयुक्त्यभावात्**–अर्थबाधिकाया युक्तेः अभावात्। **न चाभिहिता एव** पूर्वं **ताः**–युक्तयः **तथाविधाः**–अर्थबाधिका इति। कुत इत्याह–**तासां जातियुक्तित्वाद**भिहितयुक्तीनाम्। **न चैतद् वचनमात्रमेव** तासां जातियुक्तित्वम्। कुत इत्याह–**तद्भावस्य**–जातियुक्तिभावस्य **दर्शितत्वात्**। **न चैवं भूताज्ञानेऽपि न सन्ति** जातियुक्तयः, किन्तु सन्त्येव। कुत इत्याह–**प्रायः सर्वत्रगत्वात्** जातियुक्तीना**मिति**। **एतच्च**–सर्वत्रगत्व जातियुक्तीनां [5]**वक्ष्याम** ऊर्ध्वमिति॥

**एतेनेत्यादि**। एतेन–अनन्तरोदितेन ग्रन्थेन **सहोपलम्भनियमात्** हेतोः

---

१ 'युक्तत्वात्' इति **ग**–पाठ। २ 'तत्तत्स्वभाव०' इति **ङ**–पाठ। ३ 'रानुभवेन केन' इति **क**-पाठ। ४ 'भाव न केन०' इति **ङ**–पाठ। ५ 'जात्या' इत्यधिको **ङ**–पाठ।

(मूलम्)

तथा

"दर्शनोपाधिरहितस्याग्रहात् तद्ग्रहे ग्रहात्।
दर्शनं नीलनिर्भासं नार्थो बाह्योऽस्ति केवलः॥"[१]

इत्याद्यपि यदुच्यते परैस्तत् प्रतिक्षिप्तमेव, विच्छिन्नार्थग्रहणस्वभावसंवेदनवेदनपक्षेऽस्यानवकाशत्वात्। विच्छिन्नार्थग्रहणमर्थप्रत्यक्षीकरणं तत्स्वभावविज्ञानानुभवे[२] सति अर्थप्रत्यक्षतयोभयभावसिद्धेरनवकाशत्वमिति॥

किञ्चेदमयुक्तिसङ्गतमेव। तथाहि–अत्र नील-तद्धियोरभेदः साध्यः सहोपलम्भनियमेन। सोऽयमनयोः सतोरसतोर्वा साध्येत। सत्त्वे

(स्वो० व्या०)

अभेदो नील-तद्धियोः–नील-नीलबुद्ध्योर्द्विचन्द्रादिवदिति निदर्शनं, तथा दर्शनोपाधिरहितस्य–दर्शनविशेषणशून्यस्य अग्रहात् कारणात् तद्ग्रहे–दर्शनोपाधिग्रहे ग्रहात्। किमित्याह–दर्शनं नीलनिर्भासं–नीलाकारं नार्थो बाह्योऽस्ति नीलादिः केवल इत्याद्यपि यदुच्यते परैः–विज्ञानवादिभिः तत् प्रतिक्षिप्तमेव–निराकृतमेव। कुत इत्याह–विच्छिन्नार्थग्रहणस्वभावसंवेदनवेदनपक्षेऽस्य परोदितस्य। किमित्याह–अनवकाशत्वात् कारणात्। तत्र विच्छिन्नार्थग्रहणमर्थप्रत्यक्षीकरणं तत्स्वभावविज्ञानानुभवे सति–अर्थप्रत्यक्षतास्वभावविज्ञानानुभवे सति अर्थप्रत्यक्षतया कारणेन उभयभावसिद्धेः–अर्थज्ञानद्वयसत्तासिद्धेः। किमित्याह–अनवकाशत्वमनन्तरोदितस्येति भावनीयम्॥

किञ्चेदमित्यादि। किञ्चेदं–संवेदनमनन्तरोदितं अयुक्तिसङ्गतमेव। कथं न युक्तिसङ्गतमित्याह–तथाहीत्यादि। तथाहि–अत्र–अनन्तरोदिते नील-तद्धियोरभेदः साध्यः। केन हेतुनेत्याह–सहोपलम्भनियमेन। सोऽयम्–अभेदः अनयोः–नील-तद्धियोः सतोः–विद्यमानयोरसतोर्वा साध्येत। किञ्चातः?

(विवरणम्)

(१३) द्विचन्द्रादिवदिति निदर्शनमिति। यद् येन सहोपलभ्यते तत् तस्मादभिन्नमभ्युपेयं यथा चन्द्रद्वितयम्, शशधरयुग्मज्ञानात्। उपलभ्यते च नीलादिः पदार्थो नीलादिबुद्ध्या सहेति स्वभावहेतुः॥

(१४) दर्शनविशेषणशून्यस्येति। दर्शनं ज्ञानं तदेव विशेषणम्, ज्ञेयस्य विशेषकत्वात्, तेन शून्यस्य। ज्ञानलक्षणे प्रतीयमाने एवार्थः प्रतीयत इत्यर्थः॥

१ अनुष्टुप्। २ 'भावे' इति क-पाठः।

( मूलम् )

**न सतः सदन्तरापत्तिरित्यभेदासिद्धिः। असत्त्वान्यतरसत्त्वे च वस्तुधर्मत्वादभेदस्येति। नीला धीरेवेति प्रतिज्ञार्थे[1] इति चेत्, अन्यस्य तद्भावे को विरोधः? । असतस्तद्भावानुपपत्तिरिति चेत्, स्यादेतत् तदसत्त्वसिद्धौ। अननुभवात् तत्सिद्धिरेवेति चेत्, भवेदियं ध्यन्तराभावे, तत् स्वानुभववदेवेति चेत्, अन्योऽपि स्वसत्तावानेव।**

( स्वो० व्या० )

उभयथाऽपि दोष इत्याह–**सत्त्वे** नील-तद्धियोः किमित्याह–**न सत** एकस्य **सदन्तरापत्तिरिति** कृत्वा। किमित्याह–**अभेदासिद्धिः**। न हि सत् सदन्तरं भवति। द्वितीयं विकल्पमधिकृत्याह–असत्त्वं चान्यतरसत्त्व च, नील-तद्धियोरिति प्रक्रमः, **असत्त्वान्यतरसत्त्वं** तस्मिंश्चाभेदासिद्धिः। कुत इत्याह–**वस्तुधर्मत्वादभेदस्येति**। तन्नायमुभयान्यतराभावे। **नीला धीरेवेति प्रतिज्ञार्थः** अभेदार्थः। **इति चेत्**, एतदाशङ्क्याह–**अन्यस्ये**त्यादि। अन्यस्य–धियो भिन्नस्य **तद्भावे**–नीलभावे **को विरोधः?** न कश्चिदित्यर्थः। **असत** इत्यादि। असतः अन्यस्य **तद्भावानुपपत्तिः**–नीलत्वानुपपत्तिः। **इति चेत्**, एतदाशङ्क्याह–**स्यादेत**दित्यादि। स्यादेतत्–अनन्तरोक्त **तदसत्त्वसिद्धौ** धियोऽन्यस्यासत्त्वसिद्धौ। **अननुभवा**दिति। अननुभवात् कारणाद् धियोऽन्यस्येति प्रक्रमः, **तत्सिद्धिरेव**–तदसत्त्वसिद्धेः सिद्धिरेव। **इति चेत्**, एतदाशङ्क्याह–**भवेदि**त्यादि। **भवेदियं**–तत्सिद्धि**र्ध्यन्तराभावे**, अधिकृतधियोऽन्या धीः ध्यन्तरं तदभाव इत्यर्थः, तदपि नानुभूयत एवेति कृत्वा। **त**दित्यादि। तत्–ध्यन्तरं **स्वानुभववदेव** ध्यन्तरत्वात्। **इति चेत्**, एतदाशङ्क्याह–**अन्योऽपी**त्यादि। अन्योऽपि धियः [2]नीलादिः।

( विवरणम् )

(१२) **तस्मिंश्चाभेदासिद्धिरि**ति। यदि हि नीलस्य बाह्यवस्तुनोऽसत्त्वमभ्युपगम्य नीलधिया सहाभेदः साध्यते, तदा न सिद्ध्यत्येवासौ, वस्त्ववस्तुनोरभेदासिद्धेः। न हि खरविषाणस्य केनचिद् घटादिना पदार्थेन सहाभेदः क्वापि साध्यत इति ॥

(१३) **तन्नायमुभयान्यतराभावे** इति। तत्–तस्मान्नैवायम्–अभेदो भवति। कस्मिन् सतीत्याह–उभयस्य–[3]नीलविषयनीलबुद्धिलक्षणस्य युग्मस्य मध्यादन्यतरस्य–एकस्य कस्यचिदभावे–तुच्छत्वे सति ॥

१ 'प्रतिज्ञार्थत्वात्' इति क–पाठ। २ 'नीलादि' इति ङ–पाठ। ३ 'नीलविभ्रमनील०' इति ख–पाठ।

(मूलम्)

**न च स्वात्मना अननुभवाविशेषे तच्चेतनाचेतनत्वे तेन तत्त्वव्यवस्थितौ कथञ्चिदाधिक्येनाङ्गतां प्रतिपद्येते, परोक्षत्वाविशेषात् स्वानुमानाप्रवृत्तेः तल्लक्षणायोगात् सर्वध्यन्तराणां तत्तुल्यतासिद्धेः, अतुल्यानुमितौ चान्यस्मिन्नप्यविरोधः सत्त्वादिना [1]कथञ्चित् तथातुल्यत्वोपपत्तेः ॥**

**[2]परसिद्धभेदव्यवच्छेदः साध्यार्थ इत्यप्ययुक्तम्, विकल्पानुपपत्तेः। स ह्यस्य प्रमाणसिद्धोऽप्रमाणसिद्धो वा स्यात्। प्रमाणसिद्धत्वे**

(स्वो० व्या०)

किमित्याह–**स्वसत्तावानेव** पदार्थत्वादिति भावना। एतदेव द्रढयन्नाह–**न चे**त्यादि। **न च स्वात्मना**–विवक्षितैकविज्ञानापेक्षया **अननुभवाविशेषे** सति **तयोः**–ध्यर्थयोः **चेतनाचेतनत्वे** स्वगते **तेन**–स्वमात्रवेदिना तदनुभवरहितेन ज्ञानेन **तत्त्वव्यवस्थितौ** सत्यां, ध्यर्थयोरिति प्रक्रमः, **कथञ्चित्**–केनचित् प्रकारेण **आधिक्येन**–विशिष्टतया **अङ्गतां प्रतिपद्येते** चेतनाचेतनत्वे च। कुत इत्याह–**परोक्षत्वाविशेषात्**। ध्यर्थयोरिति ज्ञानं हि परस्य स्वसंवेदनरूपम्। न च तद् ध्यन्तरं प्रत्यक्षीकरोति नाप्यर्थान्तरम्। एवं च तेन [3]तत्तत्त्वव्यवस्थितौ तच्चेतनाचेतनत्वे अनुपयोगिनी एवेति भावनीयम्। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**स्वानुमानाप्रवृत्तेः** [4]ध्यन्तरत्वव्यवस्थितावप्रवृत्तिश्च **तल्लक्षणायोगात्**–अनुमानलक्षणायोगात् पक्षधर्मत्वाद्यग्रहणेन। न च सामान्यतो दृष्टमात्रादतोऽधिकृतज्ञानवदन्यदपि यदस्ति तच्चेतनमेवेति भवति तत्तत्त्वव्यवस्थितिः। कुत इत्याह–**सर्वध्यन्तराणां**–सन्तानान्तरवर्तिनां **तत्तुल्यतासिद्धेः**–अधिकृतज्ञानतुल्यतासिद्धेः स्वानुमानेनेति। **अतुल्यानुमितौ च** नीलाद्यपेक्षया बोधमात्रसामान्यतः। किमित्याह–**अन्यस्मिन्नपि,** प्रक्रमाद् ध्यन्तरादन्यस्मिन्नर्थेऽपीत्यर्थः, **अविरोधः**। अनुमितेः निबन्धनमाह–**सत्त्वादिना**। 'आदि'शब्दाज्ज्ञेयत्वादिग्रहः, **कथञ्चित्**–केनचित् प्रकारेण **तथा**–समानबुद्धिजनकत्वेन **तुल्यत्वोपपत्तेः** इति ॥

पक्षान्तरमधिकृत्याह–**परे**त्यादि। पर**प्रसिद्धभेदव्यवच्छेदो** नील-तद्धियोः **साध्यार्थ इत्यपि** परोत्तर**मयुक्तम्**। कुत इत्याह–**विकल्पानुपपत्तेः**। इमामेवाह **स ही**त्यादिना। सः–भेदो नील-तद्धियोः यस्मा**दस्य**–परस्य बाह्यार्थवादिनः

१ 'कथञ्चित् तुल्य०' इति ग–पाठः। २ 'परप्रसिद्धभेदव्यवच्छेदोऽसाध्यार्थ' इति क–पाठः।
३ 'तत्त्वव्यव०' इति ङ–पाठः। ४ 'ध्यन्तरतत्त्वव्यव०' इति ङ–पाठः।

(मूलम्)

**कथं तद्व्यवच्छेदसिद्धिः? । सिद्धौ वा प्रमाणसिद्धत्वम् । अप्रमाणसिद्धस्तु न सिद्ध एव परस्यापि । किमस्य व्यवच्छेदसाधनेन? ॥**

**स्यादेतत् प्रमाणसिद्ध इति विभ्रमापोहः सङ्गरार्थः । अत्राप्येतदनिवृत्तिरेव न्यायानुपपत्तिश्च बोधमात्रतत्त्ववादिनो विभ्रमायोगात् भेदकाभावेन कालुष्यासिद्धेः । एवं सन्न्यायतो ग्रहणाभावात् प्रत्यनीकानवगमेनापोहानुपपत्तेरित्यसुन्दरः पक्षः, प्रत्यक्षविरुद्धादिदोष-**

(स्वो० व्या०)

**प्रमाणसिद्धः**—प्रत्यक्षादिप्रमाणप्रमितः **अप्रमाणसिद्धो वा**—असत्कल्पनारूपः **स्यात्** । किञ्चातः ? उभयथाऽपि दोष इत्याह—**प्रमाणसिद्धत्वे**, प्रक्रमान्नील-तद्धियोर्भेदस्य **कथं तद्व्यवच्छेदसिद्धिः**, बोधमात्रस्यापि व्यवच्छेदसिद्ध्यापत्तेः । **सिद्धौ वा**—तद्व्यवच्छेदस्य **प्रमाणसिद्धत्वं** कथं तद्भेदस्य ? । **अप्रमाणसिद्धस्तु** नील-तद्धियोर्भेदः । किमित्याह—**न सिद्ध एव परस्यापि**—बाह्यार्थवादिनः । **किमस्य व्यवच्छेदसाधनेन?** न किञ्चिदित्यर्थः ॥

**स्यादेत**दित्यादि । अथैवं मन्यसे—**प्रमाणसिद्धो**ऽधिकृतभेद **इति विभ्रमापोहः सङ्गरार्थः**—प्रतिज्ञार्थः, अभेदो नील-तद्धियोरिति । एतदाशङ्क्याह—**अत्रापी**त्यादि । अत्रापि—पूर्वपक्षे **एतस्य**[1]—अनन्तरोदितस्य **अनिवृत्तिरेव** । स ह्यस्य विभ्रमः प्रमाणसिद्धोऽप्रमाणसिद्धो वेत्येवं योज्यम् । **न्यायानुपपत्तिश्च** इत्यभ्युच्चयः । एनामेवाह—**बोधमात्रतत्त्ववादिनः**—योगाचारस्य **विभ्रमायोगात्** । अयोगश्च **भेदकाभावेन**—वस्तुसत्कर्माद्यभावेन हेतुना **कालुष्यासिद्धे**र्बोधमात्रतत्त्वस्य । **एवं सन्न्यायतो ग्रहणाभावाद्** विभ्रमस्य । यदि नामैवं ततः किमित्याह—**प्रत्यनीकानवगमेन**[2] हेतुना**ऽपोहानुपपत्ते**र्भ्रमस्य[3] । विभ्रमावगतौ हि तत्प्रत्यनीकावगमतस्तत्प्रयोगात्[4] तदपोहसिद्धिः, नान्यथा **इति**—एव**मसुन्दरः पक्षः** । तथा **प्रत्यक्षविरुद्धादिदोषयुक्तत्वाच्च** कारणादसुन्दरः पक्ष इति । एतदेवाह

(विवरणम्)

(२३-२४) **तत्प्रत्यनीकावगमत** इति । तस्य—विभ्रमस्य प्रत्यनीकोऽविभ्रमस्तत्प्रत्यनीकस्तस्यावगमः—ज्ञानं तस्मात् । इदमुक्तं भवति—चित्तमोहिविभ्रमकारणेषु क्लिष्टकर्मादिषु ज्ञातेषु सत्सु ज्ञायन्ते तानि च परमार्थतः सन्ति न सन्ति भवतां मते, अतः कथं तानि ज्ञायन्ते ? नहि खरविषाणं कश्चिद् वेत्ति । तज्ज्ञानाभावे च कथं विभ्रमो ज्ञायते ? विभ्रमावगमाभावे च कथं तत्प्रत्यनीकस्याविभ्रमस्यावगतिः स्यादिति ? ॥

१ 'एवास्यानन्तरो०' इति ङ-पाठ । २ 'नेवगमेन' इति ङ-पाठ । ३ 'पत्तिर्विभ्रमस्य' इति ङ-पाठ । ४ 'गमस्तत्प्रयोगात्' इति ङ-पाठ ।

(मूलम्)

**युक्तत्वाच्च । ज्ञानस्य विच्छिन्नार्थग्राहित्वात् तथाऽनुभवभावादुभयभावसिद्धेः प्रत्यक्षविरुद्धः । तथा तद्वैचित्र्यवेदनाद् भेदकमन्तरेण तदयोगाद् बोधमात्रस्याभेदकत्वात् अनुमानविरुद्धः । "पञ्च बाह्या द्विविज्ञेयाः" इति वचनात्, अन्यार्थता[1]ऽनुपपत्तेः प्रमाणाभावादागमविरुद्धः । सकललोकार्थाङ्गीकरणाद् भेदेनार्थसिद्धेस्तन्निराकरणनैर्घृण्याल्लोकविरुद्धः । भिन्नशब्दाभिधानाद् भूयस्तदभेदापादनादितरेतरव्याहतेः स्ववचनविरुद्ध इत्यलं प्रसङ्गेन ॥**

(स्वो० व्या०)

**ज्ञानस्ये**त्यादिना । ज्ञानस्य **विच्छिन्नार्थग्राहित्वात्** कारणात् तच्छीलतया **तथाऽनुभवभावात्** । किमित्याह–**उभयभावसिद्धेः**–ज्ञानार्थोभयसत्तासिद्धेः **प्रत्यक्षविरुद्धः** पक्षः, प्रत्यक्षप्रसिद्धार्थापह्नवादिति भावः । **तथा तद्वैचित्र्यवेदनात्**, प्रक्रमाज्ज्ञानवैचित्र्यवेदनात्, **भेदकमन्तरेण तदयोगात्**–तद्वैचित्र्यायोगात् **बोधमात्रस्य** व्यक्त्यन्तरभाविनोऽपि **अभेदकत्वाद्** बोधमात्रतत्त्वतयाऽ**नुमानविरुद्धः** सामान्यतस्तदपरसिद्धेः कार्यव्यतिरेकादित्यर्थः । तथा **पञ्च बाह्याः**–रूपादयो **द्विविज्ञेयाः**–इन्द्रियमनोविज्ञानविज्ञेया **इति वचनात्** । अस्य च[2] **अन्यार्थताऽनुपपत्तेः** कल्पनायामपि **प्रमाणाभावा**दन्यार्थतायाम् । किमित्याह–**आगमविरुद्ध** इति । तथा **सकललोकार्थाङ्गीकरणात्** तथातद्व्यवहारकरणेन **भेदेनार्थसिद्धेः** कारणात् **तन्निराकरणनैर्घृण्या**द्धेतो**र्लोकविरुद्धः** । तथा **भिन्न**निमित्त**शब्दाभिधाना**न्नील-तद्धियोरित्यनेन[3] **भूयस्तदभेदापादनात्** तदनु तदभेदाभिधानेन । किमित्याह–**इतरेतरव्याहतेः** । यदि नील-तद्धियौ कथमनयोरभेदः ? अथाभेदः कथं नील-तद्धियौ ? । इति **स्ववचनविरुद्धः** पक्ष **इत्यलं प्रसङ्गेन** ॥

(विवरणम्)

(१६) **सामान्यतस्तदपरसिद्धे**रिति । सामान्यतः–सामान्येन तस्मात्–ज्ञानमात्रादपरस्य–कस्यचित् सिद्धेः–निष्पत्तेः, सामान्यत इति । अस्यायमभिप्रायः–सामान्येन तावद् विज्ञानमात्रादन्यत् किञ्चित् सिद्धम् । तच्च कर्म वा भवतु, अन्यद् वा किञ्चिदिति । अत्रैव हेतुमाह–(१६) **कार्यव्यतिरेका**दिति । कार्यान्यथाऽनुपपत्तेः । ज्ञानवैचित्र्यलक्षणं हि कार्यं कथं ज्ञानव्यतिरिक्तापरभेदकभावविरहे भवितुमुत्सहते ? ॥

१ 'अन्यार्थानुपपत्तेः' इति ग–पाठः । २ 'अन्यार्थानुप०' इति ङ–पाठः । ३ 'तद्धिरित्यनेन' क–पाठः ।

## ( मूलम् )

हेतुदोषा उच्यन्ते। सहोपलम्भनियमादित्ययं तावद् विपर्ययसाधकत्वाद् विरुद्धः, सहशब्दस्यार्थान्तरेण विना प्रयोगादर्शनात्, सहोपलम्भादेव भिन्नत्वं नीलस्य, [1]तद्धियः। इति विपर्ययसिद्धिः। स्यादेतदेकार्थः 'सह'शब्दः। तेनैतदुक्तं भवति–सहोपलम्भनियमादेकेनैवोपलम्भादिति यावत्। एवं च न विपर्ययसिद्धिरित्युक्तदोषाभावः। नैतदेवम्, अविचारितरमणीयत्वात्। तथाहि–एकेनोपलम्भादिति कोऽर्थः?। किं ग्राह्य-ग्राहकयोरेकेनैव वेदनात् उतासम्पृक्तेनैव ग्राह्यग्रहणादिति?। यदि ग्राह्य-ग्राहकयोरेकेनैव वेदनं ततः स एक एवानुभवः। इति प्राप्तं बुद्धविज्ञान-पृथग्जनविज्ञानयोरेकत्वम्। न तत् तस्य ग्राहकमिति चेत्, न तेन सन्तानान्तरावगमः। सत्यमिष्टमेव

---

## ( स्वो० व्या० )

**हेतुदोषा उच्यन्ते।** तत्र **सहोपलम्भनियमादित्ययं तावद्** हेतुः। किमित्याह–**विपर्ययसाधना(?कत्वा)द् विरुद्धः।** विपर्ययसाधनत्वं च **सहशब्दस्यार्थान्तरेण विना**–विवक्षितार्थमधिकृत्य। किमित्याह–**[2]प्रयोगादर्शनात्, सहोपलम्भादेव** कारणाद् **भिन्नत्वं नीलस्य।** कुत इत्याह–**तद्धियः। इति**–एवं **विपर्ययसिद्धिः। [3]स्यादेतदि**त्यादि। अथैव मन्यसे–**एकार्थः 'सह'शब्दो** वर्तते। **तेनैतदुक्तं भवति सहोपलम्भनियमादि**ति। कोऽर्थ इत्याह–एकोपलम्भनियमात्। किमुक्त भवति? **एकेनैवोपलम्भादिति यावत्। एवं च** कृत्वा **न विपर्ययसिद्धिरिति**–एव**मुक्तदोषाभावः।** एतदाशङ्क्याह–**नैतदेवम्।** कुत इत्याह–**अविचारितरमणीयत्वात्।** एतदेवाह **तथाही**त्यादिना। तथाहीति पूर्ववत्। **एकेन एव उपलम्भादिति कोऽर्थः?। किं ग्राह्य-ग्राहकयोः**–द्वयोरप्ये**केनैव वेदना**दित्ययमर्थ **उतासम्पृक्तेनैव**–असंस्पृष्टेनैव, ज्ञानेनेति प्रक्रमः, **ग्राह्यग्रहणादिति?।** किञ्चातः? उभयथाऽपि दोष इत्याह **यदी**त्यादिना। यदि **ग्राह्य-ग्राहकयोरेकेनैव वेदन**मित्यर्थः **ततः**–एवं सति **स एक एवानुभवः**–ग्राह्यग्राहकात्मा। **इति**–एव **प्राप्तं बुद्धविज्ञान-पृथग्जनविज्ञानयो**र्ग्राह्यग्राहकत्वेन **एकत्वम्। न तत्**–बुद्धविज्ञानं **तस्य**–पृथग्जनविज्ञानस्य **ग्राहकम्। इति चेत्,** एतदाशङ्क्याह–**न तेन**–बुद्धविज्ञानेन **सन्तानान्तरावगमः। सत्यमिष्टमेवेदं** यदुत न तेन सन्तानान्तरावगमः।

---

१ 'तद्विषय०' इति क–पाठ। २ 'अप्रयोगा०' इति ङ–पाठ। ३ 'स्यादित्यादि' इति ङ–पाठ।

(मूलम्)

**इदमिति चेत्, कथं तर्ह्यस्याप्ततेति वाच्यम्। शुद्धेः। सा किमत्रोच्यत इति चेत्, साऽप्यहेतुकेति न युक्तैव। परार्थभूतेर्नाहेतुकेति चेत्, कथं तदनवगमे तत्सिद्धिरिति?। अचिन्त्यशक्त्यादिना तु तदवगमो नीलेऽपि तुल्यः॥**

**असम्पृक्तेनैव ग्राह्यग्रहणे त्वस्मन्मतानुवाद एव, ग्राह्यसन्तानारूषितस्यैवास्य तत्स्वभावतया ग्राहकत्वाभ्युपगमात्, अस्य च न्याय्यत्वात्, भिन्नार्थग्रहणात्, प्रतिप्राणि प्रतीतेः, भावतो बाधासम्भवात्, सदा तथोपलम्भात्, [1]तथाऽर्थक्रियादर्शनात्, अन्यथा**

(स्वो० व्या०)

**इति चेत्,** एतदाशङ्क्याह–**कथं तर्हि अस्य**–बुद्धस्य **आप्ततेति वाच्यम्। शुद्धेः। सा**–आप्तता **किमत्रोच्यते?। इति चेत्,** एतदाशङ्क्याह–**साऽपि**–शुद्धिः **अहेतुका। इति**–एवं **न युक्तैव। परार्थभूतेः**–परार्थादुत्पत्तेः कारणात् **नाहेतुका। इति चेत्,** एतदाशङ्क्याह–**कथं तदनवगमे**–परानवगमे **तत्सिद्धिः**–परार्थसिद्धिरिति**?। अचिन्त्यशक्त्यादिना तु,** 'आदि'शब्दादवाच्यवादग्रहः, **तदवगमः**–परावगमो **नीलेऽपि तुल्यः,** भेदाविशेषात्॥

द्वितीयं पक्षमधिकृत्याह–**असम्पृक्तेनैव** विज्ञानेन **ग्राह्यग्रहणे** पुनरभ्युपगम्यमाने। किमित्याह–**अस्मन्मतानुवाद एव।** कथमित्याह–**ग्राह्यसन्तानारूषितस्यैवास्य**–विज्ञानस्य केवलस्य सतः **तत्स्वभावतया**–विच्छिन्नार्थग्रहणस्वभावतया **ग्राहकत्वाभ्युपगमात्, अस्य च**–अभ्युपगमस्य **न्याय्यत्वात्।** न्याय्यत्वं च **भिन्नार्थग्रहणात्।** एतच्च **प्रतिप्राणि**–प्राणिनं प्रति **प्रतीतेः** कारणात् तथा **भावतो बाधासम्भवात्।** [2]अस्याभ्युपगमस्यासम्भवश्च **सदा तथोपलम्भात्**–असम्पृक्तग्राह्यग्रहणतयोपलम्भात्। **तथाऽर्थक्रियोपलम्भाद्**

(विवरणम्)

(१४) **परार्थादुत्पत्तेरिति।** परे–बुद्धव्यतिरिक्ता येऽनुग्राह्याः प्राणिनस्तेषामर्थः–सुमार्गावतरणलक्षणं प्रयोजनं [3]परार्थस्तस्माद्धेतुभूतात् सकाशादुत्पत्तेर्बुद्धज्ञानशुद्धताया भगवतो हि बुद्धस्य ज्ञान[4]शुद्धिश्चौर्यपरदाराद्यनार्यकार्यपरम्पराप्रवणप्राणिनामुपकाराय प्रवर्त्तेत इति प्रतिपद्यन्ते [5]**ताथागताः॥**

१ 'तथा' इति पाठो न विद्यते **ग**–प्रतौ। २ 'तस्याभ्यु०' इति **ङ**–पाठः। ३ 'परार्द्धस्तस्मा०' इति **ख–च** पाठः। ४ 'शुद्धिश्चौरपारदारा०' इति **च**–पाठः। ५ 'तथागत.' इति **क**–पाठः।

(मूलम्)

**ग्राहकत्वायोग इत्युक्तप्रायम् ॥**

**न चास्योक्तप्रकारातिरिक्तोऽर्थः। न चायमप्येकार्थो लौकिकः। न च ग्रन्थकारबहुमतः, न च बहुमतत्वेऽपि युक्तरूपः। "परार्थे ह्यनुमाने वक्तुर्वचनगुणदोषा अपि विचिन्त्यन्ते" इत्युक्तम्। "प्रतिपादयताऽनेन परमवश्यं प्रतीतपदार्थकः शब्द उपादेयः, अन्यथा प्रतीतेरभावात्"। लोके च नार्थान्तरेण विना 'सह'शब्दप्रयोगो दृष्ट इति कथमयमेकार्थवाचको युक्तरूपः स्यात्?। साङ्केतिकेऽपि शब्दार्थयोगे लोकप्रसिद्धिरेव अनुसर्त्तव्या, तत्परित्यागेनासमञ्जसत्वप्रसङ्गात् ॥**

(स्वो० व्या०)

भिन्नार्थेन किं बहुना? **अन्यथा ग्राहकत्वायोगो** ज्ञानस्य एकान्तैकस्वभावतया स्वग्रहणायोगाद् ग्राह्यग्राहकोभयरूपतापत्तेरि**त्युक्तप्रायं**–प्रायेणोक्तमेतत् ॥

**न चे**त्यादि। न च **अस्य**, प्रक्रमादेकेनैवोपलम्भात् इति वचनस्य। किमित्याह–**उक्तप्रकारातिरिक्तोऽर्थः**। किं तर्हि? उक्तप्रकार एव। **न चे**त्यादि। न च **अयमप्येकार्थः**, 'सह'शब्दस्येति प्रक्रमः। किमित्याह–**लौकिकः**। **न च ग्रन्थकारबहुमतः** 'सह'शब्दस्यैवैकार्थः[1], तस्य वाक्प्रयोगकुशलत्वाद् ग्रन्थकारस्य। **न च बहुमतत्वेऽपि** ग्रन्थकारस्य **युक्तरूपः** 'सह'शब्दस्यैकार्थः। कुत इत्याह–**परार्थे** यस्माद**नुमाने वक्तुर्वचनगुणदोषा अपि विचिन्त्यन्त** इत्युक्तं **धर्मकीर्त्तिना**। कथमित्याह–**प्रतिपादयताऽनेन**[2]–वक्त्रा **परं**–प्रतिपाद्य**मवश्यं प्रतीतपदार्थकः शब्द उपादेयः**। **अन्यथा**–तमन्तरेण **प्रतीतेरभावात्** इति **वार्त्तिकमिदमुक्तम्**। इदमुपन्यस्य प्रक्रान्तोपयोगमाह **लोके चे**त्यादिना। लोके च–आविद्वदङ्गनादौ **नार्थान्तरेण विना**। किमित्याह–**'सह'शब्दप्रयोगो दृष्ट इति** कृत्वा। **कथमयं**–'सह'शब्दः **एकार्थवाचको युक्तरूपः स्यात्?** नैव युक्तरूपः। साङ्केतिके शब्दार्थसम्बन्धे नैवमपि कश्चिद् दोष इत्यारेकानिरासायाह–**साङ्केतिकेऽपि शब्दार्थयोगे**–शब्दार्थसम्बन्धे। किमित्याह–**लोकप्रतीतिरेवानुसर्त्तव्या** हस्तिन्येव 'हस्ति'शब्दः सङ्केतनीयः, न शुनि। **तत्परित्यागेन**–लोकप्रसिद्धिपरित्यागेन हेतुना किमित्याह–**असमञ्जसत्वप्रसङ्गात्**–आक्रोशस्यापि स्तवत्वप्रसङ्गेन ॥

१ 'शब्दस्यैकोऽर्थः' इति ङ-पाठः। २ 'तेन' इति ङ-पाठः।

( मूलम् )

**एवं चानैकान्तिकोऽपि हेतुः, [1]बुद्धविज्ञेयचित्तादावपि भावात् । तथाहि–बुद्धस्य भगवतो यद् विज्ञेयं सन्ता[2]नान्तरचित्तं तस्य [3]बुद्धविज्ञानस्य च सहोपलम्भनियमोऽस्ति । अथ च नानात्वमित्यनैकान्तिकः । तथा चित्तचैत्तानामपि सहोपलम्भनियमोऽस्तीत्यनैकान्तिक**

( स्वो० व्या० )

**एवं चे**त्यादि । एवं च कृत्वा**ऽनैकान्तिकोऽपि हेतुः** सहोपलम्भनियमादित्ययं न केवलं विरुद्धः । कथमित्याह–**[4]बुद्धविज्ञेयचित्तादावपि** सन्तानान्तरवर्त्तिनि, 'आदि'शब्दाच्चैतत्परिग्रहः **भावात्**–विद्यमानत्वादिति । एतद्भावनायैवाह **तथाही**त्यादिना । तथाहीत्युपप्रदर्शने । **बुद्धस्य भगवतो यद् विज्ञेय**मालम्बनं **सन्तानान्तरचित्तं तस्य**–सन्तानान्तरचित्तस्य **बुद्धविज्ञानस्य च सहोपलम्भनियमोऽस्ति** अभ्युपगमनीत्या । **अथ च नानात्व**मनयोरि**त्यनैकान्तिकः** सहोपलम्भनियमः, नानात्वेऽपि भावादिति । **तथा चित्तचैत्तानामपि**–विज्ञानवेदनादीनां **सहोपलम्भनियमोऽस्तीति** कृत्वा **अनैकान्तिक एव**–अधिकृतहेतुः ।

( विवरणम् )

(१४-१५) **चित्तचैत्तानामपि** विज्ञानवेदनादीनामिति ।

"विज्ञानं वेदना सञ्ज्ञा संस्कारो रूपमेव च ।
भिक्षूणां शाक्यसिंहेन स्कन्धाः पञ्च प्रकीर्त्तिताः ॥"[5]

इति वचनाद् बौद्धमते पञ्च स्कन्धाः । तत्र विज्ञानं चित्तचैत्तभेदाद् द्विविधम् । तत्रापि चित्तं सामान्यग्राहि, यथा–गच्छतस्तृणस्पर्शादि । चित्ते [6]भवाश्चैत्ताः–ज्ञानविशेषाः । विशिष्टानि ज्ञानानि चैत्ता भण्यन्त इत्यर्थः । यथा मार्ग एव गच्छतः पर्वतोऽयमित्यादि ज्ञानम् । वेदनारूपा(?) साऽपि द्विधा–सामान्यतो विशेषतश्च । तत्र सामान्यतो निरन्तरं [7]यदलक्ष्यं सुखदुःखानुभव इति । विशेषतस्तु [8]सुखवेदना, यथा–केनापि भव्यप्राणिना सर्वाङ्गीणालङ्कारालङ्कृतिकान्तिप्राग्भारप्रकटीकृतनिखिलदिक्चक्रवालजैनबिम्बावलोकनेऽपूर्वः कश्चित् प्रमोदोऽनुभूयत इति । एवं दुःखवेदनाऽपि भाव्या । सञ्ज्ञा आहाराद्यभिलाषरूपा प्रतीतैव । संस्कारः पूर्वकालदृष्टानुभूतार्थगोचरस्मृतिबीजरूपः । [9]सञ्ज्ञा-संस्कारावपि चित्तचैत्तद्वयस्वरूपावेव । रूपं तु घटादयो विचित्रा बहिर्वर्त्तिनः पदार्थाः । [10]प्रस्तुता चेयमत्र योजना–चित्तचैत्तज्ञानयोरेकस्मिन्नपि काले

१ 'बुद्धिविज्ञेय०' इति क–पाठः । २ 'नान्तरं चित्तं' इति ग–पाठः । ३ 'बुद्धिविज्ञानस्य' इति क–पाठः । ४ 'बुद्धिविज्ञेय०' इति ङ–पाठः । ५ अनुष्टुप् । ६ 'भवाखेत्ता ज्ञान०' इति च–पाठः । ७ 'यद् लक्ष्यं' इति च–पाठः । ८ 'मुख०' इति क–पाठः । ९ 'संज्ञासत्कारा०' इति च–पाठः । १० 'प्रस्तुता वेय०' इति ख–च पाठः ।

(मूलम्)

एव । आगमसिद्धमेतदिति नानेन व्यभिचार इति चेत्, किं नेदमित्थमिति न, किं वा न निश्चीयत इति? । आद्यपक्षे न प्रमाणमित्ययुक्तो मूलवंशनिह्नवः; चरमे तु निश्चीयत एव वचनेनेति व्यभिचारसिद्धिः । इष्टश्च भवता वचनानुसारः पूर्वाचार्यमताङ्गीकरणात् ।

"ग्राह्यं न तस्य ग्रहणं न तेन
ज्ञानान्तरग्राह्यतयाऽपि शून्यम् ।

(स्वो० व्या०)

आगमसिद्धमेतत्—अनन्तरोक्तमिति नानेन व्यभिचारः । इति चेत्, एतदाशङ्क्याह—किं नेदम्—आगमसिद्धमित्थमित्यतो न अनेन व्यभिचारः, किं वा न निश्चीयत इति अतो न? । किञ्चातः? उभयथाऽपि दोष इत्याह—आद्यपक्षे नेदमित्थमित्यस्मिन् न प्रमाणम् । इत्थं नेत्थं [1]वेति क एतद् वेद? इति—एवं प्रमाणाभावे सति अयुक्तो मूलवंशनिह्नवः, मूलवंशः—बुद्ध[2]शरद्वतीपुत्रोदयस्तन्निह्नव एवमिति । चरमे तु विकल्पे न निश्चीयत इत्यस्मिन् । किमित्याह—निश्चीयत एव वचनेन तथोपल[3]ब्धिरिति—एव व्यभिचारसिद्धिः, अधिकृतहेतोरनैकान्तिकत्वसिद्धिरित्यर्थः । इष्टश्च—अङ्गीकृतश्च भवता वचनानुसारः । कथमित्याह—पूर्वाचार्यमताङ्गीकरणात् । एतदेवाह—ग्राह्यं न तस्य—बुद्धविज्ञानस्य ग्राह्यमेतदित्येवं ग्रहणं न तेन—बुद्धविज्ञानेन इदन्तया ज्ञानान्तरग्राह्यतयाऽपि शून्यमिदं

(विवरणम्)

बौद्धमते भावात् सहोपलम्भनियमोऽस्ति, न चानयोरैक्यम्, अभ्युपगमप्रकोपात् । एवमेकस्मिन्[4] काले ज्ञान-वेदनेऽनुभूयेते, न चैक्यमेतयोः । एवं सञ्ज्ञादिष्वपि [5]योज्यम् । ततः सहोपलम्भनियमादिति हेतुरनैकान्तिक एवेति स्थितम् ॥

(१३) किं नेदमागमसिद्धमित्थमित्यतो नानेन व्यभिचार इति । किं न—नैवेदमागमसिद्धं वस्तु चित्तचैत्तसहोपलम्भनियमलक्षणम् । इत्थं यथा प्राञ्जलवृत्त्याऽवबुध्यते तथा वर्तते इत्यतः कारणान्नानेन व्यभिचारः प्रेरणीयः । अयमभिप्रायः—इदमागमसिद्धं वस्तु [6]यथा भवद्भिर्व्याख्यायते प्रतीयते च तथा न वर्तत एवेति । यथा नानेन व्यभिचार इति सहोपलम्भनियमाख्यहेतोः कार्ये इति बौद्धाभिप्रायो भविष्यति कदाचित् ॥

(१४) बुद्ध[7]शरद्वतीपुत्रोदय इति । बौद्धागमशास्त्रविशेषकः कश्चित् सम्भाव्यते ॥

१ 'चेति' इति क-पाठ । २ 'सरस्वतीपुत्रो०' इति ङ-पाठ । ३ 'लब्धेरिति' इति क-पाठ । ४ 'कालज्ञान०' इति क-पाठ । ५ 'योज्यन्ते' इति च-पाठ । ६ 'यदा' इति च-पाठ । ७ 'शरीरद्धतिपुत्रादय इति' इति ख-पाठ । ८ 'तद्विषय इति' इति क-पाठ. ।

( मूलम् )

**तथापि च ज्ञानमयः प्रकाशः**
**प्रत्यक्षपक्षस्य तवाविरासीत् ॥"[1]**

**तथा "प्रेतवत् पुनः सन्ताना[2]नियमः सिद्धः", तथा "नरकवत् पुनः सर्वं सिद्धम्" इत्यादि वचनसमर्थनात्; अन्यथा विचारायोगः स्वमात्रवेदनातिरेकेण सर्वानिश्चितेरिति। एवं न केवलमनैकान्तिकः**

( स्वो० व्या० )

तयैव **तथापि च ज्ञानमयः प्रकाश**स्तत्त्वाविसंवादी **प्रत्यक्षपक्षस्य तवावि[3]रासीत्**–प्रकटो बभूव । **"तथा [4]प्रेतवत् पुनः सन्तानानियमः सिद्धः"** [5]विंशिकायां भावनाधिकारे उक्तम् । **तथा "नरकवत् पुनः सर्वं सिद्धम्" इत्यादि विंशिकोक्तवचनसमर्थनात्** । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा विचारायोगः** । कथमित्याह–**स्वमात्रवेदनातिरेकेण सर्वानिश्चितेः** विज्ञानादन्यस्यानभ्युपगमाद् भवता **इति** भावः । **एवम्**–उक्तनीत्या **न केवलमनै-**

( विवरणम् )

(९) **प्रत्यक्षपक्षस्ये**ति । प्रत्यक्षाः–सर्वे पक्षाः साध्यानि यस्य स तथा तस्य । एतच्च वृत्तं **बुद्ध**स्तवनसम्बन्धि ॥

(१०) **प्रेतवत् पुनः सन्तानानियमः सिद्ध** इति । अयमत्रार्थः सम्भाव्यते–न हि प्रेतो मृत्वा पुनः प्रेत एव भवति, किन्त्वन्यो मनुष्यादिरेव । ततः प्रेतवदन्येषामपि प्राणिनां मृतानां पुनर्द्वितीयवारं [6]सन्तानस्य–सजातीयस्यैवानियमः–नियमाभावः सिद्धः, कदाचिद् विजातीयसन्तानतयाऽप्युत्पादादिति ॥

(११) **नरकवत् पुनः सर्वं सिद्धमिति** । सर्वमपि सांसारिकं वस्तु दुःखबहुलतया नरकवत् सिद्धम्, प्रतीतमित्यर्थः । 'पुनः'शब्दस्तु **विंशतिको**क्तपाश्चात्यार्थापेक्षया विशेषार्थो द्रष्टव्यः ॥

(१२) **इत्यादि विंशिकोक्तवचनसमर्थना**दिति । यथैतेषां वचनानामर्थः समर्थ्यते भवता (तथा) चित्तचैत्तसहोपलम्भनियमलक्षणोऽर्थः किमिति न समर्थ्यत इत्यर्थः । अत्र च '[7]ग्राह्यं न तस्य ग्रहणं न तेन' इत्यादिना वृत्तेन **बुद्धर्[8]ज्ञानस्वरूपं** प्रतिपादितम् । अग्रेतनवाक्यद्वयेन तु बाह्यार्थसत्ता समर्थिता ॥

---

१ उपजातिः । २ 'नियमसिद्धः' इति क–पाठः । ३ 'तवाविरोशीत्' इति ङ–पाठः ।

४–५ अत्रत्ये क–टिप्पणके यथा–आचार्य**वसुबन्धु**प्रणीते **विज्ञप्तिमात्रतासिद्धिप्रकरणद्वये** 'विंशतिकाकारिकाः' इति नामकमेकं प्रकरणम् । तत्र तृतीया तुरीया च कारिके यथा—

"देशादिनियमः सिद्धः स्वप्नवत् प्रेतवत् पुनः । संतानानियमः सर्वैः पूयनद्यादिदर्शने ॥ ३ ॥
स्वप्नोपघातवत् कृत्यक्रिया नरकवत् पुनः । सर्व नरकपालादिदर्शने तैश्च बाधने ॥ ४ ॥"

तृतीयकारिकावृत्तौ 'सिद्ध इति वर्तते', चतुर्थकारिकावृत्तौ तु 'सिद्धमिति वेदितव्यम्' इति ।

६ 'सन्तानं सजातीय' इति क–पाठः । ७ 'ग्राहकं भूतेनेत्यादिना' इति ख–पाठः । ८ 'ज्ञानस्य स्वरूपं' इति क–पाठः ।

( मूलम् )

**असिद्धश्च, सहोपलम्भनियमस्योभयासिद्धत्वात्, भवतः सहार्थायोगात् तदपरस्यानभ्युपगमात्, अभ्युपगमे च साधनवैफल्यादिति। परस्यापि नीलेन सह तद्धिय उपलम्भो नाभेदेन सिद्धः। भेदेन तु सहार्थसिद्धौ न साधनमिष्टसाधकमितरस्येति। न चाभेदस्य सहोपलम्भनियमस्य च व्याप्यव्यापकभावः, अन्यथाऽप्यस्याविरोधात् ज्ञानज्ञेयतत्स्वभावत्वत एव नियमोपपत्तेः, ज्ञानस्यार्थग्रहणस्वभावस्य सतः स्वसंविदितरूपत्वात् चित्रस्वभावतया तथात्वाविरोधात्, अर्थस्य च ज्ञानविविक्ततया तथा तथा तद्ग्राह्यस्वभावत्वात्। इत्यपि सहोपलम्भनियम उपपद्यत एव, तद्योग्यतालक्षणप्रतिबन्धसामर्थ्यादिति। अनेनैतदप्यपाकृतमेव**

( स्वो० व्या० )

**कान्तिको** हेतुः सहोपलम्भनियमाख्यः। किं तर्हि? [1]**असिद्धश्च**। कथमित्याह—**सहोपलम्भनियमस्य** नील-तद्धियोः **उभयासिद्धत्वात्**, वादिप्रतिवाद्यसिद्धत्वादित्यर्थः। एतत्प्रकटनायाह—**भवतः**—तव **सहार्थायोगात्** नीलाभावेन। अत एवाह—**तदपरस्यानभ्युपगमाद्** धियो व्यतिरेकेण नीलस्येत्यर्थः। **अभ्युपगमे** तदपरस्य नीलस्य **साधनवैफल्यात्**, बाह्यसिद्ध्यैव **इति**। **परस्यापि**—प्रतिवादिनो **नीलेन सह तद्धियः**—नीलधिय **उपलम्भो नाभेदेन सिद्धः**, भेदाभ्युपगमात्। **भेदेन तु सहार्थसिद्धौ** सत्यां नील-तद्धियोः। किमित्याह—**न साधनं** प्रस्तुत**मिष्टसाधकमितरस्य**, साधनवादिन **इति** अर्थः। **न चे**त्यादि। न च **अभेदस्य** साध्यतयेष्टस्य **सहोपलम्भनियमस्य च** साधनत्वेनाभिहितस्य **व्याप्यव्यापकभावः**। कथ नेत्याह—[2]**अन्यथाऽपि**—अभेदमन्तरेणापि **अस्य**—सहोपलम्भनियमस्य **अविरोधात्**। एनामेवाह—**ज्ञानज्ञेयतत्स्वभावत्वत एव** कारणात् सहोपलम्भ**नियमोपपत्तेः**। ज्ञान-ज्ञेययोस्तत्स्वभावत्वमभिधातुमाह—**ज्ञानस्यार्थग्रहणस्वभावस्य सतः स्वसंविदितरूपत्वात् चित्रस्वभावतया** कारणेन **तथात्वाविरोधात्** ज्ञानस्य **अर्थस्य च ज्ञानविविक्ततया** हेतुभूतया **तथा तथा**—तेन तेन प्रकारेण स्पष्टेतरादिना **तद्ग्राह्यस्वभावत्वात्**—ज्ञानग्राह्यस्वभावत्वात्। **इत्यपि**—एवमपि **सहोपलम्भनियम उपपद्यत एव तद्योग्यतालक्षणप्रतिबन्धसामर्थ्यात्** तयोः—ज्ञानार्थयोरेवम्भूतयोग्यतालक्षण-

१ 'असिद्धेश्च' इति ङ-पाठ.। २ 'अन्यथा भेदमन्तरेणापि' इति ङ-पाठ ।

( मूलम् )

**यदाहुरेके–"प्रत्यक्षोऽर्थः परोक्षं तु ज्ञानं तत्प्रत्यक्षतयाऽर्थापत्तिसमवसेयम्" इति। अपाकरणं चास्य परोक्षत्वे ज्ञानस्यार्थप्रत्यक्षताऽसिद्धेः, ज्ञानेन ह्यर्थः प्रत्यक्षीक्रियते। तच्चेत् परोक्षं कथमर्थः प्रत्यक्षो नाम?। तेन प्रत्यक्षीकृतत्वादिति चेत्, न, आत्मानमप्रत्यक्षीकुर्वतोऽन्यप्रत्यक्षीकरणासिद्धेः। इन्द्रियवत् सिद्धिरिति चेत्, न, तस्य बहिष्करण-**

( स्वो० व्या० )

प्रतिबन्धसामर्थ्या**दिति**। एते**न**–अनन्तरोदितेन **एतदप्यपाकृतमेव**–वक्ष्यमाणं **यदाहुरेके–मीमांसकाः**। किमाहुरित्याह–**प्रत्यक्षोऽर्थः**–नीलादिः, **परोक्षं तु विज्ञानं** तद्ग्राहकं **तत्प्रत्यक्षतया**–अर्थप्रत्यक्षतया कारणेन **अर्थापत्तिसमवसेयं** ज्ञान**मिति,** यथोक्तं ज्ञाते त्वनुमानादवगच्छतीति। कथमपाकृतमित्याह **अपाकरणं चे**त्यादिना। अपाकरणं च **अस्य परोक्षत्वे ज्ञानस्य** तात्त्विके सति। किमित्याह–**अर्थप्रत्यक्षताऽसिद्धेः** कारणात्। एतदेव भावयति **ज्ञानेन** यस्मादर्थः **प्रत्यक्षीक्रियते। तच्चेत्** ज्ञानं **परोक्षम्**, एवं सति **कथमर्थः प्रत्यक्षो नाम?** नैवेत्यर्थः। **तेन**–ज्ञानेन **प्रत्यक्षीकृतत्वादिति चेत्** प्रत्यक्षः। एतदाशङ्क्याह–**ने**त्यादि। न, **आत्मानमप्रत्यक्षीकुर्वतः**–ज्ञानस्य **अन्यप्रत्यक्षीकरणासिद्धेः**–

( विवरणम् )

(१२) **ज्ञाते त्वनुमानादवगच्छतीति**। ज्ञाते–परिच्छिन्ने ( तुः ) पुनरर्थे घटादावनुमानात् सकाशादवगच्छति–बुध्यते ज्ञानं, यतोऽयमर्थो मम प्रत्यक्षः समजनि। तज्ज्ञाने नूनमेतद्विषयं मम ज्ञानमभूदित्युल्लेखेनेत्यर्थः। यच्चार्थापत्तिसमवसेयं ज्ञानमित्युक्त्वा अनुमानादवगच्छतीत्युक्तं तदर्थापत्यनुमानयोरल्प एव भेद इति कृत्वा॥

(१५) **एवं सति कथमर्थः प्रत्यक्षो नामेति**। स्वतो हि परोक्षं स्वज्ञानं कथमर्थं प्रत्यक्षीकरोति?। न ह्यप्रतीतं विशेषणं विशेष्ये बुद्धिं जनयति। तथाहि–नीलत्वेऽनवबुद्धे सति न भवत्येवेदृशी बुद्धिर्यदुत नीलं सरोजमिति। एवमत्राप्यर्थ इति विशेष्यस्य विशेषणं प्रत्यक्ष इति। एतच्च प्रत्यक्षत्वलक्षणं विशेषणमप्रतीतमेव ज्ञानस्य परोक्षत्वेऽङ्गीक्रियमाणेऽतः कथं तेनार्थो विशेष्यत इति?॥

(१७) **अन्यप्रत्यक्षीकरणासिद्धेरिति**। यदि हि ज्ञानमात्मानमात्मनाऽवबुध्यते यदुताहमर्थग्रहणरूपतया परिणतं तदा युज्यते तेनान्यस्य ग्रहणम्। यदा तु ज्ञानमात्मीयस्वरूपावबोधं प्रति लेष्टुप्रायं तदा कथमेषोऽर्थः प्रत्यक्ष इति भवत्यध्यवसायः?॥

१ 'बहिः करण०' इति क–पाठः। २ 'तत्वेन ज्ञानं' इति ङ–पाठः। ३ 'पटादा०' इति च–पाठः। ४ 'त्युक्तमुक्तेस्तद०' इति च–पाठः। ५ 'सतो हि' इति ख–पाठः। ६ 'सज्ञानं' इति क–पाठः। ७ 'यदा' इति च–पाठः। ८ 'प्रति लेष्टप्रायं' इति ख–पाठः।

( मूलम् )

**त्वेन तद्भावोपपत्तेः। अन्तःकरणे को दोष इति चेत्, न खलु ततः कर्त्तरि क्रियाधानमिति। यद्येवं ततः किमिति चेत्, न तेन युक्तितः कस्यचित् तत्प्रत्यक्षीकरणम्। तथाहि-परोक्षं ज्ञानमात्मनः सर्वथा भिन्नं नातिशयाधायि तत्रार्थप्रत्यक्षताहेतुरिति न न्यायोपेतमेतत्। यदि त्वात्मनि द्रव्यमनोवद् बोधक्रियाधायकं**

( स्वो० व्या० )

अर्थप्रत्यक्षीकरणासिद्धेः। **इन्द्रियवत् सिद्धिरिति चेत्** अर्थप्रत्यक्षतासिद्धिः। तथाहीन्द्रियमात्मानमप्रत्यक्षीकुर्वदर्थं प्रत्यक्षीकरोतीति सिद्धम्। एतदाशङ्क्याह-नेत्यादि। न-नैतदेव **तस्य**-इन्द्रियस्य **बहिष्करणत्वेन** हेतुना **तद्भावोपपत्तेः**-स्वपरोक्षस्याप्यर्थप्रत्यक्षीकरणभावोपपत्तेः। **अन्तःकरणे**-ज्ञाने **को दोष इति चेत्**, तद्भावोपपत्तेरिति प्रक्रमः। एतदाशङ्क्याह-**न खलु ततः**-अन्तःकरणात् **कर्त्तरि क्रियाधानं** यथा बहिष्करणादिति। यद्येवं न ततः कर्त्तरि क्रियाधानम्। **ततः किम्?। इति चेत्**, एतदाशङ्क्याह-**न तेन**-अन्तःकरणेन **युक्तितः**-नीत्या **कस्यचित् तत्प्रत्यक्षीकरणं**-अर्थप्रत्यक्षीकरणम्। एतद्भावनायैवाह **तथाहीत्यादिना**। तथाहि-**परोक्षं ज्ञानमात्मनः**-जीवस्य **सर्वथा भिन्नम्**-एकान्तेनान्यत् **नातिशयाधायि तत्र**-आत्मनि एव सत् **अर्थप्रत्यक्षताहेतुरिति**-एव न **न्यायोपेतमेतत्**[3]। **यदि त्वात्मनि द्रव्यमनोवदस्वद्**-

( विवरणम् )

(१४) **यथा बहिष्करणादिति**। बहिष्करणं हि जडं जडत्वाच्चासंविदितम्, ततस्तादृशं सत् तदन्तःकरणेन स्वसंविदितेनोपष्टम्भमानीतमात्मनि क्रियाधानायालं भवति। यदा त्वन्तःकरणमपि परोक्षं तदा उभयोरपि करणयोः परोक्षत्वात् कथं कर्त्तरि क्रियाया अर्थावबोधलक्षणाया आधानं भवेत्?। अयं चार्थस्तथाहीत्यादिना अनन्तरमेव वक्ष्यमाणेन स्फुटीभविष्यतीति ॥

(१६) **कस्यचित् तत्प्रत्यक्षीकरणमिति**। अत्र कस्यचित्-प्रमातुः ॥

(१८) **एकान्तेनान्यदिति**। मीमांसकमते हि जीवाद् धर्मिणो भिन्नमेव ज्ञानं धर्मरूपम्, तस्य क्षणिकत्वेनाभ्युपगमात्, "न हि तत्क्षणमप्यास्ते" इत्यादि **कुमारिल**वचनप्रामाण्यात्। आत्मा तु अनुवृत्तिव्यावृत्तिस्वरूपो व्यापी तन्मते, अतः कथमेकान्तक्षणिकं सज्ज्ञानमात्मधर्मः स्यादिति?॥

१ 'पत्ताविति' इति ङ-पाठ। २ 'तथा बहि करणा०' इति क-पाठ। ३ 'मेतत् किं यदि' इति क-पाठ। ४ 'जडत्वास्वास्वस०' इति च-पाठ। ५ 'कर्तृक्रियाया' इति ख-पाठ.। ६ 'लक्षणो आत्मान भवेत्' इति च-पाठः। ७ 'सज्ञान' इति ख-च-पाठ॰।

( मूलम् )

स्यात्, स्यात् तद्धेतुः; किन्त्वेवं सैव तत्त्वत आत्मसमवायिनी[1] ज्ञानं न भवत्कल्पितबुद्ध्याख्यम् । सा चात्मधर्मत्वात् कथञ्चित् तदभेदात् तथास्वभावत्वात् प्रतीत्यनुग्रहप्रवृत्तेः स्वसंविदितैवेति ज्ञानप्रत्यक्षतासिद्धिः ॥

स्यादेतद् यदि तदात्मक्रियारूपमेवास्वसंविदितं सदर्थप्रत्यक्षताकारि स्यात् को दोषः स्यात्?। उच्यते–सदैव ( तस्यैव ) तदप्रत्यक्षतायां प्रमातुः क्रियान्तराभावात् अर्थप्रत्यक्षतैव न स्यादिति । हृ(?उ)ल्लेखादिशून्यो हि सुसकल्पो[2]ऽसौ कथं किञ्चित् प्रत्यक्षीकुर्यात्,

( स्वो० व्या० )

भ्युपगतं बोधक्रियाधायकं स्यात् ज्ञानं स्यात् तद्धेतुः–भवेदर्थप्रत्यक्षताहेतुः, किन्त्वेवं परिकल्प्यमाने सैव–बोधक्रिया तत्त्वतः–परमार्थेन आत्मसमवायिनी ज्ञानं न भवत्[3]परिकल्पितं बुद्ध्याख्यं ज्ञानम्। ततः किमित्याह–सा च–बोधक्रियाऽऽत्मधर्मत्वात् कारणात् कथञ्चित् तदभेदात्–आत्मनोऽभेदात् तथास्वभावत्वात्–स्वसंविदितस्वभावत्वात् प्रतीत्यनुग्रहप्रवृत्तेः तथाऽनुभवभावेन स्वसंविदितैवेति–एवं ज्ञानप्रत्यक्षतासिद्धिः स्वसंविदितत्वेन ॥

स्यादेतत्–अथैवं मन्यसे यदि तत्–ज्ञानम् आत्मक्रियारूपमेवास्वसंविदितं सदेकरूपतयाऽर्थप्रत्यक्षताकारि स्यात् को दोषः स्यात्?। न कश्चिदित्यभिप्रायः। एतदाशङ्क्याह–उच्यते यो दोषः स्यात् । तस्यैव–अधिकृतज्ञानस्य तदप्रत्यक्षतायाम्–[4]आत्माप्रत्यक्षतायां सत्यां प्रमातुः–आत्मनः क्रियान्तराभावात् कारणात् अर्थप्रत्यक्षतैव न स्यादिति अयं दोषः स्यात्। तत्समर्थनायैवाह–हृ(?उ)ल्लेखादिशून्यो यस्मान्निष्क्रियः सुप्तकल्पोऽसौ–आत्मा कथं

( विवरणम् )

(२१) आत्माप्रत्यक्षतायामिति। ज्ञानेनात्मीयं स्वरूपं नावबुध्यत एव यद्गुणाहमर्थग्रहणरूपतया परिणतमिति ॥

(२१-२२) क्रियान्तराभावादिति । ज्ञानलक्षणैव तदाऽऽत्मनः क्रिया, न त्वन्या। सा चौस्यासंविदितेति कथमर्थप्रत्यक्षता ? ॥

(२३) उल्लेखादिशून्य इति । उल्लेखस्तात्कालिको विशिष्टोऽध्यवसायः । 'आदि'शब्दात् स्मृत्यादिग्रहः ॥

१ 'वायिनि ज्ञानम्, न भवेत् कल्पित०' इति ग–पाठः। २ 'कल्पासौ कथं' इति क–पाठः। ३ 'भवेत्' इति ङ–पाठः। ४ 'अर्थाप्रत्यक्ष०' इति ङ–पाठः। ५ 'वा स्वसं०' इति च–पाठः।

(मूलम्)

**तदधि(? वि)कृतौ कर्मविशेषाधानस्याकिञ्चित्करत्वात्? प्रदीपाद्यव-**

(स्वो० व्या०)

**किञ्चित् प्रत्यक्षीकुर्यात्?** नैवेत्यर्थः। कुत इत्याह–**तदधि(? वि)कृतौ**–आत्मा-विकृतौ सत्यां **कर्मविशेषाधानस्य**–अर्थगतविशेषाधानस्य **अकिञ्चित्करत्वात्।** एव च ज्ञानेनार्थे विशेषः क्रियत इत्यप्यपास्तम्, इतरेतरसापेक्षः कर्तृकर्मक्रियाविधिरिति

(विवरणम्)

(६) **कर्मविशेषाधानस्येति**। कर्मणः–घटादेः पदार्थस्य विशेषाधानं–प्रकटता-करणं तस्य। कर्मशब्दश्चैव व्युत्पाद्यते—क्रियते–ज्ञानेन प्रकटरूपतया निष्पाद्यते इति कर्म–घटादिवस्तु तद्। अयमभिप्रायः–अर्थस्य प्राकट्यलक्षणे विकारे सम्पन्नेऽपि [1]यावन्नाद्याप्यात्मनो विकारोऽर्थग्रहणप्रवणतारूपः सञ्जायते तावन्नार्थप्रत्यक्षता सम्पद्यत इति ज्ञानेनार्थविशेष. क्रियते इति। यथाहि दात्रेण लव्यस्यैव विकारः क्रियते, न तु लावकस्य, तस्य तदवस्थस्यैवोपलम्भात्। एव ज्ञानेनाप्यर्थविशेषः प्रकटनारूपो विधीयते, न तु पुरुषे इति **मीमांसका**भिप्रायः॥

(७, पृ. ६८, पं. ८) **इतरेतरसापेक्षः कर्तृकर्मक्रियाविधिरिति कृत्वेति**। कर्तृ-कर्मणो. क्रियाविधिः–क्रियाविशेषः, क्रियाभेद इत्यर्थः। स कीदृशो वर्तत इत्याह–इतरेतरसापेक्षः। इतरः कर्त्ता कर्म वा इतरस्य कर्मणः कर्तुर्वा सापेक्षो यत्र स तथा। कर्त्ता हि क्रियमाणं पदार्थमपेक्ष्य कर्तृत्व लभते। कर्म च कर्त्तारमङ्गीकृत्य कर्मत्व-माप्नोति। ततश्च कर्त्ता नियमात् [2]कर्मणा विकारमानीयते आत्मकर्तृत्वप्रवणतालक्षणम्, अन्यथा प्रागवस्थायामकुर्वाणोऽपि कर्तृव्यपदेशमश्नुवीत। न चैतत् दृष्टमिष्टं वा। कर्म तु कर्त्रा विकारमारोप्यत इति प्रतीतमेव। एव चेतरेतरसापेक्षः कर्तृकर्मक्रिया-विधिरिति सिद्ध भवति। [3]यच्च दात्रदृष्टान्तात् ज्ञानेन करणभूतेनार्थ एव विशेषः क्रियते, न ज्ञातरि पुरुषे इत्युच्यते तदप्यनुपासितगुरोर्वच। यदि हि दात्रेण [4]लवितुर्न विशेषः कश्चिदाधीयत इति पक्षीक्रियते तदा दात्रसम्बन्धात् प्राग्वद् दात्रसम्बन्धेऽपि न स्याल्लवनक्रिया पुरुषस्य तिलतुषत्रिभागमात्रस्यापि, तत्र विकारस्या-भावात्। तस्मादभ्युपगन्तव्यमेतद् यदुत दात्रेण साधकतमेन कृत्वा पुरुषे कश्चिद् विकार. क्रियत इति। एवं ज्ञानेनापि ज्ञातरि अर्थग्रहणप्रवणतालक्षणो विशेषः क्रियते एवेत्यभ्युपगन्तव्यम्। सर्वथा अनाहितातिशयस्य त्वात्मन. प्रागवस्थायामिव विव-क्षितज्ञेयविषयो बोधो न स्यात्, तस्माद् विवशेनाप्यभ्युपगन्तव्यमिद यदुत ज्ञान-मात्मन. कथञ्चिदभिन्नं स्वसंविदितं च, अन्यथा तु न कथञ्चनाप्यर्थग्रहणमुपपद्यत इति।

1 'यावन्नायात्मनो' इति च–पाठ। 2 'कर्मणो विकार' इति च–पाठ। 3 'यत्वदात्र०' इति च–पाठ। 4 'लवितरि विशेष' इति क–पाठ।

(मूलम्)

**भासितानामप्यन्धादिभिर्घटादीनामदर्शनात् । क्रियान्तराभ्युपगमे च तत्राप्ययमेव वृत्तान्तोऽस्मन्मतानुवादो वेत्यलं प्रपञ्चेन ॥**

**निर्णीतमेतदस्मद्गुरुभिः प्रमाणमीमांसादिषु "परोक्षप्रकृतेरर्थप्रत्यक्षताऽयोगात्, स्वप्रत्यक्षीकरणे च चेतनायाः कथं तद्ध्यात्मावेदनम-**

(स्वो० व्या०)

कृत्वा। इत्थं चैतदङ्गीकर्त्तव्यमित्याह—**प्रदीपाद्यवभासितानामप्यन्धादिभिः**—प्रमातृभिः स्वक्रियाशून्यैर्**घटादिनामदर्शनात्** लौकिकमेतत् । **क्रियान्तराभ्युपगमे च** आत्मनः किमित्याह—**तत्राप्ययमेव वृत्तान्तः**—अनन्तरोदितः **अस्मन्मतानुवादो वा** ज्ञानात्मधर्मतया । इत्यलं **प्रपञ्चेन** ॥

**निर्णीतमेतदस्मद्गुरुभिः**—पूर्वाचार्यैः **प्रमाणमीमांसादिषु** ग्रन्थेषु। किंविशिष्टेन ग्रन्थेनेत्याह—**परोक्षप्रकृतेरि**ति । एवमादिनेति योगः[1] । परोक्षप्रकृतेः—परोक्षभावस्य, ज्ञानस्येति प्रक्रमः, **अर्थप्रत्यक्षताऽयोगात्, स्वप्रत्यक्षीकरणे च**—आत्मप्रत्यक्षीकरणे च, अर्थस्येति प्रक्रमः, ज्ञातताकरणेनेत्यर्थः, **चेतनायाः**—बुद्धेः

(विवरणम्)

न चैतद् वाच्यं यथा दात्रेण भिन्नेनाप्यतिशयः क्रियते पामरस्य, एवं ज्ञानेनापि भिन्नेन सता पुरुषस्य विशेषः करिष्यते इति । यतो[2] नैव दात्रेणैकान्तेनाविद्यमाना शक्तिः पामरस्याधीयते, किन्तु तस्मादभिन्नैव सा तेन पुष्टीक्रियते । तथा चोक्तम्—

"न हि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते" इति ।

यदि त्वविद्यमानाऽपि शक्तिर्लवित्रेण लवितुराधीयते तदोपलशकलेऽपि किं न क्रियते, अविद्यमानताया अविशेषात् ? । तस्माल्लवितुरात्मभूतैव शक्तिः, बाह्यं तु करणमपेक्षत उपष्टम्भाय, न त्वविद्यमानायाः शक्तेर्जननाय। यत् त्वन्तरङ्गं करणं तत् कथं भिन्नं सदतिशयमाधत्ते, अन्तरङ्गत्वक्षतिप्रसङ्गात् ? । न सर्वथा भिन्नेन वस्तुना भिन्नस्य वस्तुनाऽतिशयः क्रियते, मेरु-मकराकरयोरपि परस्परमतिशयकरणप्रसङ्गात् । तस्मादभिन्नमेव ज्ञानमात्मनोऽतिशयालमिति[3] स्थितम् ॥

(१५) **अर्थस्येति प्रक्रम[4] इति** । अर्थस्य—घटादेः सम्बन्धिन आत्मनः प्रत्यक्षीकरणे इत्यर्थः। केन यत् (?) प्रत्यक्षीकरणमित्याह—(१५) **ज्ञातताकरणेने**ति । ज्ञायते यः कर्मतापन्नः स ज्ञातः, ज्ञातस्य भावो ज्ञातता तस्याः करणं—विधानं तेन, ज्ञायमानत्वकरणेनेत्यर्थः ॥

---

१ द्रष्टव्यं ७१तमं पृष्ठम् । २ 'यतोऽनेनैव' इति क-पाठः । ३ 'शयमिति' इति क-पाठः । ४ 'प्रतिक्रम इति' इति ख-पाठः ।

(मूलम्)

**वेदने वा [१]चेतनात्वम्? । न हि परप्रकाशनात् स्वात्माप्रकाशक इह प्रकाशो नाम । न च तदनुभवमन्तरेण स्मृतिः । अस्ति चेयं ज्ञानविषयाऽपि, तथाऽर्थदर्शनरूपैवेयमिति न लौकिकम्, तदा तथा-**

(स्वो० व्या०)

**कथं तर्ह्यात्मावेदनमवेदने** [२]**वाऽऽत्मनश्चेतनात्वं** कथम्? **न हि परप्रकाशनादेव आ(?स्वा)त्माप्रकाशकः** सन् **इह**-लोके **प्रकाशो नाम**,प्रकाशश्च ज्ञानमिति । इहैवाभ्युच्चयमाह-**न चे**त्यादि । न च **तदनुभवं**-चेतनानुभवम्, ज्ञानानुभवमित्यर्थः, **अन्तरेण**-विना **स्मृति**र्युज्यते । **अस्ति चेयं**-स्मृतिः **ज्ञानविषयाऽपि**, तथाऽनुभूतेः, [३]अर्थान्तरस्मृतिनिबन्धनत्वेनार्थदर्शनं **तथाऽर्थदर्शनं** तदेव रूपं यस्याः सा तथाविधा । एतदुक्त भवति-अर्थदर्शनात् प्राग्दृष्टेऽर्थे स्मृतिस्ततस्तदा बुद्ध्यनुमानं

(विवरणम्)

(७) **कथं तर्ह्यात्मावेदनमि**ति । [४]अर्थप्रत्यक्षताकरणो हि चेतनाया नियमादात्मीयस्वरूपाव[५]भासः समस्ति यदुताहमेतस्यार्थस्य ग्रहणरूपतया परिणतेति ॥

(७) **चेतनात्वं क**[६]**थमि**ति । यो य आत्मीय स्वरूपं नावबुद्ध्यते स स न चिद्रूपः, यथा लेष्टुः । नावबुध्यते चात्मीयं स्वरूपं चेतना **मीमांसक**मते, अतः कथं सा चेतनात्वमाप्नुयादिति ? ॥

(८-९) **प्रकाशश्च ज्ञानमि**ति । इह यो यः प्रकाशः स स स्वपरोभयप्रकाशको दृष्टः, यथा प्रदीपादिप्रकाशः । प्रकाशश्च ज्ञानम्, अतः स्वपरोभयप्रकाशकं भवत्विति ॥

(११) **तथाऽनुभूते**रिति । ज्ञानगोचराऽपि स्मृतिरनुभूयते लोके यदुत मम पूर्वकाले नीलाकारं ज्ञानमभवदिति । न चेयमस्वसंविदितज्ञानवादिनो मते घटते, ज्ञानस्य पूर्वकालेऽननुभवात् । न चाननुभूतेऽपि विषये स्मृतिः प्रवर्त्तते, अतिप्रसङ्गव्याघातात् । अतोऽभ्युपगन्तव्यमेतद् यदुत पूर्वकाले ज्ञानेनात्मीय स्वरूपमात्मनैवावबुद्धमासीत् । ततः प्राच्यामवस्थां ज्ञानमात्मप्रतिबद्धा स्मरतीति स्मृतिरुत्पद्यत [७]इत्यभिप्रायः ॥

(१२) **ततस्तदा बुद्ध्यनुमानमि**ति । तत.-प्राग्दृष्टार्थस्मृते. सकाशात् तदा-अतीते काले यका बुद्धिस्तस्या अनुमान भवति । यतो ममातीतार्थगोचरा स्मृतिः साम्प्रतमुत्पन्ना अत( ) ज्ञाने(?ते) नून मम प्राक्काले तद्विषया बुद्धिरभवदिति रूप(?स्थित)म् ॥

१ 'चेतनत्व न हि' इति ग-पाठ । २ 'चा मन०' इति ङ-पाठ । ३ 'तथार्थान्तर०' इति ङ-पाठ । ४ 'अथ प्रत्यक्षता' इते ख-पाठ । ५ भास प्रकाशश्च ज्ञाह(?)मेतस्यार्थ०' इति ख-पाठ. । ६ 'कथ यमिति' इति ख-पाठ । ७ 'इति पराभिप्राय' इति ख-पाठ ।

( मूलम् )

**तदभावात् क्वचिदपवर्गोपपत्तेरिति। एतेन निर्विषयज्ञानाभाव उक्तः। न चात्र प्रमाणम्, अनुमानाभावात् तल्लक्षणायोगात् अर्थापत्तेरप्य-**

( स्वो० व्या० )

ततस्तत्स्मृतिरिति। एव**मर्थदर्शनरूपैवेयं**–स्मृति**रिति न लौकिकं तदा**–तस्मिन् अर्थग्रहणकाले **तथा**–तेन स्मर्त्तव्यग्रहणरूपेण **तदभावात्** तस्य–स्मर्त्तव्यस्यार्थस्याभावात्। अभावश्च **क्वचिदपवर्गोपपत्ते**र्विनाशसम्भवात्। ततश्च निर्विषयं तदर्थस्मरणमित्यर्थः, न च निर्विषयं ज्ञानमिष्यते परैः। अत एवाह–**एतेने**त्यादि। एतेन–अनन्तरोदितेन **निर्विषयज्ञानाभाव उक्तः**, तैमिरिककेशादिज्ञानाभाव इत्यर्थः। **न चात्र प्रमाणम्**, अर्थज्ञानाद् बुद्धाविति प्रक्रमः। [1]नन्वस्त्यनुमानं यदाह **भाष्यकारः**–"ज्ञाते त्वनुमानादवगच्छति" इति। एतदाशङ्क्याह–**अनुमानाभावात्**। अभावश्च **तल्लक्षणायोगात्**–अनुमानलक्षणायोगात्

( विवरणम् )

(६) **ततस्तत्स्मृति**रिति। ततः–तदा बुद्ध्यनुमानात् तत्स्मृतिः तस्याः–तदा बुद्धेः स्मृतिः–स्मरणम्॥

(६) [2]**एवमर्थदर्शनरूपैवेयं स्मृतिरिति न लौकिकमिति**। एवम्–उक्तेन प्रकारेणार्थदर्शनरूपैव–वार्तमानिकार्थदर्शनरूपैवेयं स्मृतिरित्येतत् परकीयं मतं न–नैव लौकिकम्, अपि तु लोकमार्गोत्तीर्णम्। अयमत्र भावः–साम्प्रतकालभाविनोऽर्थदर्शनात् प्राग्दृष्टेऽर्थे स्मृतिस्ततस्तदा बुद्ध्यनुमानं ततस्तत्स्मृतिर्भवति। यतस्ततो वार्तमानिकार्थदर्शनरूपैवेयमस्तु, तद्धेतुकत्वात् [3]तस्या इति यदुच्यते **मीमांसकेन** तदलौकिकमेवेति॥

(८) **विनाशसम्भवादि**ति। यदि [4]प्राच्यार्थस्मरणात् तद्विषयज्ञानस्मृतिरित्यङ्गीक्रियते, तदा विद्युदादिः क्षणिकः पदार्थस्तत्कालविनष्टः कथं साम्प्रतं स्वज्ञानस्मृतिहेतुः स्यादिति ?। यदि तु ज्ञानं स्वसंविदितमभ्युपेयते तदा तस्य साम्प्रतमपि पर्यायान्तराविष्टस्य सन्निहितत्वात् स्मृतिर्युज्यत एवेति॥

(१०) **तैमिरिककेशादिज्ञानाभाव** इति। तैमिरिकस्य यत् केशादिज्ञानं तस्याभावो **भट्ट**मते प्राप्नोतीत्यर्थः। तथाहि–तैमिरिकस्य शशधरद्वितयगोचरमुत्पद्यते ज्ञानम्, तत्र च बाह्यविषयस्यासत्त्वात्। अतः कथं तत्र बाह्यार्थः प्राकट्याद् विज्ञानमनुमीयते ?। न ह्यविद्यमानोऽर्थः प्रकटो भवति, अतो विज्ञानमेव तत्तादृशमुपप्लवरूपं स्वसंविदितमभ्युपगन्तव्यम्। [5]स्वसंविदिते हि तस्मिन्नभ्युपगम्यमाने आत्मीयस्वरूपावबोध आत्मनैवोपपद्यते, अन्यथा तु भ्रान्तविज्ञानाभाव एव स्यादिति॥

(११) **अर्थज्ञानाद् बुद्धाविति प्रक्रम** इति। अर्थज्ञानात्–अर्थप्राकट्याद् बुद्धौ साध्यायां इत्येषोऽर्थः प्रक्रमाल्लभ्यत इत्यर्थः॥

---

१ 'न त्वस्त्यनु०' इति ङ–पाठः। २ 'एवं दर्शनरूपै०' इति क–पाठः। ३ 'तस्येति' इति क–पाठः। ४ 'प्राप्त्यार्थ०' इति च–पाठः। ५ 'स्वसंविदितेदितद्धि तस्मि०' इति ख–पाठः।

( मूलम् )

**भावेऽप्रवृत्तेर्बुद्धिव्यक्तेश्च तदाऽसत्त्वेनाभावात् तदव्यतिरिक्तस्य च सामान्यस्येतरस्यापि तदग्रहणे[1] ग्रहणात् । इति स्वात्मन्यपि तत्सम्बन्धिचेष्टाऽग्रहे परावबोधाय शास्त्रकरणमयुक्तमित्येवमादिना"॥**

( स्वो० व्या० )

पक्षधर्मत्वाद्यभावेन अर्थापत्तिरनुमानशब्देनाभिप्रेतेत्येतदाशङ्क्याह–**अर्थापत्तेरप्यभावेऽप्रवृत्तेः** कारणात् भावोपलम्भकप्रमाणान्तर्गतत्वेन। यदि नामैवं ततः किमित्याह–**बुद्धिव्यक्तेश्च** अनुमेयायाः **तदा**–तस्मिन्ननुमानकाले**ऽसत्त्वेन** हेतुना क्षणिकतया**ऽभावात् तदव्यतिरिक्तस्य च**–बुद्ध्यव्यतिरिक्तस्य च **सामान्यस्य** बुद्धिसामान्यस्याभावात् **इतरस्यापि**–व्यतिरिक्तस्य व्यतिरिक्ततया बुद्धिसामान्यस्य[2] **तद्ग्रहे** । किमित्याह–**अग्रहणात्** । **इति**–एव **स्वात्मन्यपि तत्सम्बन्धिचेष्टाऽग्रहे**–बुद्धिसम्बन्धिचेष्टाऽग्रहे सति **परावबोधाय शास्त्रकरणमयुक्त**मेव(?), परपरिज्ञानासम्भवादिति भावः। **एवमादिना** ग्रन्थेन निर्णीतमेतदस्मद्गुरुभिः । निर्णीता हेतुवक्तव्यता ॥

( विवरणम् )

( ७ ) **पक्षधर्मत्वाद्यभावेने**ति । अर्थप्राकट्याद्धेतोः सकाशादर्थगोचरज्ञानस्य सत्त्वं साध्यते **मीमांसकैः**। न च[3]ार्थप्राकट्यस्य ज्ञानेन सह पक्षधर्मत्वादयो हेतुधर्माः परिच्छेत्तुं पार्यन्ते, क्षणिकत्वेन ज्ञा[4]नस्यार्थप्राकट्यसमये प्रलयप्राप्तत्वात्। ननु यद्यप्यर्थप्राकट्यसमये विवक्षितबुद्धिक्षणो नास्ति, तथापि बुद्धिसामान्यं भविष्यतीत्याह–(१०-१२) **तदव्यतिरिक्तस्ये**त्यादि यावद् **ग्रहणा**दिति । अयमभिप्रायः–तद्बुद्धिसामान्यं विवक्षितबुद्धिक्षणादव्यतिरिक्तं व्यतिरिक्तं वा इति विकल्पयुगलम् । तत्र यद्यव्यतिरिक्तमिति पक्षः कक्षीक्रियते स न घटत एव, विवक्षितबुद्धिक्षणनाशे तदव्यतिरिक्ततया तत्सामान्यस्यापि विनष्टत्वात्, अन्यथा ह्यभेद एव न स्यात् । अथ व्यतिरिक्तमङ्गीक्रियते तर्हि बुद्धिव्यतिरिक्तेन ग्रहणे गृह्यत एव । ततो न हि गोचरप्रतीता गोत्वप्रतीतिः कस्याप्युपजायते । न च बुद्धिव्यतिरिक्ते ग्रहणे कश्चिदुपायस्ते सम्भवति, अर्थप्रा[5]क्कालबुद्धेर्विनष्टत्वात् ॥

(१३) **बुद्धिसम्बन्धिचेष्टाऽग्रहे** इति । बुद्धिसम्बन्धिन्याश्चेष्टाया अग्रहे। मदीया बुद्धिरेवं च भ[6]वत्येवंविधविरोधाभावे इत्यर्थः ॥

(१४) **एवं परिज्ञानासम्भवा**दिति। न ह्यात्मन्यज्ञाते सति परः परिज्ञायत इति ॥

१ 'ग्रहेऽग्रहणात्' इति तु व्याख्यायाम् । २ 'बुद्धिरव्यक्तग्रहे किमित्याह' इति ङ–पाठ । ३ 'चार्थप्राकनचार्थप्राकव्यस्य' इति ख–पाठ । ४ 'तस्यार्थप्राकट्य०' इति क–पाठः । ५ 'प्राकव्या[र]काले बुद्धे०' इति ख–पाठ. । ६ 'भाव्ये त्येवं०' इति ख–पाठ. ।

(मूलम्)

साम्प्रतं यदुक्तं[1] 'द्विचन्द्रादिवत्' इत्येतन्निरूप्यते । अयं दृष्टान्तो हि वर्तते । अस्य चायमर्थोऽभिप्रेतः–योऽयं द्वितीयचन्द्रोऽलीकप्रतिभासस्तस्य सहोपलम्भनियमोऽस्ति । न चासौ ततो भिन्नः, भेदेऽवस्तुत्वाप्रसङ्गात् । ततश्च विज्ञानमेव तत्तादृशं बाह्यार्थग्रहणस्वभावमिवावभासमानमप्यबहिर्गोचरमेव । एवमखिलमेव विज्ञानमिति । एतच्चानालोचितसुन्दरम्, तस्य भ्रान्तत्वेन तथात्वाविरोधात् । भ्रान्तत्वं च बाधकप्रत्ययोपलब्धेर्दोषजत्वेन सकललोकसिद्धत्वात् तदनुभव एव तथाप्रतीतेः । एवं तद्बलात् तज्जातीयानामेव तत्त्वव्यवस्थापनं युक्तम्, न तु सामान्येन सर्वेषाम्, अतिप्रसङ्गात् । न हि ग्राह्या-

(स्वो० व्या०)

साम्प्रतं यदुक्तं पूर्वपक्षग्रन्थे[2] एव–द्विचन्द्रादिवदिति निदर्शनत्वेन एतन्निरूप्यते । अयं हि दृष्टान्तो वर्तते । अस्य चायमर्थोऽभिप्रेतो दृष्टान्तस्य योऽयं द्वितीयचन्द्रः । किंविशिष्ट इत्याह–अलीकप्रतिभासो बहिस्तदभावेन तस्य सहोपलम्भनियमोऽस्ति[3] बहिश्चन्द्रेण । न चासौ–चन्द्रस्ततः–अलीकप्रतिभासाद् भिन्नः । कुत इत्याह–भेदे वस्तुत्वप्रसङ्गाद् बहिर्द्वितीयचन्द्रस्यापि वस्त्वभिप्रायः । ततश्चेत्यादि । ततश्च विज्ञानमेव तत्तादृशं–द्विचन्द्राकारं बाह्यार्थग्रहणस्वभावमिव अवभासमानमपि तथाप्रतीतेः । किमित्याह–अबहिर्गोचरं–बहिस्तस्य द्वितीयचन्द्रमसोऽभावात् । अयं भावः– किल परस्यापि सिद्ध एव दृष्टान्तः । अयमर्थोपनयः । एवं द्विचन्द्रवदखिलमेव विज्ञानं बाह्यार्थग्रहणस्वभावमिव अबहिर्गोचरमिति । अत्राह सिद्धान्तवादी–[4]एतच्चानालोचितसुन्दरम्–अनन्तरोदितम् । कथमित्याह–तस्य–द्विचन्द्रविज्ञानस्य भ्रान्तत्वेन हेतुना तथात्वाविरोधात्–अबहिर्गोचरत्वाविरोधात् । भ्रान्तत्वं च तस्य बाधकप्रत्ययोपलब्धेः तिमिरापगमेन । एतत्स्थिरीकरणायैवाह–दोषजत्वेन तिमिरमधिकृत्य सकललोकसिद्धत्वात् द्विचन्द्रज्ञानस्य तदनुभव एव–द्विचन्द्रानुभव एव सति तैमिरिकस्यापि तथाप्रतीतेः–दोषजत्वेन प्रतीतेः । प्रतीतिश्च चिकित्साकरणगम्या एवं च कृत्वा तद्बलात्–द्विचन्द्रज्ञानबलात् तज्जातीयानामेव भ्रान्तानां तत्त्वव्यवस्थापनं युक्तं साधर्म्यसिद्धेः । न तु सामान्येन सर्वेषां

(विवरणम्)

(२०) परस्यापीति । आचार्यस्य ॥

१–२ ५१तमे पृष्ठे । ३ 'यतोऽस्ति' इति क-पाठः । ४ 'एतदप्या' इति क-पाठः ।

( मूलम् )

कारादिमद् विज्ञानमनुभूयत इति तत्तत्स्वभावतया सर्वस्यैव तथाविधत्वकल्पनं न्यायोपपन्नं बुद्धविज्ञानानामतथाविधत्वात्। न चेदमतथाविधत्वममीषां तदितरेभ्यो [1]भेदकभेदमन्तरेण, न्यायतोऽनुपपत्तेः, पृथग्जनविज्ञानानामपि प्रमाणतदाभासाभ्युपगमात्, तत्रापि संवादिज्ञानजनकानां तदितरेभ्यस्तथैव भेदात्, भेदकमन्तरेण समानभेदहेतुमात्रात् तथा भेदासिद्धेः, अतिप्रसङ्गादिति। एवं द्विचन्द्रेतरादिविज्ञानानामपि भेदको भेदः समभ्युपगन्तव्यः। स च [2]भेद-

---

( स्वो० व्या० )

–ज्ञानानाम्। कुत इत्याह–**अतिप्रसङ्गात्**। एनमेवाह **न ही**त्यादिना। न हि **ग्राह्याकारादिमत्**, 'आदि'शब्दात् ग्राहकाकारपरिग्रहः, **विज्ञानमनुभूयत इति** कृत्वा **तत्स्वभावतया** कारणेन **सर्वस्यैव**–विज्ञानस्य **तथाविधत्वकल्पनं**–ग्राह्याकारादिमत्त्वकल्पनं **न्यायोपपन्नम्**। कथं नोपपन्नमित्याह–**बुद्धविज्ञानानां** परपक्षेऽपि **अतथाविधत्वा**[3]**त्**, अग्राह्याकारादिमत्त्वादित्यर्थः। यदि नामैवं ततः किमित्याह–**न चेदमि**त्यादि। न चेद**मतथाविधत्वम्**–अनन्तरोदित**ममीषां–बुद्ध**विज्ञानानां **तदितरेभ्यः**–ग्राह्याकारादिमद्विज्ञानेभ्यः सकाशाद् **भेदकभेदं**–भेदकविशेष**मन्तरेण**–विना। कुत इत्याह–**न्यायतोऽनुपपत्तेः**, अतथाविधत्वस्य, समानहेतूनामसमानत्वायोगादित्यर्थः। समानं च बोधमानं परनीत्या सर्वविज्ञानहेतुस्तदपराभावेनेति भावनीयम्। तथा **पृथग्जनविज्ञानानामपि**–ग्राह्याकारादिमतां **प्रमाणतदाभासत्वाभ्युपगमात्** कारणात्। एवं च **तत्रापि**–पृथग्जनविज्ञानसमुदाये **संवादिज्ञानजनकानां** प्रमाणानां **तदितरेभ्यः**–तदजनकेभ्यः प्रमाणाभासेभ्यः सकाशात्। किमित्याह–**तथैव**–तत्तदाभासतया पृथग्जनबुद्धविज्ञानवद् **भेदात्**। यदि नामैवं ततः किमित्याह–**भेदकं**–वस्त्वन्तर**मन्तरेण समानभेदहेतुमात्रादेव**–केवलात् **तथा**–जातिभेदेन **भेदासिद्धेः**। असिद्धिश्च **अतिप्रसङ्गात्**, बुद्धविज्ञानानामपि जातिभेदप्रसङ्गेने**ति**। **एवं द्विचन्द्रेतरादिविज्ञानानामपि भेदकः** कश्चिद् **भेदः समभ्युपगन्तव्यो** येन तानि

---

१ 'भेदकम्, भेद०' इति ग–पाठः। २ 'भेदकार्थं' इति क–पाठः। ३ 'त्वात् ग्राह्य०' इति ङ–पाठः।

( मूलम् )

कोऽर्थ एवास्तु, किमन्येन स्वहेतुपरम्पराजनितहेतुभेदादिना कल्पितेन बोधमात्रतत्त्ववादिनोऽस्य प्रदीर्घपरम्परायामपि तन्मात्रातिरेकेण विशेषासिद्धितोऽभिधानमात्रत्वादिति । अर्थस्तु सत्क्षयोपशमादिमतोऽभ्रान्तज्ञानहेतुरितरस्य तु विपर्ययहेतुरिति न किञ्चिदत्रावद्यम्, लोकसमयसिद्धत्वात् । आह–आन्तरहेतोरेव तद्भेदाभ्युपगमे को दोषः ?। ननु न कश्चित्, अपि तु बाह्यार्थसिद्धिरेव । बोधमात्रस्वतत्त्वानि हि सर्वचित्तानि, न तदतिरिक्तं भेदकमिति तन्मात्रनिबन्धनत्वाद् विजातीयभेदासिद्धेः, अस्य चानुभवसिद्धत्वात् तद्भेदापादकं तत्कालुष्यकारि वस्तु सत् कर्माङ्गीकर्त्तव्यम्, अन्यथा बुद्धस्येव

( स्वो० व्या० )

तदन्येभ्यो बुद्धादिविज्ञानेभ्यो भिद्यन्त इति । स च भेदकः–भेदः अर्थ एव अस्तु बाह्यः, किमन्येन स्वहेतुपरम्पराजनितहेतुभेदादिना कल्पितेन? 'आदि'शब्दाद् वासनाशक्त्यादिग्रहः । किमिति तत्कल्पनाऽयुक्तेत्याह–बोधमात्रतत्त्ववादिनः–वादिनः अस्य–स्वहेतुपरम्पराजनितहेतुभेदादेः प्रदीर्घपरम्परायामपि सत्यां तन्मात्रातिरेकेण–बोधमात्रातिरेकेण विशेषासिद्धितः कारणादभिधानमात्रत्वादस्येति । अर्थस्तु बाह्यः सत्क्षयोपशमादिमतः पुंसः, 'आदि'शब्दात् [1]सातोदयादिग्रहः, अभ्रान्तज्ञानहेतुः–एकचन्द्रादिज्ञानहेतुः; इतरस्य तु–असत्क्षयोपशमादिमतः विपर्ययहेतुः–द्विचन्द्रादिज्ञानहेतुरिति–एवं न किञ्चिदत्रावद्यं–पापम् । तथाहि–नैकचन्द्रादिव्यतिरेकेण कृष्णक्षपादौ द्विचन्द्रज्ञानोदय इत्यपालोचनीयमिति न किञ्चिदत्रावद्यम् । कुत इत्याह–लोकसमयसिद्धत्वात्[2] । आह–आन्तरहेतोरेव सकाशात् तद्भेदाभ्युपगमे–द्विचन्द्रादिज्ञानभेदाभ्युपगमे, प्रक्रमाद् बुद्धादिज्ञानेभ्यः, को दोष इति ? । एतदाशङ्क्याह–न कश्चिदन्यः, अपि तु बाह्यार्थसिद्धिरेव । कथमित्याह–बोधमात्रस्वतत्त्वानि–बोधमात्रस्वलक्षणानि यस्मात् सर्वचित्तानि, न तदतिरिक्तं–बोधातिरिक्तं भेदकं वस्तु इति–एवं तन्मात्रनिबन्धनत्वात्–बोधमात्रनिबन्धनत्वात् विजातीयभेदासिद्धेः ग्राह्याकारादिमत्त्वेन अस्य च–विजातीयभेदस्य अनुभवसिद्धत्वात् हेतोः । किमित्याह–तद्भेदापादकं–विजातीयभेदापादकं बुद्धविज्ञानेभ्यः, पृथग्जनविज्ञानानामिति प्रक्रमः । तत्कालुष्यकारि–बोधमात्रकालुष्यकारि वस्तु सत्–अपरिकल्पितं कर्माङ्गीकर्त्तव्यं ज्ञानावरणीयादि; अन्यथा–तदनभ्युपगमे बुद्धस्येव

१ सातवेदनीयकर्मण उदयादिग्रहः । २ 'त्वात् आन्तर०' इति क–पाठः ।

( मूलम् )

**प्रभूतबुद्धानां वा स्वरूपभेदेऽपि चित्तमात्राद् भ्रान्तेतरभेदाभाव इति बाह्यार्थसिद्धिः । इयं चैवमर्थतोऽसकृदुक्तैवाभिनिविष्टस्त्वत्र पर इति पौनःपुन्येनोच्यते ॥**

**एवं स्वप्नविज्ञानमपि जाग्रद्विज्ञानविजातीयम्, आविलबोधवद्, भूयस्तथादर्शकत्वेऽपि स्वमिथ्यात्वावसाय[1]हेतुः प्रवृत्तिनिवृत्तिकृदाविद्धदङ्गनादिसिद्धमनुभूतदृष्टादिनिमित्तं भ्रान्तमेव । न तन्निदर्शनात् तद्विजातीयमपि सर्वं तथा भवितुमर्हति । न च तदपि चित्तमात्रोद्भवम्, बुद्धादीनामसम्भवात्, अपि तु कर्माविलचित्तजमेव ।**

( स्वो० व्या० )

कस्यचिदेकस्य **प्रभूतबुद्धानां वा** सन्तानभेदेन **स्वरूपभेदेऽपि** सति व्यत्ययपेक्षया **चित्तमात्रात्** केवलात् **भ्रान्तेतरभेदाभावः** बोधमात्राविशेषात् **इति**–एव बोधाद् भिन्नकर्मभावेन **बाह्यार्थसिद्धिः** । परिभावनीयमेतत् **इयं च**–बाह्यार्थसिद्धिः **एवम्**–उक्तनीत्याऽर्थतः–सामर्थ्येन **असकृदुक्तैवे**हैव ग्रन्थे**ऽभिनिविष्टस्त्वत्र**–बोधमात्रतत्त्ववादे **पर इति** कृत्वा **पौनःपुन्येन उच्यते** बाह्यार्थसिद्धिः ॥

**एवं स्वप्नविज्ञानमपि जाग्रद्विज्ञानविजातीयम्** । किंविशिष्टमित्याह–**आविलबोधवत्**–अस्पष्टबोधवद् **भूयस्तथादर्शक**[2]–प्रायः पुनस्तथादर्शकं यथा सकृद् दृष्टमिति क्वचिद् **दर्शकत्वेऽपि** द्विस्तथा स्वप्नदर्शने **स्वमिथ्यात्वावसायहेतुः** प्रबुद्धविज्ञानतस्तथोपलब्धेः **प्रवृत्तिनिवृत्तिकृत्**–प्रवृत्तिनिवृत्तिकरणशीलं ततः प्रवृत्त्यसिद्धेः **आविद्धदङ्गनादिसिद्धं** स्वप्नविज्ञानमेवम्भूत**मनुभूतदृष्टादिनिमित्तम्**,

"अणु[3]हूयदिट्ठविं(?चि)ति(अ)सुअप[4]गइविगारदेवयाणूवा ।
सुमिणस्स निमित्ताइं पुण्णं पावं च णाभावो ॥"[5]

इत्यादिवचनादत एवम्भूतमेतद् **भ्रान्तमेव । न तन्निदर्शनात्**–स्वप्नविज्ञानोदाहरणेन **तद्विजातीयमपि**–जाग्रद्विज्ञानं **सर्वं तथा भवितुमर्हति**–भ्रान्तं भवितुमर्हति । **न च तदपि**–स्वप्नज्ञानं **चित्तमात्रोद्भवम्** । कुत इत्याह–**बुद्धादीनामसम्भवात्** स्वप्नविज्ञानस्य, **अपि तु कर्माविलचित्तजमेव** स्वप्नविज्ञानम्

( विवरणम् )

(२३) [6]अणूवा इति । अनूपः सजलो देशः ॥

१ 'हेतुप्रवृत्ति०' इति ग–पाठ । २ 'अदर्शक' इति ङ–पाठ । ३ 'हूयदिट्ठतिअसुअ०' इति क–पाठ. । ४ 'पयइविगारदेवयाणूव' इति ङ–पाठ । ५ छाया–अनुभूतदृष्टद्दन्ति(?चिन्तित)श्रुतकृतिविकारदेवताऽनूपा (?) । स्वप्नस्य निमित्तानि पुण्य पाप च नाभाव ॥ ६ 'अणूपा' इति च–पाठ ।

(मूलम्)

**न ततोऽपि न बाह्य(?ह्यार्थ)सिद्धिरित्यवहितैर्भावनीयम् ॥**

**इतश्च बाह्यार्थसिद्धिः, विज्ञानमात्रस्यैवायोगात्, विकल्पानुपपत्तेः। विज्ञानं हि ग्राह्यरूपं वा स्याद् ग्राहकरूपमुभयरूपमनुभयरूपम्, प्रकारान्तरासम्भवात्। तत्र ग्राह्यरूपत्वे सकलविज्ञानानामेव रूपान्तराभावादेकस्वभावत्वाद् ग्राहकविज्ञानानुपपत्तेः ग्राह्यरूपत्वायोगात् निमित्ताभावादतिप्रसङ्गापत्तेस्तदभावप्रसङ्गतः प्रतीत्यादिबाधा ॥**

**ग्राहकरूपत्वेऽप्यभि[1]धानान्तरेणाप्यस्यैवानुवृत्तेरिति। ग्राहकमेव**

(स्वो० व्या०)

अन्यच्च भ्रान्तं **न ततोऽपि**–स्वप्नविज्ञानात् **न बाह्यार्थसिद्धिः**, किन्तु बाह्यार्थसिद्धिरेव कर्माविलचित्तजत्वेन तद्भिन्नकर्मसिद्धे**रित्यवहितैर्भावनीयमि**ति ॥

अभ्युच्चयमाह **इतश्च बाह्यार्थसिद्धिरि**त्यादिना। कथमित्याह–**विज्ञानमात्रस्यैव**–केवलस्य **अयोगात्**। अयोगश्च **विकल्पानुपपत्तेः**। एनामेवाह–**विज्ञानं हि ग्राह्यरूपं वा स्या**देकान्तेन **ग्राहकरूपमुभयरूपमनुभयरूपं** वेति विकल्पा एतावत एव, **प्रकारान्तरासम्भवात्**। किञ्चातः? सर्वथाऽपि दोष इत्येतदाह **तत्रे**त्यादिना। तत्र **ग्राह्यरूपत्वे** विज्ञानस्यैकान्तिके किमित्याह–**सकलविज्ञानानामेव** अण्वादिरूपवद् **रूपान्तराभावात्**। अभावश्च **एकस्वभावत्वात्**। यदि नामैवं ततः किमित्याह–**ग्राहकविज्ञानानुपपत्तेः**। यद्येवं ततः किमित्याह–**ग्राह्यरूपत्वायोगात्**। अयोगश्च **निमित्ताभावात्**, सम्बन्ध्यभावादित्यर्थः। तदभावेऽपि ग्राह्यरूपत्वाभ्युपगमे**ऽतिप्रसङ्गापत्तेः**–ग्राहकरूपत्वापत्त्या **तदभावप्रसङ्गतः**–ग्राह्यरूपत्वाभावप्रसङ्गतः। किमित्याह–**प्रतीत्यादिबाधा** उभयाभावेन। 'आदि'शब्दात् तदभ्युपगमग्रहः ॥

**ग्राहकरूपत्वेऽपि** ज्ञानस्यैकान्तेनाभ्युपगम्यमाने किमित्याह–**अभिधानान्तरेणास्यैव**–अनन्तरोदितस्य **अनुवृत्तेः** कारणात् प्रतीत्यादिबाधेति। इह चाभिधानान्तरयोजनैवं कार्या–तत्र ग्राहकरूपत्वे सकलविज्ञानानामेव रूपान्तराभावादेकस्वभावत्वाद् ग्राह्यविज्ञानानुपपत्तेः ग्राहकरूपत्वायोगान्निमित्ताभावादतिप्रसङ्गापत्तेः

(विवरणम्)

(१२) [2]**अन्यच्च भ्रान्त**मिति। अन्यदपि यद् भ्रान्तं ज्ञानं मृगतृष्णिकादिगोचरं तदपि कर्माविलचित्तजमेव। वृत्तिकृता सुखावबोधाय सूत्रनिरपेक्षमुक्तमिति ॥

१ 'धानान्तरेणैवानुवृत्तेरिति' ग-पाठः। २ 'अन्यत्वभ्रान्तिमिति' इति च-पाठः।

(मूलम्)

**सत् तत् संवेदनान्तरग्राह्यमिति चेत्, न, तस्योभयरूपतापत्तेः। न हि तद् येनैव स्वभावेन ग्राहकं संवेदनान्तरस्य तेनैव ग्राह्यम्, सर्वथा तदेकत्वे तद्ग्राह्यग्राहकयोस्तुल्यतापत्तिः, तत्सम्बन्धिस्वभावैकत्वान्यथाऽनुपपत्तेः, सम्बन्धमन्तरेण तत्तद्भावासिद्धिः, अतिप्रसङ्गा-**

(स्वो० व्या०)

तदभावप्रसङ्गतः प्रतीत्यादिबाधा **इति । ग्राहकमेव सत्**–भवत् **तत्**–विज्ञानं **संवेदनान्तरग्राह्यं**–विज्ञानान्तरग्राह्यम्। **इति चेत्**, एतदाशङ्क्याह–**न, तस्य**–विज्ञानस्य **उभयरूपतापत्तेः**। आपत्तिश्च **न** यस्मात् **तत्**–विज्ञानं **येनैव स्वभावेन** आत्मसत्ताख्येन **ग्राहकं संवेदनान्तरस्य**–विज्ञानान्तरस्य कर्मरूपस्य **तेनैव ग्राह्यं** सवेदनान्तरस्येति युज्यते। कुत इत्याह–**सर्वथा**–सर्वैः प्रकारैः **तदेकत्वे** तयोः–स्वभावयोरेकत्वे । किमित्याह–**तद्ग्राह्यग्राहकयोः** तस्य–विज्ञानस्य ग्राह्य-ग्राहकयोः संवेदनान्तरे तयोरित्यर्थः। तयोः किमित्याह–**तुल्यताप[1]त्तिः**। कथमित्याह–**तत्सम्बन्धिस्वभावैकत्वान्यथाऽनुपप[2]त्तेः** तयोः–ग्राह्य-ग्राहकयोः संवेदनान्तरयोः सम्बन्धिस्वभावैकत्व तद्ग्राह्यग्राहकत्वेनाधिकृतविज्ञानस्य तदन्यथाऽनुपपत्तेरिति। एतद्भावनायैवाह–**सम्बन्धमन्तरेण** एषां ग्राहकत्वादिस्वभावलक्षणं **तत्तद्भावा-**

(विवरणम्)

(१३-१४) **ग्राह्य-ग्राहकयोः संवेदनान्तरे** इति । विवक्षितं हि ज्ञानमेकस्य सवेदनस्य ग्राह्यम्, अन्यस्य च ग्राहकम्। ततश्च तद् येनैव स्वभावेन ग्राह्यं तेनैव यदि ग्राहकमित्यङ्गीक्रियते तदा नियमाद् ग्राह्य-ग्राहकयोर्विज्ञानयोरैक्यमायाति, अन्यथा विवक्षितज्ञानस्यैकस्वभावत्वाभावात् ॥

(१५-१६) **संवेदनान्तरयोः सम्बन्धिस्वभावैकत्वमिति** । ग्राह्यग्राहकलक्षणे ये सवेदनान्तरे तयोः सम्बन्धि यत् स्वभावैकत्वं विवक्षितज्ञानस्य । केन हेतुनेत्याह–(१६) **तद्ग्राह्यग्राहकत्वेनाधिकृतविज्ञानस्ये**ति । तयोः–ज्ञानान्तरयोर्ग्राह्य [3]वैकस्य ग्राहकं वा परस्य तद्ग्राह्यग्राहक तस्य भावः–तत्त्वं तेन [4]कृत्वाऽधिकृतविज्ञानस्य यत् सवेदनान्तरयोः सम्बन्धि स्वभावैकत्वम् ॥

(१६) **तदन्यथाऽनुपपत्तेरिति** । तस्य–स्वभावैकत्वस्यान्यथा–अन्येन प्रकारेण ग्राह्यग्राहकज्ञानयोरेकत्वाभावलक्षणेनानुपपत्तेः–अघटनात् । अयमत्र भावः–विवक्षितज्ञानस्य ग्राह्यग्रा[5]हकसवेदने प्रतीत्य यत् स्वभावैकत्व तत् तयोरेकत्वाभावे न घटत एवेति ॥

(१७) **सम्बन्धमन्तरेणैषां ग्राहकत्वादिस्वभावलक्षणमिति** । अत्रैषां–ज्ञानानां

१ 'पत्ते' इति ङ–पाठ । २ 'पत्तेस्तथाऽर्थग्राह्य०' इति क–पाठ । ३ 'चैकस्य' इति च–पाठ. । ४ 'कृताधिकृत०' इति च–पाठ । ५ 'ग्राहके सवेदने' इति क–पाठ ।

(मूलम्)

**दिति तत्तत्स्वभावतालक्षणः सोऽङ्गीकर्त्तव्यः। तथा च सति उक्तदोषापत्तिरेवेति सूक्ष्मधिया भावनीयम् ॥**

(स्वो० व्या०)

**सिद्धिः** तस्य–अधिकृतविज्ञानस्य तयोश्च–ग्राह्यग्राहकसंवेदनान्तरयोस्तद्भावासिद्धिः–ग्राहकत्वादिभावासिद्धिः। कुत इत्याह–**अतिप्रसङ्गात्**। अतिप्रसङ्गश्च यथेदमधिकृतविज्ञानमनधिकृतसंवेदनग्राहकं न तथाऽधिकृतसंवेदनग्राहकमपि न, [1]तत्स्वभावत्वलक्षण[2]सम्बन्धाभावाविशेषात्। एवं तदपि संवेदनान्तरं यथा विज्ञानान्तरग्राह्यं न तथाऽधिकृतविज्ञानग्राह्यमपि न, उक्तलक्षणसम्बन्धाभावाविशेषादेव। एवं संवेदनान्तरेऽप्यधिकृतविज्ञानग्राहके योजना कार्या। ततश्च यथा संवेदनान्तरस्य ज्ञानान्तराणां तथाग्राह्यग्राहकत्वाद्यभावस्तथाऽधिकृतसंवेदनान्तरादीनामपि। तथाऽप्यधिकृतानां तद्भावाभ्युपगमे तद्वदनधिकृतानामपि तद्गोचर एव तद्भावः प्राप्नोतीत्यतिप्रसङ्गः। अतः **तत्तत्स्वभावतालक्षणः** तस्य–अधिकृतविज्ञानस्य संवेदनान्तरयोश्च तत्स्वभावतालक्षणः तत् तद्ग्राहकादिस्वभावं[3] ते च तद्ग्राह्यादिस्वभावे इत्येवम्भूतः सम्बन्धो**ऽङ्गीकर्त्तव्यः। तथा च सति**–एवं च सति **उक्तदोषापत्तिरेव**–तद्ग्राह्यग्राहकयोः तुल्यता-

(विवरणम्)

विवक्षितं हि ज्ञानमितरसंवेदनद्वयापेक्षया ग्राह्यं ग्राहकं च तदपेक्षया तु ज्ञानान्तरमेकं ग्राह्यम्, अन्यत् तु ग्राहकम्, अतो ग्राहकत्वाद् विलक्षणः सम्बन्धोऽमीषां सिद्ध इति ॥

(१०-११) **एवं संवेदनान्तरेऽप्यधिकृतविज्ञानग्राह्यग्राहके योजना कार्येति**। इह क्रमेण बिन्दुकत्रिकं व्यवस्थाप्य यथेदमित्यादेर्योजना कार्येत्ये(त)दन्त्यस्य [4]ग्रन्थस्य भावना क्रियते(०००)। तत्र मध्यबिन्दुकं ग्राहकज्ञानमधि[5]कृतशब्दवाच्यमग्रेतनं चैतद् ग्राह्यम्। एतदप्यधि[6]कृतशब्दवाच्यम्। एते च द्वे एवाधिकृत्य यथेदमधिकृतविज्ञानमित्याद्युक्तलक्षणसम्बन्धाभावाविशेषादेवेत्यन्तो वृत्तिग्रन्थो भावनीय एव। संवेदनेत्यादिकस्तु योजना कार्येत्येतदन्तः प्रथमद्वितीयबिन्दुके प्रतीत्य भावनीयः। यतोऽत्र प्रथमबिन्दुकं ग्राहकविज्ञानतया विवक्षितम्, मध्यबिन्दुकं च ग्राह्यविज्ञानतयेति ॥

(१५) **तत् तद्ग्राहकादिस्वभावमिति**। तत्–अधिकृतसंवेदनं तयोः–ज्ञानयोः ग्राहकादिस्वभावम्। एकस्य ग्राहकमन्यस्य च ग्राह्यमित्यर्थः ॥

(१५) **ते च तद्ग्राह्यादिस्वभावे** इति। ते च–द्वे ज्ञाने पुनस्तस्य–अधिकृतज्ञानस्य ग्राह्यादिस्वभावे। एकं ग्राह्यस्वभावम्, अन्यत् तु ग्राहकस्वभावमित्यर्थः ॥

१ 'तत्स्वस्वभाव०' इति ङ–पाठः। २ 'सम्बन्धाविशेषात्' इति ङ–पाठः। ३ 'भावं चैत(?) ग्राह्यादि०' इति ङ–पाठः। ४ 'ग्रन्थभावना' इति च–पाठः। ५ 'कृत्य शब्द०' इति च–पाठः। ६ 'कृत्य शब्द' इति ख–च–पाठः।

( मूलम् )

**उभयरूपत्वे विरोधः, एकस्यानेकत्वायोगात्। तथाहि–यदि ग्राह्यरूपं तत् कथं ग्राहकरूपम्?। ग्राहकरूपं चेत्, कथं ग्राह्यरूपम्? इतरेतरात्मकत्वेन तत्स्वरूपाभावः ॥**

**अनुभयरूपत्वे तु स्फुटमसत्त्वम्, तदितरलक्षणासिद्धेः। किं हि तत् सद् यद् ग्राह्यरूपं ग्राहकरूपं[1] च न भवति? को वा तत्प्रतिपत्त्युपायः, परं प्रति प्रति[2]पादनोपायो वा? न कश्चिदन्यो ध्यान्ध्यसामर्थ्यादिति। स्यादेतदनभ्युपगतोपालम्भ एषः, चरमप[3]क्षेऽस्यैवास्माभिरिष्टेः, [4]तस्य चान्यार्थत्वात्। तथाहि–अनुभयरूपमद्वयमुच्यते**

( स्वो॰ व्या॰ )

पत्तिरेव। **इति**–एवं **सूक्ष्मधिया भावनीयमे**तत्–सूक्ष्माभोगगम्यमेतत् वस्तुतो वाचामगोचरः ॥

पक्षान्तरमधिकृत्याह–**उभयरूपत्वे,** अक्रमाद् ग्राह्यग्राहकोभयरूपत्वे विज्ञानस्य अभ्युपगम्यमाने **विरोधः**। कथमित्याह–**एकस्यानेकत्वायोगात्**, न ह्येकमनेकं युज्यत इति। एतद्भावनायैवाह–**तथाही**त्यादि। तथाहीति पूर्ववत्। **यदि ग्राह्यरूपं तत्**–विज्ञान **कथं ग्राहकरूपम्? ग्राहकरूपं चेत् कथं ग्राह्यरूपम्? इतरेतरात्मकत्वेन** हेतुना **तत्स्वरूपाभावः** तस्य–विज्ञानस्य स्वरूपाभावः ॥

चरमं विकल्पमधिकृत्याह–**अनुभयरूपत्वे तु** विज्ञानस्य ग्राह्यग्राहकरूपापेक्षया। किमित्याह–**स्फुटमसत्त्वम्**। कुत इत्याह–**तदितरलक्षणासिद्धेः**–ग्राह्यग्राहकाभ्यामन्यलक्षणासिद्धेः सत्त्वस्य। एतदेव भावयति **किं हि तदि**त्यादिना। कि हि तत्–वस्तु **सदस्ति यद् ग्राह्यरूपं ग्राहकरू[5]पं च न भवति**? नैव तत् सदित्यर्थः। **को वा तत्प्रतिपत्त्युपायः** ग्राह्यादिरूपाभावेन कश्चित् **परं प्रति प्रतिपादनोपायो वा** क इति **न कश्चिदन्यो ध्यान्ध्यसामर्थ्यात्**–अज्ञानविजृम्भितादिति। **स्यादेतदनभ्युपग[6]तोपालम्भ एषः**–अनन्तरोदितः, **चरमप[7]क्षेऽस्यैवास्माभिरिष्टेस्तस्य**–चरमपक्षस्य **अन्यार्थत्वात्**। अन्यार्थत्वमेवाह **तथा-**

( विवरणम् )

(१८) **तस्य विज्ञानस्य स्वरूपाभाव** इति। यदि हि ग्राह्य ग्राहकं चाऽभ्युपगम्यते ज्ञानं तदा ग्राह्यत्वेन ग्राहकत्वं बाध्यते, ग्राहकत्वेन च ग्राह्यत्वं बाध्यत इति स्वरूपाभावः प्राप्नोति [8]ज्ञानस्य ॥

१ 'वा' इति ग–पाठ। २ 'पादितोपायो' इति क–पाठ। ३ 'पक्षस्यैवा' इति ग–पाठ। ४ 'तस्माच्चान्या॰' इति ग–पाठ। ५ 'रूप वा न' इति क–पाठ। ६ 'गतोपलम्भ॰' इति ङ–पाठ। ७ 'पक्षस्यैवा॰' इति ङ–पाठ। ८ 'ज्ञानस्य तस्य विज्ञानस्य स्वरूपाभाव इति। कार्यान्यथा' इति ख–पाठ।

(मूलम्)

ग्राह्यग्राहकाकारविविक्तं यदि, तर्हि ग्राह्यग्राहकद्वयमपि नास्ति किमपरं विज्ञानस्यावि(व)शिष्टं यत् तस्य तत्त्वं स्यात्? न हि ग्राह्यग्राहकाकारविविक्तमपरं [1]रूपमर्वाग्दर्शिभिः संवेद्यते। संवेदने वा तत्त्वदर्शित्वं स्यात्, तथा चायत्नमुक्ताः स्युर्देहिनः। नाप्यनुमानात् तस्य निश्चयः। तथाहि—न स्वभावलिङ्गजं [2]तत्रानुमानं सम्भवति, तत्स्वभावस्यैव साध्यत्वात्। नापि कार्यलिङ्गजम्, अद्वयेन रूपेण प्रत्यक्षानुपलम्भसाधनस्य कार्यकारणभावस्यासिद्धेः। नापि कार्यव्यतिरेकलक्षणात् कार्यकारणभावसिद्धिरस्ति, कार्यस्यैवासिद्धेः। तथाहि—योगाचारस्य तदेवाद्वयं कार्यं [3]तच्च न प्रमाणसिद्धम्। यच्च द्वयरूपं भासते तच्च शशविषाणप्रख्यत्वात् न कार्यमिति॥

(स्वो० व्या०)

हीत्यादिना। तथाहीति पूर्ववत्। अनुभयरूप(मद्वय)मुच्यते। किमुक्तं भवति? ग्राह्यग्राहकाकारविविक्तम्। एतदाशङ्क्याह—यदि तर्हीत्यादि। यदि तर्हि ग्राह्यग्राहकद्वयमपि नास्ति रूपद्वयं किमपरं विज्ञानस्यावि(व)शिष्टं यत् तस्य तत्त्वं स्यात्?। न हि ग्राह्यग्राहकाकारविविक्तमपरं रूपमर्वाग्दर्शिभिः—प्रमातृभिः संवेद्यते। संवेदने वा परस्य रूपस्य तत्त्वदर्शित्वं स्यात्। तथा च—एवं च अप्रयत्नमुक्ताः स्युर्देहिनः, नाप्यनुमानात् तस्य निश्चयः अद्वयस्य रूपस्य। तथाहि—न स्वभावलिङ्गजं तत्र—अद्वयरूपेऽनुमानं सम्भवति। कुत इत्याह—तत्स्वभावस्यैव—अद्वयस्वभावस्यैव साध्यत्वात्, साधनत्वानुपपत्तेरित्यर्थः। नापि कार्यलिङ्गजम्, 'तत्रानुमानं सम्भवति' इति वर्तते। कुत इत्याह—अद्वयेन रूपेण सह प्रत्यक्षानुपलम्भसाधनस्य कार्यकारणभावस्यासिद्धेः कारणात्। नापि कार्यव्यतिरेकलक्षणात्—विज्ञानाच्चक्षुषीव कार्यकारणभावसिद्धिरस्ति। कुत इत्याह—कार्यस्यैवासिद्धेः। एनामेवाह तथाहीत्यादिना। तथाहीत्युपप्रदर्शने। योगाचारस्य—विज्ञानवादिनः तदेव—विज्ञानमद्वयं ग्राह्यग्राहकाकारद्वयरहितं कार्यं तच्च न प्रमाणसिद्धम्, द्वयत्वादेव। यच्च विज्ञानं द्वयरूपं ग्राह्यग्राहकाकारवद् भासते तच्च शशविषाणप्रख्यत्वात्

(विवरणम्)

(२४) कार्यव्यतिरेकलक्षणादिति। कार्यान्यथानुपपत्तिलक्षणात्॥

१ 'रूपमर्थार्गदर्शिनेः संवेद्यते' इत्यशुद्धः क–पाठः। २ 'तत्तानुमानं' इति ग–पाठः। ३ 'तच्च प्रमाण०' इति ग–पाठः।

(मूलम्)

**स्यादेतज्जाड्याद् द्वयानभिज्ञैरिदमभिधीयते, यतो न ग्राहकशब्देनान्तर्बोधरूपं हर्षविषादाद्यनेकविवर्त्तं स्वसंविदितमुच्यते येन तस्याप्यभावः स्यात् किन्तु यदेतद् विज्ञानाद् बहिरिव नीलादि भासते, तदेकानेकविचाराक्षमत्वान्न तत्त्वम्, अतो न तावद् विज्ञानस्य व्यतिरिक्तं परमार्थतो ग्राह्यमस्ति, तदभावाच्च तदपेक्षाप्रकल्पितं बोधरूपस्य यत् कर्तृरूपम्–अस्य ग्राह्यस्यायं ग्राहक इति तदिह ग्राहकं रूपं–तन्नास्तीत्युच्यते, कर्तृ-कर्मणोः परस्परापेक्षाप्रकल्पितत्वात्। अत एवोक्तम्–"परस्परापेक्षया तयोर्व्यवस्थानात्" इति। न[1] तु बोध-**

(स्वो० व्या०)

अविद्यमानग्राह्याकाराद्यव्यतिरेकेण **न कार्यमिति**–न ह्यसदुत्पद्यते भवतामिति ॥

**स्यादेतत्**–अथैवं मन्यसे **जाड्यात्** हेतोः **द्वयानभिज्ञैरिदम्**–अनन्तरोदित**मभिधीयते**। कथमित्याह–**यतो न ग्राहकशब्देनान्तर्बोधरूपं**–बहिर्मुखावभासशून्यं **हर्षविषादाद्यनेकविवर्त्तं** प्रवाहचित्रं **स्वसंविदितं** तथाऽनुभूतेः **उच्यते येन तस्याप्यभावः स्याद्** ग्राहकनिषेधेन, **किन्तु यदेतद् विज्ञानाद् बहिरिव**–न तत्त्वतो बहि**र्नीलादि भासते** वस्त्विव **तत्**–बाह्य **एकानेकविचाराक्षमत्वात्** अवयव्यणवाद्यपेक्षया **न तत्त्वं**–न वस्तु, **अतः**–तदतत्त्वात् **न तावद् विज्ञानस्य व्यतिरिक्तम्**–[2]अन्यत् **परमार्थतो ग्राह्यमस्ति तदभावाच्च**–व्यतिरिक्तग्राह्याभावाच्च **तदपेक्षाप्रकल्पितं**–व्यतिरिक्तग्राह्यापेक्षाप्रकल्पितं **बोधरूपस्य**–स्वसंविदितस्य **यत् कर्तृरूपं** तस्य विशिष्टकर्मताकारि। एतदेवाह–**अस्य ग्राह्यस्यायं ग्राहकः**–विज्ञानकार **इति तदिह ग्राहकं रूपं**–विज्ञानगतं **तन्नास्तीत्युच्यते**ऽस्माभिः। कुत इत्याह–**कर्तृ-कर्मणोः परस्परापेक्षाप्रकल्पितत्वात्**, विशिष्टकर्मापेक्षया कर्तृत्वं विशिष्टकर्तृत्वापेक्षया च कर्मत्वमिति। **अत एवोक्तं** न्यायविदा–**परस्परापेक्षया**–उदितस्वरूपया **तयोः**–

(विवरणम्)

(१२) **अविद्यमानग्राह्याकाराद्यव्यतिरेकेणे**ति। ग्राह्यत्वग्राहकत्वलक्षणौ हि आकारौ एकान्तेन तुच्छरूपौ भवतां मते, ततस्तयोरव्यतिरिक्तं [3]ज्ञानमपि खरविषाणप्रख्यमेवातः कथं तत् कार्यं स्यात्? ॥

(१२) **न ह्यसदुत्पद्यते भवतामिति**। व्योमारविन्दादि नोत्पद्यत इत्यर्थः॥

१ 'ननु' इति ग–पाठ। २ 'अन्यतरमार्थतो' इति ङ–पाठ। ३ 'सज्ज्ञान०' इति च–पाठ।

(मूलम्)

रूपं स्वसंवेदनमात्रं ग्राहकशब्देनोच्यते । न हि बोधरूपं[1] परस्परापेक्षाप्रकल्पितम्, स्वहेतोरेव तथोत्पन्नत्वात् । तदेव तु बोधरूपं स्वसंवेदनमात्रे स्थितं यथोक्तेन ग्राह्यग्राहकद्वयेन रहितत्वादद्वयमित्युच्यते । तथा चोक्तम्—

"नीलपीतादि यत् ज्ञानाद् बहिर्वदवभासते ।
तन्न सत्यमतो नास्ति विज्ञेयं तत्त्वतो बहिः ॥[2]
तदपेक्षया च संवित्तेर्मता या कर्तृरूपता ।
साऽप्यतत्त्वमतः संविदद्वये[3]ति विभाव्यते ॥"[4]

इत्यादि । एतदप्यसत्, प्रायो दत्तोत्तरत्वात् । तथाहि—नीलादेरेकानेकविचाराक्षमत्वमसिद्धम्, जात्यन्तरत्वेनैकानेकात्मकत्वात् तथापरिणतिस्वभावत्वादित्युक्तप्रायम् । इत्थं कथं तदतत्त्वमिति ? 'अतो न

(स्वो० व्या०)

कर्तृ-कर्मणोः व्यवस्थानादिति । ततश्चैतद् व्यतिरिक्तग्राह्यग्रा[5]हकमेव रूपं ग्राहकशब्देनोच्यते, न तु बोधरूपम् । किंविशिष्टमित्याह—स्वसंवेदनमात्रं ग्राहकशब्देनोच्यते कस्यचिद् ग्राहकमिति । अत एवाह—न हि बोधरूपं परस्परापेक्षा[6]प्रकल्पितं प्रवर्तते । कुत इत्याह—स्वहेतोरेव तस्य बोधरूपस्य तथोत्पन्नत्वात्—बोधरूपतयोत्पन्नत्वात् । तदेव तु बोधरूपं स्वसंवेदनमात्रे स्थितं तत्त्वेन यथोक्तेन ग्राह्यग्राहकद्वयेन व्यतिरिक्तग्राह्याद्यपेक्षारूपेण रहितत्वात् कारणादद्वयमित्युच्यते । तथा चोक्तं न्यायविदा वार्तिके—नीलपीतादि यत्—[7]वस्तु ज्ञानाद् बहिर्वदवभासते तन्न सत्यमुक्तनीत्या । अतो नास्ति विज्ञेयं तत्त्वतः—परमार्थेन बहिरिति । तदपेक्षया च—बहिर्विज्ञेयापेक्षया च संवित्तेः—ज्ञानस्य मता या कर्तृरूपता परेषां साऽप्यतत्त्वम्, तदभावादेव । अतः संविदद्वयेति [8]विभाव्यते इत्यादि । एवं पराभिप्रायमाशङ्क्याह—एतदप्यसत् । कुत इत्याह—प्रायो दत्तोत्तरत्वात् तेन तेन प्रकारेण । तथाहि—नीलादेः वस्तुनः एकानेकविचाराक्षमत्वमसिद्धम् । कथमित्याह—जात्यन्तरत्वेन एकानेकेषां एकानेकात्मकत्वान्नीलादेः । एतदेवाह—तथापरिणतिस्वभावत्वादणवादीनामित्याद्युक्तप्रायं—प्रायेणोक्तं अवयविनिरूपणायाः । इत्थं कथं तत्—नीलादि अतत्त्वम्—अवस्तु ? नैवावस्तु इत्यर्थः । अतः—अस्मात् कारणात् न

१ अतः परं 'बोधरूपं'पर्यन्तकः पाठो ग-प्रतौ नास्ति । २ अनुष्टुप् । ३ 'द्वयेवेति भाव्यते' इति क-पाठः । ४ अनुष्टुप् । ५ 'ग्राहकमिव' इति ङ-पाठः । ६ 'प्रकल्पितं वर्तते' इति ङ-पाठः । ७ 'वस्तु विज्ञानाद्' इति ङ-पाठः । ८ 'विभाव्यते नीतेत्यादि' इति ङ-पाठः ।

(मूलम्)

तावद् विज्ञानस्य व्यतिरिक्तं परमार्थतो ग्राह्यमस्ति’ [1]इत्ययुक्तम्, तस्यैव ग्राह्यत्वात्, तथाऽनुभूतेः, अद्वयस्य चाननुभवात्, अनुभवे वा सर्वेषां तत्त्वदर्शितैव स्यात् त्वन्नीतितः ‘तथा चायत्नमुक्ताः स्युर्देहिनः’ [2]इत्युक्तम्। [3]स्यादेतदद्वयमेव बोधरूपं स्वसंवित्तिसिद्धम्। न च सर्वेषां तत्त्वदर्शिताप्रसङ्गो यतो गृहीतेऽपि तस्मिन्निरंशत्वाददद्वये बोधरूपे भ्रान्तिबीजानुगमान्न यथाबोधमद्वयावसायो जायते, ततो गृहीतमपि तदगृहीतकल्पमित्यननुभूतिर्न तत्त्वत इति। नैतदेवम्, कल्पनामात्रत्वात् [4]सदाऽद्वयाननुभूतेः व्यवसायाभावात्, तथापि तत्कल्पनेऽतिप्रसङ्गात्, नीलादेरप्यतत्त्वापत्तेः [5]शुक्लादिस्वसंविद्वत् तद्-

(स्वो० व्या०)

तावद् विज्ञानस्य व्यतिरिक्तं परमार्थतो ग्राह्यमस्तीति एतत् पूर्वपक्षो[6]क्तमयुक्तम्। कुत इत्याह–तस्यैव–एकानेकात्मकस्य नीलादेर्विज्ञानव्यतिरिक्तस्य ग्राह्यत्वात्। ग्राह्यत्वं च तथाऽनुभूतेर्बहिर्मुखावभासतया अद्वयस्य चाननुभवात् विज्ञानस्य अनुभवे वाऽद्वयस्य सर्वेषां तत्त्वदर्शितैव स्यात् [7]प्रमातॄणां त्वन्नीतितः। तथा चायत्नमुक्ताः स्युर्देहिन इत्युक्तं [8]प्राक्। स्यादेतदद्वयमेव बोधरूपं स्वसंवित्तिसिद्धम्। न च सर्वेषां–प्रमातॄणां तत्त्वप्रदर्शिताप्रसङ्गः। कथमित्याह–यतो गृहीतेऽपि तस्मिन्निरंशत्वात् कारणात् अद्वये बोधरूपे भ्रान्तिबीजानुगमात् हेतोः न यथाबोधं–यथा बोधस्तत्त्वेन तथाऽद्वयावसायः–अद्वयनिश्चयो जायते, ततो गृहीतमपि तत्–अद्वयमगृहीतकल्पम्। इति–एवं अननुभूतिरद्वयस्य न तत्त्वत इति, तत्त्वेन त्वनुभूतिरेव। एतदाशङ्क्याह–नैतदेवम्। कुत इत्याह–कल्पनामात्रत्वात्। कल्पनामात्रत्वं च सदाऽद्वयाननुभूतेः कारणात्। अननुभूतिश्च व्यवसायाभावात्, निश्चयाभावादित्यर्थः। तथापि–एवमपि निश्चयाभावेऽपि तत्कल्पने–अद्वयकल्पने किमित्याह–अतिप्रसङ्गात्। एनामेवाह–नीलादेरपि–बोधादितत्त्वस्य अतत्त्वापत्तेः। आपत्तिश्च शुक्लादिस्वसंविद्वदिति निदर्शनम्। तद्-

(विवरणम्)

(२७) शुक्लादिस्वसंविद्वदिति निदर्शनमिति। यदि हि प्राञ्जलवृत्त्या ग्राह्यग्राहका-

१ द्रष्टव्य ८१तम पृष्ठम्। २ ८०तमे पृष्ठे। ३ ‘स्यादेतद् द्वय०’ इति क–पाठ। ४ ‘तदाऽद्वयानुभूते’ इति ग–पाठ। ५ ‘शुक्तादिस्व०’ इति क–पाठ। ६ ८१तमे पृष्ठे। ७ ‘प्रमातृगोत्व०’ इति क–पाठ। ८ ८०तमे पृष्ठे।

( मूलम् )

**भ्रान्तिबीजानुगमान्न यथाबोधमवसीयत इत्यपि वक्तुं शक्यत्वात्, युक्त्यनुपपत्तेरुभयत्र तुल्यत्वात्, अद्वयस्याप्यनुभवायोगात्, युक्तीनामपि बोधात्मकत्वेन विपर्ययाशङ्कानिवृत्तेः, अन्यथा प्रतिभाससम्भवात् ताभ्यस्तत्त्वव्यवस्थायोगात्, बोधमात्रस्य चायुक्तित्वात् व्यवहारोच्छेदप्रसङ्ग इति यत्किञ्चिदेतदिति । न च बोधमात्र-**

---

( स्वो० व्या० )

**भ्रान्तिबीजानुगमात्**-नीलादिभ्रान्तिबीजानुगमाद्धेतोः **न यथाबोधमवसीयत इत्यपि वक्तुं शक्यत्वात्**, वाङ्मात्रेण **युक्त्यनुपपत्तेरुभयत्र**-नील-शुक्लसंविदि अद्वये च **तुल्यत्वात्**। तुल्यत्वं च **अद्वयस्या(प्य)नुभवायोगात्** कर्त्राद्यभावेन[1] यथा शुक्लसंविदो नीलादित्वेनेति भावः । **युक्तीनामपि**-ग्राह्याकारादि-निराकरणपराणां **बोधात्मकत्वेन** हेतुना **विपर्ययाशङ्कानिवृत्तेः**, ग्राह्याद्या-कारवद्बोधवैतथ्यदर्शनेनेति भावः । अत एवाह-**अन्यथा प्रतिभाससम्भवात्** बोधस्य अद्वयतत्त्वपक्षेऽपि द्वयप्रतिभासवदित्यर्थः । एवं च सति **ताभ्यः**-युक्तिभ्यः **तत्त्वव्यवस्थायोगाद्** विपक्षाशङ्कयेति भावनीयम् । **बोधमात्रस्य च**-अद्वयस्य **अयुक्तित्वाद**विकल्पत्वेन एवं **व्यवहारोच्छेदप्रसङ्ग इति यत्किञ्चित्**

---

( विवरणम् )

कारभाजि विज्ञाने समनुभूयमानेऽपि भ्रान्तिबीजानुगमान्न[2] यथाबोधमवसीयत इत्युच्यते तदा एतदपि वक्तुं शक्यत एव यथा शङ्खादौ पदार्थे निर्विकल्पकज्ञानेन शुक्लतयाऽनुभूतेऽपि पश्चात् काचकामलादिभ्रान्तिबीजानुगमसद्भावात् पीताद्यध्यवसायो जायते, एवमसत्कल्पनया शुक्लतया नीलादावनुभूतेऽपि निर्विकल्पज्ञानेन [3]योऽयं नीलाद्यवसायो जायते स भ्रान्तिबीजानुगमसद्भावात्[4] ॥

(१३-१४) **ग्राह्याद्याकारवद्बोधवैतथ्यदर्शनेनेति** । ग्राह्याद्याकारो विद्यते यस्य असौ ग्राह्याद्याकारवान्, स चासौ बोधश्च ग्राह्याद्याकारबोधस्तस्य वैतथ्यं-मिथ्यारूपता तस्य दर्शनम्-अवलोकनम् । ग्राह्याद्याकारयुक्तो हि बोधो मिथ्यारूपो भवतां मते विलोकितः, अतो ग्राह्याद्याकारनिराकरणपरायणा युक्तयोऽपि मिथ्यारूपा भवन्त्विति[5] ॥

---

१ 'कर्तुद्यभावेन' इति ङ-पाठः । २ 'गमाद् यथा०' इति क-पाठः । ३ 'योऽयं नीला०' इति क-पाठः । ४ 'गमाद् भावात्' इति ख-पाठः । ५ 'भवन्ति । न हि' इति ख-पाठः ।

( मूलम् )

तत्त्ववादिनो भ्रान्तिबीजमपि किञ्चित्, बोधमात्रस्यैवानभ्युपगमात्, अभ्युपगमे चाभ्रान्तबोधायोगात्, तस्यैव तत्त्वात्। बोधभिन्नभ्रान्तिबीजभावे तु बाह्यसिद्धिरेव। एवं चानुभूत्यादिसिद्धे[2] बाह्यग्राह्यभावे नास्य ग्राह्यस्यायं ग्राहकः। इति ग्राहकरूपप्रतिषेधो युक्तः, तदात्मकत्वेन ज्ञानस्यैव प्रतिषेधापत्तेः॥

किञ्च कथं पुनरिदं व्यज्ञायि भवता यथेदं विज्ञानं व्यतिरिक्तग्राहकाकारविकलमिति?। न तावत् तदनुभव एव निमित्तम्, तस्य वैपरीत्येन प्रवृत्तेः, आविद्वदङ्गनादिसिद्धत्वात्। वस्तुस्थित्या तत् तथेति तथास्वभावत्वात् ज्ञायत एवेति चेत्, तत् तथेति कुतोऽयमाप्तवादः? प्रतिभासमानाकारशून्यतेति चापूर्वा वस्तुस्थितिस्तथास्वभावत्वाभि-[1]

( स्वो० व्या० )

एतत्–परोदितमिति। न च बोधमात्रतत्त्ववादिनः–योगाचारस्य भ्रान्तिबीजमपि किञ्चित्। कथमित्याह–बोधमात्रस्यैवानभ्युपगमात् भ्रान्तिबीजत्वेन। अभ्युपगमे च बोधमात्रस्यैव भ्रान्तिबीजत्वेन किमित्याह–अभ्रान्तबोधायोगात्। अयोगश्च तस्यैव–बोधमात्रस्य तत्त्वात्–भ्रान्तिबीजत्वात्। बोधभिन्नभ्रान्तिबीजभावे तु को दोष इत्याह–बाह्यसिद्धिरेव। एवं च–उक्तनीत्याऽनुभूत्यादिसिद्धे बाह्यग्राह्यभावे किमित्याह–नास्य ग्राह्यस्यायं ग्राहकः। इति–एवं पूर्वपक्षग्रन्थे ग्राहकरूपप्रतिषेधो युक्तः। कुत इत्याह–तदात्मकत्वेन–बाह्यग्राह्यात्मकत्वेन ज्ञानस्यैव प्रतिषेधापत्तेः कारणात्॥

किञ्च कथं पुनरिदं व्यज्ञायि–विज्ञात भवता यथेदं व्यतिरिक्तग्राहकाकारविकलमिति?। न तावत् तदनुभव एव–अधिकृतविज्ञानानुभव एव निमित्तं तद्विज्ञान इति। कुत इत्याह–तस्य–तदनुभवस्य वैपरीत्येन प्रवृत्तेः–व्यतिरिक्तग्राहकाकारत्वेन प्रवृत्तेः। प्रवृत्तिश्च आविद्वदङ्गनादिसिद्धत्वात्। वस्तुस्थित्या तत्–विज्ञानं तथेति–व्यतिरिक्तग्राहकाकारविकलमिति तथास्वभावत्वात्–व्यतिरिक्तग्राहकाकारविकलस्वभावत्वात् ज्ञायत एव। इति चेत्, एतदाशङ्क्याह–तत् तथेति कुतोऽयमाप्तवादः?। तथा प्रतिभासमानाकारशून्यतेति चापूर्वा वस्तुस्थितिः। तथा तथास्वभावत्वाभिधानं[3] च अपूर्व-

1 'स्थितिस्तत्तथास्व०' इति ग–पाठ। 2 'सिद्धेर्वाह्य०' इति ङ–पाठ। 3 'धानं वाऽपूर्व०' इति ङ–पाठ।

( मूलम् )

**धानं च। किञ्च न च वस्तुस्थित्याऽपि व्यतिरिक्तग्राहकाकारशून्यत्वे सति तत् तथेति युक्तम्। एवं हि तच्छून्यत्वं तस्य स्यात्, यद्यसौ तत्र न भवेत्। न [1]चान्यत्राभवतस्तत्राभवनं न्याय्यमित्यन्यत्र तत्सिद्धिः, तत्कल्पिताभवने तु तत्र तदितरभवनापत्तिः। कल्पितवास्तव-**

( स्वो० व्या० )

मेव। [2]**किञ्च नेत्यादि**। **न च वस्तुस्थित्याऽपि**—न च तत्त्वनीत्याऽपि **व्यतिरिक्तग्राहकाकारशून्यत्वे** इति व्यतिरिक्तस्य ग्राहकः स एवाकारः तेन शून्यत्वं तस्मिन् **सति तत्**—विज्ञानं **तथेति युक्तं**—व्यतिरिक्तग्राहकाकारविकलमिति युक्तम्। कथं न युक्तमित्याह—**एवं** यस्मात् **तच्छून्यत्वं**—व्यतिरिक्तग्राहकाकारशून्यत्वं **तस्य**—विज्ञानस्य **स्यात्**—भवेत्, **यद्यसौ**—व्यतिरिक्तग्राहकाकारः **तत्र**—विज्ञाने **न भवेत्**। न त्वित्थमेवैतदित्याशङ्क्याह—**न चान्यत्र**—विज्ञानान्तरेऽ**भवतः**-असतः **तत्र**—अधिकृतविज्ञानेऽ**भवनं न्याय्यम्**। न हि शशविषाणस्य क्वचिद-[3]भावः, न यत्रासौ तत्र शशविषाणभावप्रसङ्गात्। **इति**—एव**मन्यत्र**—विज्ञानान्तरे **तत्सिद्धिः**—व्यतिरिक्तग्राहकाकारसिद्धिः। तत्सिद्धौ चानिवारितं व्यतिरिक्तं ग्राह्य-मित्यर्थः। आशङ्कान्तरनिरासायाह—**तत्कल्पिताभवने तु** स चासौ कल्पितश्च

( विवरणम् )

(१४-१५) **न हि शशविषाणस्य क्वचिद्भाव** इति। न—नैव हिः—यस्माच्छश-विषाणस्य—तुच्छरूपस्य क्वचित्—प्रतिनियते प्रदेशेऽभावः साध्यते। शशविषाणस्यात्र प्रदेशेऽभावो वर्त्तत इति न क्वचित् प्रतिपादयतीत्यर्थः। कुत इत्याह—(१५) **न यत्रासौ तत्र शशविषाणभावप्रसङ्गादिति**। न यत्र तु [4]प्रदेशे असौ—खर-विषाणाभावः तत्र शशविषाणस्य भावप्रसङ्गात्। प्रतिनियते प्रदेशे शशशृङ्गस्याभावे साधिते सति प्रदेशान्तरे शशविषाणाभावस्याभावात् शशविषाणभावः स्यात्। एवमत्र दार्ष्टान्तिकयोजना कार्या—खरविषाणप्रख्यो व्यतिरिक्तग्राहकाकारः परमते तस्य [5]बुद्धादिसम्बन्धिनः प्रतिनियते क्वापि ज्ञानेऽभावे साधयितुमुपक्रान्ते सति अन्यज्ञानेषु अर्वाग्दर्शिसम्बन्धिषु नियमाद् भावः स्यादिति। अत एवाह—(१५) **अन्यत्र विज्ञानान्तरे तत्सिद्धिरिति**। विज्ञानान्तरेऽर्वाग्दर्शनप्रमातृसम्बन्धिनि॥

(१७) **तत्कल्पिताभवने त्विति**। अयमभिप्रायः—अर्वाग्दर्शनप्रमातृसम्बन्धिषु विज्ञानेषु यः परि[6]कल्पितो वर्तते आकारस्तस्याभावो बुद्ध्यादिविज्ञाने साध्यते इति कदाचिदभ्युपगमो भविष्यति परस्य॥

१ 'चान्यत्रास्याभवतः' इति ग-पाठः। २ 'किञ्चन चेत्यादि' इति ङ-पाठः। ३ 'भावः यत्रासौ' इति क-पाठः। ४ 'प्रदेशेऽभावः असौ' इति क-पाठः। ५ 'बुद्धादिविज्ञाने साध्यते नियते क्वापि ज्ञाने०' इति ख-पाठः। ६ 'कल्पितो भ(?)वर्त्तते' इति च-पाठः।

(मूलम्)

**तदाकारशून्यं तदिति चेत्, न, ततोऽन्यस्वभावत्वाभावे एतत्। न च तुच्छान्यस्वभावत्वमस्य, युक्तिविरोधात्, तदभावे हि तत् तथा।**

(स्वो० व्या०)

तत्कल्पितः तस्याभवनं तस्मिन्। एतदुक्तं भवति–तस्य–व्यतिरिक्तग्राहकाकारस्य कल्पितस्य–अतात्त्विकस्य, अन्यत्र विज्ञानान्तर इति प्रक्रमः[1], अभवने पुनरभ्युपगम्यमाने **तत्र**–अधिकृतविज्ञान इति सामर्थ्यम्। किमित्याह–**तदितरभवनापत्तिः** सामर्थ्यादेवाधिकृतविज्ञानेऽकल्पितव्यतिरिक्तग्राहकाकारभवनापत्तिः। न कल्पिताभावोऽकल्पिततद्भावमन्तरेणेति भावनीयम्। तथाहि–कल्पितो नामासन्नभावो[2] न किञ्चित्। स च यथाऽनधिकृतविज्ञाने एवमधिकृतविज्ञानेऽपि। अतो न तात्त्विकस्य तस्य व्यतिरिक्तग्राहकाकारस्याभावेऽधिकृतविज्ञाने तस्य कल्पितस्याभावः सिध्यतीति भावनीयम्। **कल्पितेत्यादि**। कल्पित-**वास्तवौ** च तौ **तदाकारौ** च प्रक्रमाद् व्यतिरिक्तग्राहकाकारौ चेति विग्रहस्ताभ्यां **शून्यं तत्**–अधिकृतं विज्ञानम्। **इति चेत्**, एतदाशङ्क्याह–**नेत्यादि**। नेति प्रतिषेधे। **तत** इति ताभ्यां कल्पितवास्तवतदाकाराभ्याम् **अन्यस्वभावत्वाभावे**ऽधिकृतविज्ञानस्य **एतत्**–कल्पितवास्तवतदाकारशून्यत्वम्। अन्यस्वभावत्वमेवं भवतु। का नो हानिरित्याशङ्क्याह–**न चेत्यादि**। न च–नैव **तुच्छान्यस्वभावत्वं** तुच्छात्–कल्पिताद् व्यतिरिक्तग्राहकाकारात् अन्यस्वभावत्वं–वस्तुनो व्यतिरिक्तत्वं **अस्य**–अधिकृतविज्ञानस्य। कुत इत्याह–**युक्तिविरोधात्**। एनमेवाह **तदभाव** इत्यादिना। तदभावे–तुच्छकल्पितव्यतिरिक्तग्राहकाकाराभावे सति यस्मात् **तत्**–अधिकृतविज्ञानं **तथेति** तुच्छान्यस्वभावम्।

(विवरणम्)

(९-१०) **न कल्पिताभावोऽकल्पिततद्भावमन्तरेणेति भावनीय**मिति। न–नैव कल्पितस्य–व्यतिरिक्तग्राहकाकारस्य सम्बन्धी अभावो[3]ऽकल्पिततद्भावं–पारमार्थिकग्राहकाकारभावमन्तरेण-विना भवतीति भावनीयम्। कल्पितस्य ग्राहकाकारस्याधिकृतविज्ञाने भावेऽभ्युपगम्यमाने सामर्थ्याद् वास्तवस्य तत्र भावः स्यादिति ॥

(१८) **तुच्छान्यस्वभावत्व**मिति। तुच्छाद्धि ग्राहकाकारादन्यस्वभाव विज्ञानं तदैव सिद्ध्यति यदि तत्र तस्य तुच्छस्याभावः–वास्तवस्य भावः स्यादिति ॥

(१८) **तुच्छात् कल्पिताद् व्यतिरिक्तग्राहकाकारा**दिति। ग्राहकाकारो हि भवतां मते तुच्छो गगनारविन्दप्रख्यस्ततस्तस्मात् कारणा[4]दन्यत्वं न घटतेऽधिकृतविज्ञानस्य, वक्ष्यमाणयुक्तिविरोधात् ॥

१ द्रष्टव्य ८६तम पृष्ठम्। २ 'नामाभन्न०' इति ङ–पाठ। ३ 'अभावोऽपि कल्पित तद्भाव' इति क–पाठ.। ४ 'सकाशान्यत्व' इति क–पाठ।

(मूलम्)

**न च तदभावस्तदितराभावे, केनचिदबाधितत्वात् विशेषानुपपत्तेः। तस्मादसंव्यवहार्य एव तुच्छाभाव इति न तत्र व्यतिरिक्तग्राहकाकारवैकल्यावसायोपायः तदतत्स्वभावत्वादिति परिभाव्यतामेतत्॥**

(स्वो० व्या०)

न त्वितथमेवैतदित्याशङ्क्याह—**न चेत्यादि**। न च—नैव **तदभावः**—तुच्छकल्पितव्यतिरिक्तग्राहकाकाराभावः **तदितराभावे**—अतुच्छाकल्पितव्यतिरिक्तग्राहकाकाराभावे। कुतो नेत्याह—**केनचिदबाधितत्वात्** तुच्छकल्पितव्यतिरिक्तग्राहकाकारभावस्य। एतद्भावनायैवाह—**विशेषानुपपत्तेः**—तुच्छकल्पितव्यतिरिक्तग्राहकाकारभावस्य। अयं ह्यधिकृतविज्ञानेऽप्येवंविध एव कथमेतदभावः तत्र, असति चैतदभावे कथमिदं तुच्छान्यस्वभावमिति परिभाव्यतामेतत्। यत एवं **तस्मादसंव्यवहार्य[1] एव** तत्त्वचिन्तायाम्। कोऽसावित्याह—**तुच्छाभाव इति**। तुच्छाभावश्च परनीत्या व्यतिरिक्तग्राहकाकाराभावः। एवं **न तत्र**—अधिकृतविज्ञाने **व्यतिरिक्तग्राहकाकारवैकल्यावसायोपायः** परनीत्यैवेति निदर्शितम्। एतदेवाह—**तदतत्स्वभावत्वात्** तस्य—अधिकृतविज्ञानस्यातत्स्वभावत्वात्, व्यतिरिक्तग्राहकाकाराभावास्वभावत्वादित्यर्थः, सतोऽन्यत्राभवतस्तदभावस्वभावत्वसिद्धेः **इति परिभाव्यतामेतत्**॥

(विवरणम्)

(१०-११) **अयं ह्यधिकृतविज्ञानेऽप्येवंविध एवेति**। अयं—तुच्छकल्पितव्यतिरिक्तग्राहकाकारभावः हिः—यस्मात् अधिकृतविज्ञानेऽपि—बुद्धादिसम्बन्धिनि एवम्भूत एव—यादृशोऽर्वाग्दर्शिप्रमातृज्ञानेषु इति कथं—केन प्रकारेण तस्य—तुच्छकल्पितव्यतिरिक्तग्राहकाकारस्याभावस्तत्र—बुद्धादिज्ञाने। इदमुक्तं भवति—तुच्छकल्पितव्यतिरिक्तग्राहकाकारादन्यस्वभावं बुद्धज्ञानं तदैव भवति यदि तत्र वास्तवस्याकारस्य अभावः स्यात्; अन्यथा तुच्छातुच्छयोर्विशेष एव न स्यादिति॥

(१६) **व्यतिरिक्तग्राहकाकाराभावास्वभावत्वादिति**। व्यतिरिक्तग्राहकाकारस्याभावो व्यतिरिक्तग्राहकाकाराभावः, न स्वभावोऽस्वभावः, व्यतिरिक्तग्राहकाकाराभावोऽस्वभावो यस्य ज्ञानस्य तत् तथा तद्भावः—तत्त्वं तस्मात्॥

(१७) **सतोऽन्यत्राभवतस्तदभावस्वभावत्वसिद्धेरिति**। तस्य—ग्राहकाकारस्याभावस्तदभावः तदभावः स्वभावो यस्य तत् तथा तद्भावः—तत्त्वं तस्य सिद्धिः—निष्पत्तिः तस्मात्। कीदृशस्य तस्य ग्राहकाकारस्येत्याह—सतः—विद्यमानस्यान्यत्र—ज्ञानान्तरेऽर्वाग्दर्शिसम्बन्धिनि अभवतः—अविद्यमानस्य सामर्थ्याদधिकृतविज्ञाने॥

---

1 'तस्मादसौ व्यव०' इति ङ-पाठः। 2 'तुच्छकादत्यन्तव्यतिरिक्त०' इति क-पाठः।

(मूलम्)

**किञ्चैवं परिकल्पिताद्वयरूपत्वे[1] तत्त्वतोऽनुभूयरूपत्वासिद्धिरेव, स्वात्मसंवेदनात् कर्तृकर्मभावोपपत्तेः, अन्यथा तदयोगात्। न ह्यात्मन आत्मनाऽवेदने स्वसंवेदनं नाम। वेदने तु तच्चित्रस्वभावता, तस्यैव ग्राह्यग्राहकरूपत्वादिति। स्वात्मनि क्रियाविरोध इति चेत्, न, तथाऽनुभवे तदसिद्धेः। कथं तदसिद्धिरिति चेत्, विरोधे तद[2]योगापत्तेः। तदयोगेऽपि किमिति चेत्, ननु च तदनुभवाभावः। तत् स्वहेतोरेव तादृगिति चेत्, किमनेनान्वयकथनेन? सर्वथाऽसंवेद्यासंवेदकस्वभावत्वे न स्वसंवेदनम्। सति चास्मिन् नियमतः स्वभाव-**

---

(स्वो० व्या०)

**किञ्चे**त्यादि। किञ्चायमपरो दोषः। **एवं परिकल्पिताद्वयरूपत्वे**ऽपि सति यथा भवतोक्त तथा। किमित्याह—**तत्त्वतः**—परमार्थेन **अनुभयरूपत्वासिद्धिरेव**। कथमित्याह—**स्वात्मसंवेदनात्**—स्वात्मसंवेदनेन, विज्ञानस्येति प्रक्रमः, **कर्तृकर्मभावोपपत्तेः**। इत्थं चैतदङ्गीकर्त्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे **तदयोगात्**—स्वात्मसंवेदनायोगात्। एतदेव भावयति **न ही**त्यादिना। न यस्मात् **आत्मनः**—विज्ञानात्मनः **आत्मनैव अवेदने** सति। किमित्याह—**स्वसंवेदनं नाम। वेदने तु** स्वात्मनः किमित्याह—**तच्चित्रस्वभावता,** प्रक्रमाद् विज्ञानस्य चित्रस्वभावता। कुत इत्याह—**तस्यैव**—विज्ञानात्मनो **ग्राह्यग्राहकरूपत्वादिति। स्वात्मनि क्रियाविरोध इति चेत्।** न हि सुशिक्षितोऽपि कश्चित् स्वं स्कन्धमारोहति। एतदाशङ्क्याह—**न**—नैतदेवं **तथाऽनुभवे**—[3]स्वसंविदितत्वेन स्वात्मनाऽनुभवे सति **तदसिद्धेः**—स्वात्मनि [4]क्रियाविरोधासिद्धेः। **कथं** तर्हि **असिद्धिरिति चेत्** स्वात्मनि क्रियाविरोधस्य। एतदाशङ्क्याह—**विरोध** इत्यादि। विरोधे सति स्वात्मनि क्रियायाः **तदयोगापत्तेः,** प्रक्रमात् कर्तृकर्मभावायोगापत्तेः **तदयोगेऽपि**—कर्तृकर्मभावायोगेऽपि **किम्? इति चेत्,** एतदाशङ्क्याह—**ननु चे**त्यादि। ननु चेत्यक्षमायाम्। **तदनुभवाभावः**—विज्ञानानुभवाभावः। **तत्**—विज्ञानं **स्वहेतोरेव** सकाशात् **तादृगिति**—स्वसंवेदनस्वभावम्। **इति चेत्,** एतदाशङ्क्याह—**किमनेने**त्यादि। किमनेन स्वहेतोरेवेत्यादिना **अन्वयकथनेन,** [5]गोत्रकथनेनेत्यर्थः। कथमिदमनुपयोगीत्याह—**सर्वथे**त्यादि। सर्वथा—सर्वैः प्रकारै**रसंवेद्यासंवेदकस्वभावत्वे** वास्तवे विज्ञानस्य **न स्वसंवेदनं** निरूप्यतामेतत्। **सति चास्मिन्**—स्वसंवेदने **नियमतः स्वभाववैचित्र्येण** हेतुना **कथञ्चित्—**

१ 'रूपत्वे सति तत्त्वतो' इति क-पाठ। २ 'तदयोगोपपत्ते' इति ग-पाठ। ३ 'स्वसविदिततत्त्वेन' इति क-पाठ। ४ 'क्रियामविरोधा०' इति ङ-पाठ। ५ 'नोऽत्र कथनेनेत्यर्थ' इति क-पाठः।

(मूलम्)

**वैचित्र्येण कथञ्चित् कर्तृकर्मतायोग इति ॥**

**एतेन यदप्युच्यते—"गगनतलवर्त्यालोकवदकर्मकं स्वयमेवैतत् प्रकाशते" इत्यादि तदपि प्रतिक्षिप्तम्, यतो बोधरूपं तत्। न चाबुध्यमानस्य किञ्चिद् बोधरूपता युज्यते इत्यात्मबोधोऽभ्युपेयः। तथा च सत्युक्तदोषानतिवृत्तिः स्वात्मसंवेदनादिति। एवं यथोक्तालोकेऽपि भावनीयम्। न ह्यसावपि किञ्चिदनालोकयन् आलोको नाम। एवं चाभिधानमात्रमेवाकर्मकत्वमिति सन्न्यायासिद्धेः, आलोकनमालोक इति भावसाधनपक्षेऽपि स्वभावालोकनादिति। एवमपरोक्षस्वभावमित्याद्युक्तावपि स्वप्रत्यक्षस्वभावमित्यादि**

---

(स्वो० व्या०)

केनचित् प्रकारेण **कर्तृकर्मतायोग इति** कर्तृकर्मभावयोगः ॥

**एतेन**—कर्तृकर्मतायोगसाधनेन **यदप्युच्यते,** किमुच्यते इत्याह—**गगनतलवर्त्यालोकवदिति** निदर्शनम्। **अकर्मकं**—कर्मरहितं **स्वयमेवैतत्**, प्रक्रमाद् विज्ञानम्, **प्रकाशते इत्यादि। तदपि प्रतिक्षिप्तं**—निराकृतमिति। इहैव भावनामाह **यत** इत्यादिना। यतो **बोधरूपं तत्**—विज्ञानम्। **न चाबुध्यमानस्य किञ्चित्**—आत्मादिवस्तु **बोधरूपता युज्यते इति** कृत्वा **आत्मबोधोऽभ्युपेयः**। आत्मनो बोधः आत्मबोधः सोऽभ्युपेयः—अभ्युपगन्तव्यः। **तथा च सति**—एवं च सति किमित्याह—**उक्तदोषानतिवृत्तिः**। भावितार्थै[1]वेयम्। कथमित्याह—**स्वात्मसंवेदनादिति। एवं यथोक्तालोकेऽपि**—उदाहरणगते **भावनीयम्**। कथमित्याह—**न ही**त्यादि। न यस्मात् **असावपि**—गगनतलवर्त्यालोकः **किञ्चिदनालोकयन्नालोको नाम,** शब्दार्थानुपपत्तेः। **एवं चाभिधानमात्रमेव**—तत्त्वतोऽर्थशून्यम्। किं तदित्याह—**अकर्मकत्वम्,** विज्ञानस्य **इति**। कथमित्याह—**सन्न्यायासिद्धेः**। असिद्धिश्च **आलोकनमालोक इति**—एवं **भावसाधनपक्षेऽपि** सति **स्वभावालोकनात्**—आत्मभावालोकनादित्यात्मन एव कर्मत्वम्, भिन्नकर्माभावं त्वधिकृत्य शाब्दिकैरकर्मकत्वं प्रतिज्ञातम्। न तु तदेकान्तत एव स्वपरिणामापेक्षया चानन्तपर्याये वस्तुनि व्यतिरिक्तकर्मापेक्षयाऽपि कर्त्रादिभावोऽव्यतिरिक्तकर्मापेक्षयाऽपीति। तथा च भज्यते वृक्षः स्वशाखाभारेणेत्यत्राव्यतिरिक्तस्यापि स्वशाखाभारस्य करणत्वम्। न चेदं न तात्त्विकं वृक्षान्तरवदधिकृतवृक्षभङ्गाभावप्रसङ्गादिति भावनीयम्। **एवमपरोक्षस्वभावमित्याद्युक्तावपि** तथा

---

१ 'अवितार्थै०' इति ङ-पाठः।

( मूलम् )

**वाक्यार्थापत्तित उक्तदोषानतिवृत्तिरेव ॥**

**किञ्च बोधमात्रतायां तन्नीलत्वादिभेदाभावो भेदकाभावात्, तमन्तरेण च तदनुपपत्तेः बोधमात्रस्या[1]विशिष्टत्वात् एकान्तैकस्वभावस्य विशिष्टत्वायोगात् तन्मात्रत्वात्; अन्यथा सर्वत्र बोधभावाभावादतत्स्वभावत्वात् स ह्यन्यत्र भवँस्तन्मिश्रणान्नैकः अमिश्रणे तन्मात्रत्वम्। तथातत्त्वस्यैव तथाभेदाभावः, तत्स्वभावभेदापत्तेः। सति चास्मिँस्तदन्यसिद्धिरेव। तत्स्वभावो हि न बोधमात्रात्मनो[2]**

( स्वो० व्या० )

तथा शैठो[3]पन्यस्तायां **स्वप्रत्यक्षस्वभावमित्यादिवाक्यार्थापत्तितः** कारणात् **उक्तदोषानतिवृत्तिरेव** कर्तृकर्मतायोगेनेति भावनीयम् ॥

**किञ्च बोधमात्रतायां** सत्यामेकान्तैकस्वभावत्वेन **तन्नीलत्वादिभेदाभावः** तस्य—बोधमात्रस्य नीलत्वादिभेदाभावः। कुत इत्याह—**भेदकाभावात् तमन्तरेण च**—भेदकमन्तरेण च **तदनुपपत्तेः**—नीलत्वादिभेदानुपपत्तेः। अनुपपत्तिश्च **बोधमात्रस्याविशिष्टत्वात्**। विशिष्टं बोधमात्रमेवैतदित्याशङ्कानिरासायाह—**एकान्तैकस्वभावस्य,** बोधमात्रस्येति प्रक्रमः। किमित्याह—**विशिष्टत्वायोगात्**। अयोगश्च **तन्मात्रत्वात्**—बोधमात्रतद्भावात्। इत्थ चैतदङ्गीकर्त्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे **सर्वत्र**—विवक्षित देशं विहाय सामान्येन वा। किमित्याह—**बोधभावाभावात्,** बोधसत्तानुपपत्तेरित्यर्थः। एनामेवाह—**अतत्स्वभावत्वात्,** प्रक्रमादेकान्तैकस्वभावत्वात्। कथमेतदेवमित्याह—**स हीत्यादि**। स बोधो यस्मात् **अन्यत्र**—देशादौ **भवँस्तन्मिश्रणात्**—देशादिमिश्रणेन **नैकः**—नैकान्तैकस्वभावः[4] बोधत्वे सति तन्मिश्रणस्वभावत्वादित्यभिप्रायः। इत्थ चैतदङ्गीकर्त्तव्यमित्याह—**अमिश्रणे,** देशादिनेति प्रक्रमः, **तन्मात्रत्वं**—बोधमात्रत्वम्। कथमित्याह—**तथेत्यादि**। तथा—तेन प्रकारेणाविशिष्टबोधमात्रभवनलक्षणेन **तत्त्वं** यस्य बोधमात्रस्य तत् तथाविधं तस्यैव **तथा**—देशादिभेदेन **भेदाभावः**। कुत इत्याह—**तत्स्वभावभेदापत्तेः**—बोधमात्रस्वभावभेदापत्तेः। **सति चास्मिन्**—तत्स्वभावभेदे किमित्याह—**तदन्यसिद्धिरेव**—बोधान्यसिद्धिरेव। एनामेव व्यतिरेकतो भावयन्

( विवरणम् )

(१८) **बोधमात्रतद्भावादिति**। बोधमात्रस्यैव तस्य—ज्ञानस्य भावात्॥

१ 'मात्रस्यापि विशिष्ट०' इति क—पाठ। २ 'मात्रात्मनोऽमिश्र' इति ग—पाठ। ३ 'शवोप०' इति ङ—पाठ। ४ 'भावबोधत्वे' इति ङ—पाठ।

( मूलम् )

**भिन्नः, स चाविशिष्टः प्रतिकलं तुल्यस्वभावतयेति भिन्नजातीयेनास्य भेद आपादनीय इत्यन्यसिद्धिः। तज्जातिभेदवत् किं नात्र स इति चेत्, नासौ सदादिमात्रस्य, नीलादीनां ततः कथञ्चिद् भेदात् तथाप्रतीतेः। न हि सत्प्रतीतिरेव नीलादिप्रतीतिः, तथाऽननुभवात्। एवं तर्हि तुच्छा नीलादयः, न ते क्वचित् सदननुविद्धाः। स्वतोऽसतां कथं**

( स्वो० व्या० )

आह **तत्स्वभाव** इत्यादिना । तत्स्वभावः, प्रक्रमाद् बोधमात्रस्वभावः, यस्मात् **न बोधमात्रात्मनः** सकाशाद् **भिन्नः। स च**–बोधमात्रात्मा **अविशिष्टः प्रतिकलं**–[1]कलां कलां प्रति **तुल्यस्वभावतया** कारणेन। व्यवस्थानमधिकृत्यैतदाह। अन्यथा कलाभेदोऽप्यसङ्गत एवेति भावनीयम्। **इति**–एवं **भिन्नजातीयेन** देशादिनाऽ**स्य**–बोधमात्रात्मनः **भेद आपादनीयः। इति**–एव**मन्यसिद्धिः**, इह प्रक्रमे नीलादिसिद्धिरित्यर्थः। **तज्जातिभेदवत्**–नीलादिजातिभेदवत् **किं नात्र**–बोधमात्रात्मनि **स इति चेत्** नीलादिभेदः। एतदाशङ्क्याह–**नासौ**–जातिभेदः **सदादिमात्रस्य**। कथमित्याह–**नीलादीनां ततः**–सदादिमात्रात् **कथञ्चित्**–केनचित् प्रकारेण [2]**भेदाद्** भेदश्च **तथाप्रतीतेः**–सदादिमात्रप्रतीतेर्भेदेन नीलादिमात्रप्रतीतेः। एतदेवाह–**न हि सत्प्रतीतिरेव नीलादिप्रतीतिः**। कुत इत्याह–**तथाऽननुभवात्**, सत्प्रतीतेः नीलादिप्रतीतित्वेनाननुभवादित्यर्थः। आह–**एवं तर्हि** सदाद्यन्यत्वेन **तुच्छा नीलादयः**। एतदाशङ्क्याह–**न ते**–नीलादयः **क्वचित् सदननुविद्धाः**। किं तर्हि? सर्वत्र तदनुविद्धा एव। **स्वतोऽसतां** तुच्छतया **कथं तदनुवेधः**–सदनुवेधः?। एतदाशङ्क्याह–**सदा तदनुवेधे**–सदनुवेधे सति

( विवरणम् )

(११) **कलां कलां प्रतीति**। समयं समयं प्रतीत्यर्थः॥

(११) **व्यवस्थानमधिकृत्यैतदाहेति**। वस्तुस्थितिमाश्रित्यैतदुच्यते यदुत प्रतिकलम्। कलाशब्देन हि समयः प्रोच्यते [3]स चाचार्यमते एव घटते, न तु ज्ञानमात्रवादिनो मते॥

(१४) **नीलादिसिद्धिरिति**। नीलपीतादिबाह्यार्थसिद्धिरित्यर्थः॥

(१४) **नीलादिजातिभेदवदिति**। तथापि–वस्तुत्वमात्रस्याभेदेऽपि [4]नीलः पदार्थो रक्तो वा इत्यादिर्जातिभेदो भवति, [5]तथा यदि ज्ञानमात्रस्याभेदेऽपि बाह्यार्थमन्तरेणापि नीलं पीतं ज्ञानमित्यादिर्भेदो भविष्यति तदा को दोष इत्याशयः परस्य॥

१ 'कलां प्रति' इति क–पाठः। २ 'भेदादभेदश्च' इति क–पाठः। ३ 'सर्वाचार्य०' इति च–पाठः। ४ 'नीलाः पदार्था रक्ता वा' इति क–पाठः। ५ 'तदा यदि' इति च–पाठः।

( मूलम् )

**तदनुवेधः ? सदा तदनुवेधे नासत्त्वम्, सत्त्वमेव। एवं तत् तथाविधं तदितरानुविद्धमित्यस्तु केवल एव पुनः को दोषः ? तन्मात्रतया न नीलादित्वम् ॥**

**एवं हि न नीलमेव पीतम्। न च सत्त्वमात्रतत्त्वमेतत्। न चासदेव प्रतीतिहेतुः। प्रतीयते च तदन्यत्वेन। ततस्ततोऽन्यत् तदिति सिद्धम्। तन्मात्रताऽभावे तदेव तत्। तत्रैव किं मानमिति वाच्यम्। हन्त तथाऽनुपलम्भ एव। सोऽसिद्धो दूरोपलम्भेन। कोऽयम्? अनीलादिरूप इति। य एव तन्निश्चयाजनकः स मन्दो नीलादिग्रह एव, न, सत्त्वनिश्चयजनकत्वात्। न तत्रापि स केवलस्य, सत्यम्,**

( स्वो० व्या० )

**नासत्त्वं** नीलादीनां **सत्त्वमेव। एवम्**–उक्तनीत्या **तत्**–नीलादि **तथाविधं**–विशिष्टम्। एतदाशङ्क्याह–**तदितरानुविद्धं**–नीलाद्यनुविद्ध**मित्यस्तु**–भवतु सत्त्वमेव **केवल एव** तदितराननुविद्धे सत्त्वे तथाविध इति प्रक्रमः। **को दोष** इत्याशङ्क्याह–**तन्मात्रतया**–अविशिष्टसन्मात्रतया **न नीलादित्वम्** ॥

इदानीं निगमयन्नाह–**एवं** **हीत्यादि**। एवं यस्मात् **न नीलमेव पीतम्**, प्रतिभासभेदानुभवात्। **न च सत्त्वमात्रतत्त्वमेतत्**–नीलम्। **न चासदेव**–एकान्तेन **प्रतीतिहेतुः। प्रतीयते च**[1] **तदन्यत्वेन**–सत्त्वमात्रभेदेन यत एव **ततः**–तस्मात् कारणात् **ततः**–सत्त्वमात्रात् **अन्यन्नीलमिति सिद्धम्।** [2]**तन्मात्रताऽभावे** सति **तदेव**–नीलाद्येव **तत्**–नीलादि। एवमपि किलैकस्वभावत्वसिद्धिरित्येतदाशङ्क्याह–**तत्रैव**–सन्मात्रताभावे **किं मानमिति वाच्यम्। हन्त** किमत्रोच्यते?। **तथा**–सन्मात्रत्वेन **अनुपलम्भ एव** मानमिति। एतदाशङ्क्याह–**सः**–तथाऽनुपलम्भः। [3]किमित्याह–**असिद्धः**। कथमित्याह–**दूरोपलम्भेन** सन्मात्रस्येति भावः। **कोऽयं**–दूरोपलम्भः? **अनीलादिरूप इति** परः। अत्रोत्तरम्–**य एव तन्निश्चयाजनकः**–नीलादिनिश्चयाजनकः। आह–**स मन्दः**–अस्पष्टो **नीलादिग्रह एव**। परिहारोऽत्र–**न सत्त्वनिश्चयजनकत्वात्** मन्दता-

( विवरणम् )

(२०-२१) **तन्मात्रताऽभावे सतीति**। नीलादेः सन्मात्रतया अभावे सतीति ॥

(२१) **नीलाद्येव तत्-नीलादीति**। नील नीलमेव पीत पीतमेव, एवं सर्वत्र इत्थमप्येकस्वभावत्वमेव वस्तुन इत्यभिप्रायः परस्य ॥

१ 'तदन्यत्वे च त(?)सत्त्व०' इति ङ–पाठ। २ 'एतन्मात्रताभावे सति तन्मात्रताभावे तदेव' इति ङ–पाठ। ३ 'किमित्याह सिद्ध' इति ङ–पाठ।

( मूलम् )

**तद्भिन्नात्मगमकस्तु । तदन्यानुविद्धं [1]सत्त्वमिति युक्तो जातिभेदः । न चैवमन्यानुविद्धो बोध इति तन्मात्रतत्त्ववादे त्वयुक्त एव ॥ एतेन**

**“नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः ।**
**नीलाद्यनुभवः ख्यातः स्वरूपानुभवोऽपि सन् ॥”[2]**

**इत्येतत् प्रत्युक्तम्, एकान्तैकस्वभावस्यात्र विवक्षितत्वात्, तस्य चोक्तवदयोगात् । न च नीलत्वादिभेदाभाव एव, आह्लादादिवत्**

( स्वो० व्या० )

योगः । आह–**न तत्रापि**–दूरोपलम्भे **स केवलस्य** सत्त्वस्य ग्रहः, केवलस्याभावादित्यभिप्रायः । इह समाधिः–**सत्यं** न [3]तत्रापि स केवलस्य **तद्भिन्नात्मगमकस्तु**, प्रक्रमान्नीलादिभिन्नात्मगमकः पुनः दूरोप[4]लम्भः सत्त्वस्य । उपसंहरन्नाह–**तदन्यानुविद्धम्**, नीलाद्यनुविद्धमित्यर्थः । **सत्त्वमिति** कृत्वा **युक्तो जातिभेदः**, प्रक्रमान्नीलादीनाम् । **न चैवमन्यानुविद्धो बोध इति**–एवं **तन्मात्रतत्त्ववादे**–बोधमात्रतत्त्ववादे पुनरयुक्त इति परिभावनीयम् ॥

**एतेने**त्यादि । एतेन–अनन्तरोदितेन

**“नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः ।**
**नीलाद्यनुभवः ख्यातः स्वरूपानुभवोऽपि सन् ॥”**

**इत्येतत् प्रत्युक्तम्** । कथमित्याह–**एकान्तैकस्वभावस्य** बोधादेर्**विवक्षितत्वात्, तस्य च**–एकान्तैकस्वभावस्य **उक्तवत्**–यथोक्तं तथा **अयोगात्** । अभ्युच्चयमाह **न चे**त्यादिना । न च **नीलत्वादिभेदाभाव एव** । किं तर्हि ? भावः । कुत [5]इत्याह–**आह्लादादिव**दिति निदर्शनम् । **स्पष्टसंवेदनत्वा**न्नीलादिभेदस्य

( विवरणम् )

(१७-१८) **“नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः ।**
**नीलाद्यनुभवः ख्यातः स्वरूपानुभवोऽपि सन् ॥”**

इति । नीलादिरूपः–नीलपीतस्वभावस्तस्य–नीलादिज्ञानस्य असौ सर्वजगज्जनप्रतीतः स्वभावः–स्वरूपं तथाऽनु[6]भवश्च–अनुभवोऽपि स्वसंवेदनलक्षणो [7]हि ज्ञानस्य नीलादिरूप एव । एवं सति किं सिद्धमित्याह–नीलाद्यनुभवः ख्यातः–लोकप्रसिद्धः स्वरूपानुभावोऽपि सन् नीलादिज्ञानस्य सम्बन्धी । इदमुक्तं भवति–नीलादिज्ञानस्य नीलादिरूपः स्वभावोऽनुभवश्च; [8]न तु बाह्यनीलाद्याकारः कश्चित् तत्रास्ति यद्वशात् नीलमुच्यते । अतो ज्ञानस्य स्वरूपानुभव एव नीलाद्याकार इति ॥

१ ‘सत्यमिति युक्तो’ इति क–पाठः । २ अनुष्टुप् । ३ ‘तथापि स’ इति ङ–पाठः । ४ ‘लम्भसत्त्वस्य’ इति क–पाठः । ५ ‘इत्याह ह्लादादि०’ इति ङ–पाठः । ६ ‘भवश्चानुभावोऽनुभवोऽपि’ इति क–पाठः । ७ ‘हि ज्ञानस्य...भवति’ इति पाठो नास्ति ख–च–प्रतौ । ८ ‘ननु बाह्य०’ इति च–पाठः ।

(मूलम्)

स्पष्टसंवेदनत्वात् अपह्नवेऽतिप्रसङ्गादिति ॥

किञ्च विज्ञानमात्रवादिनो न कारकज्ञापकस्थितिः, न्यायानुपपत्तेः। तथाहि–अस्य न बीजाङ्कुरौ वस्तुतो विद्येते, किन्तु बीजाङ्कुरप्रतिभासाया बुद्धेर्ग्राह्याकारे बीजाङ्कुरव्यवस्था। ग्राह्याकारश्च बुद्धेः तत्त्वतो नास्ति, विप्लवत्वेनासत्त्वात्। तत् कथं तदाकारयोः कार्यकारणव्यवस्थानिबन्धनभूतयोरसत्त्वे बीजादङ्कुरस्य जन्मेति कारकव्यवस्था?। स्यादेतद् बीजनिर्भासाया बुद्धेरनन्तरमेवाङ्कुरनिर्भासा बुद्धिरिति। बीजाङ्कुरनिर्भासानुगतयोर्बुद्ध्योः प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः। अयं च स्वसंवेदनलक्षणयोर्बुद्ध्योर्वस्तुत्वादविरोध्येव। बीजादिनिर्भासस्तु विचाराक्षमत्वादुपप्लव एव। न तस्य तत्त्वतः कार्यकारणभावः। लोकप्रतीत्यनुसारतस्तु तथाव्यवहाराय

(स्वो० व्या०)

अपह्नवे नीलादिभेद[1]विषयस्य स्पष्टसंवेदनस्य। किमित्याह–अतिप्रसङ्गात् ह्लादाद्यभावप्रसङ्गेन इति ॥

किञ्च विज्ञानमात्रवादिनो वादिनः किमित्याह–न कारकज्ञापकस्थितिः। कारकं बीजमङ्कुरस्य, ज्ञापकस्तु [2]धूमोऽग्नेरिति। कथं नैतत्स्थितिरित्याह–न्यायानुपपत्तेः। एनामेवाह तथाहीत्यादिना। तथाहि–अस्य–विज्ञानमात्रवादिनो न बीजाङ्कुरौ वस्तुतः–परमार्थेन विद्येते बाह्यौ, किन्तु बीजाङ्कुरप्रतिभासाया बुद्धेः ग्राह्याकारे–तथाप्रतिभासरूपे बीजाङ्कुरव्यवस्था। यद्येवं ततः किमित्याह–ग्राह्याकारश्च बुद्धेस्तत्त्वतः–परमार्थेन नास्ति। कथमित्याह–विप्लवत्वेन हेतुना असत्त्वात्। तत् कथं तदाकारयोः–बुद्ध्याकारयोः कार्यकारणव्यवस्थानिबन्धनभूतयोरसत्त्वे–अतात्त्विके बीजादङ्कुरस्य जन्मेति–एव कारकव्यवस्था। स्यादेतद् बीजनिर्भासाया बुद्धेः अनन्तरमेवाङ्कुरनिर्भासा बुद्धिरिति कृत्वा। बीजाङ्कुरनिर्भासानुगतयोर्बुद्ध्योः किमित्याह–प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः। अयं च–कार्यकारणभावः स्वसंवेदनलक्षणयोर्बुद्ध्योर्वस्तुत्वात् कारणात् अविरोध्येव, [3]वस्तु वस्तुन उत्पद्यत एवेति कृत्वा। बीजादिनिर्भासस्तु किमित्याह–विचाराक्षमत्वाद् बाह्याभावेन उपप्लव एव। न तस्य–निर्भासस्य तत्त्वतः कार्यकारणभावः, लोकप्रतीत्यनुसारतस्तु–पृथग्जनापेक्षया तथा

१ 'विषयस्पष्ट०' इति ङ-पाठ। २ 'धूमोऽग्निरिति' इति ङ-पाठ.। ३ 'वस्तु' इति पाठो नास्ति ङ-प्रतौ।

(मूलम्)

अभिधीयत इति व्यवस्था। अहो बलवानयमसदभिनिवेशो य इत्थमप्यनालोचिताभिधानं विदुषोऽपि प्रवर्त्तयतीति। अनालोचिताभिधानता चास्य बीजादिनिर्भासो निश्चीयमान उपप्लवः स तत्त्वतो नास्तीति तन्निश्चयाभावापत्त्या। न खलु बोधेऽप्यसतो निश्चयः, अतिप्रसङ्गात्, खरविषाणादिनिश्चयापत्तेः, असत्त्वाविशेषात्। न च तत्र सत्त्व एवोपप्लवता, बोधादभिन्नत्वात्, तस्य चानुपप्लवत्वेनेष्टेः, भिन्नसत्त्वे[1]ऽर्थापत्तिः। विशिष्टो बोध एवोपप्लव इति चेत् तन्मात्रतत्त्वनीतौ कुतोऽस्य वैशिष्ट्यमित्युक्तप्रायम्। वक्ष्यते च-'स्वसंवेदन-

(स्वो० व्या०)

[2]निर्भासोद्धारणेन व्यवहारायाभिधीयत इति-एवं व्यवस्था, कारकगोचरेति प्रक्रमः। एतदाशङ्क्याह-अहो बलवानसदभिनिवेशः यः-असदभिनिवेश इत्थमपि-यथोक्तं तथाऽनालोचिताभिधानं विदुषोऽपि-पण्डितस्यापि प्रवर्त्तयतीति। अनालोचिताभिधानता चास्य-परोदितस्य बीजादिनिर्भासो निश्चीयमानस्तथाऽनुभवेन उपप्लवः स तत्त्वतो नास्ति। इति-एवं तन्निश्चयाभावापत्त्या-अनुभूयमानबीजादिनिर्भासनिश्चयाभावापत्त्या अनालोचिताभिधानतेति। एतद्भावनायैवाह-न खल्वित्यादि। न खलु-नैव बोधेऽप्यसतः, निर्भासस्येति प्रक्रमः। किमित्याह-निश्चयः। कथं नेत्याह-अतिप्रसङ्गात्। एनमेवाह-खरविषाणादिनिश्चयापत्तेः। आपत्तिश्च-असत्त्वाविशेषात्। इहैवाभ्युच्चयमाह-न चेत्यादि। न च तत्र-बोधे सत्त्व एवो[3]पप्लवता, निर्भासस्येति प्रक्रमः। कुत इत्याह-बोधादभिन्नत्वान्निर्भासस्य, तस्य च-बोधस्य अनुपप्लवत्वेनेष्टेः, भिन्नसत्त्वे बोधान्निर्भासस्य। किमित्याह-अर्थापत्तिः निर्भासानाम्। विशिष्टो बोध एव वितथप्रतिभास उपप्लवः। इति चेत्, एतदाशङ्क्याह-तन्मात्रतत्त्वनीतौ-बोधमात्रतत्त्वनीतौ कुतोऽस्य बोधस्य वैशिष्ट्यमित्युक्त-

(विवरणम्)

(२१) न च तत्र-बोधे सत्त्व एवोपप्लवता निर्भासस्येति। बोधे विषयभूते निर्भासस्य सत्त्वे एव-विद्यमानत्वे एव सति न च-नैवोपप्लवता निर्भासस्य॥

(२३) अर्थापत्तिर्निर्भासानामिति। यदि हि बोधात् सकाशाद् भिन्ना निर्भासाः समभ्युपगम्यन्ते तदा न बाह्यार्था रूपाः(?) प्राप्नुवन्तीत्यर्थः॥

१ 'सत्त्वेनार्था०' इति क-पाठः। २ 'निर्भासोच्चारणेन' इति ङ-पाठः। ३ 'एवोभिपप्लवता' इति ङ-पाठः।

(मूलम्)

लक्षणे च बुद्धी सर्वथा बोधमात्रत्वादद्वयत्वाद[1]विशिष्टबुद्धित्वेन तदन्यग्राहकबुद्धिशून्ये च'। इति प्रत्यक्षानुपलम्भा प्रवृत्तिरेव। न हि भिन्नकालभाविबुद्धिद्वयमन्वयविकलतयोपकारादिनिरपेक्षं तथाविधावध्यभावे तदितरावसायकमिति न स्वसंवेदनलक्षणयोरपि बुद्ध्योः कार्यकारणभावावसाये समुपायः। ततश्च सोऽनयोर्वस्तुत्वादविरोधीत्यज्ञानाभिधानम्[2]। तत्पृष्ठभावि विकल्पज्ञानमपि तथाविधबीजाङ्कुरनिर्भासाभावेन भवन्नीत्या असम्भव्येव, न ज्ञानहेतुरिति भावनीयम्। एवं च 'लोकप्रतीत्यनुसारतस्तु तथाव्यवहारायाभिधीयते'[3] इति अपि वचनमात्रमेव, सर्वथाऽसतो लोकेऽप्यप्रतीतेः, तुच्छस्य अनुभवविरोधात्, अकार्यकारणभूतस्य च तुच्छत्वात्, व्यवहारस्य

(स्वो० व्या०)

प्रायं–प्रायेणोक्तमधः। वक्ष्यते च ऊर्ध्वं स्वसंवेदनलक्षणे च बुद्धी निर्विकल्पिके सर्वथा बोधमात्रत्वात् कारणात् अद्वयत्वात् ग्राह्यग्राहकाकारविरहेण अविशिष्टबुद्धित्वेन तथा तदन्यग्राहकबुद्धिशून्ये च तथाऽभ्युपगमात्। इति–एवं प्रत्यक्षानुपलम्भा प्रवृत्तिरेव कार्यकारणभावे। एतदेव भावयति न हीत्यादिना। न यस्माद् भिन्नकाल(भावि)बुद्धिद्वयं निरन्वयनाशतोऽन्वयविकलतया कारणेन उपकारादिनिरपेक्षम्–उपकारवासनानिरपेक्षमन्वयविकलतयैव तथाविधावध्यभावे–इतरेतरावध्यभावे तदितरावसायकं–स्वरूपेतरावसायकम्। नहि इति न स्वसंवेदनलक्षणयोरपि बुद्ध्योः कार्यकारणभावावसाये समुपायोऽस्ति। ततश्च सः–कार्यकारणभावः अनयोः–स्वसंवेदनलक्षणयोर्बुद्ध्योर्वस्तुत्वादविरोधीत्यज्ञानाभिधानं पूर्वपक्षे। तत्पृष्ठभावि–स्वसंवेदनलक्षणबुद्धिपृष्ठभावि विकल्पज्ञानमपि तथाविधबीजाङ्कुरनिर्भासाभावेन भवन्नीत्या–त्वन्न्यायेनैव असम्भव्येव। विकल्पज्ञानं न ज्ञानहेतुः प्रक्रमात् कार्यकारणभावे इति एतद् भावनीयम्। एवं च कृत्वा 'लोकप्रतीत्यनुसारतस्तु तथाव्यवहारायाभिधीयते' इति अपि वचनमात्रमेव पूर्वपक्षे[4], विवक्षितार्थशून्यमित्यर्थः। कथमित्याह–सर्वथाऽसतो निर्भासस्य लोकेऽप्यप्रतीतेः कारणात्। एतदेवाह–तुच्छस्यानुभवविरोधात्। तुच्छश्चाधिकृतनिर्भासः परनीत्या। अत एवाह–अकार्यकारणभूतस्य च तुच्छत्वात्। अकार्यकारण-

१ 'त्वादविशिष्टे बुद्धि०' इति ग–पाठ। २ 'ज्ञाताभिधानम्' इति ग–पाठ। ३–४ द्रष्टव्य ९५तम पृष्ठ ९६तम च।

( मूलम् )

**चार्थक्रियारूपत्वात्, असतस्तादर्थ्यायोगादिति। असच्चन्द्रद्वयं प्रतीयत इति चेत्, असत् प्रतीयत इति च व्याहतम्। क्व[1] तर्हि तत् सत्? ननु तत्प्रतीतौ। किमत्र मानम्? तदनुभव एव। तदसत्त्वे को दोषः? तदनुभवाभावः। कुतस्तर्हि तत्? स्वहेतुजातात्। किं पुनः तदस्य? बोधादृष्टविषयादि। कथं तर्हि भ्रान्तम्? अदृष्टाध्यारोपात्। यद्येवं नास्ति तत्त्वत इति चेत्, न, अध्यारोपग्रहणरूपतया भावात्। इति सती च सनिबन्धना च सन्नीत्या सर्वलोकप्रतीतिः। असँश्च बीजाङ्कुरनिर्भासः त्वन्नीत्या, उत्पत्त्याद्यसिद्धेः। इति न बीजात् अङ्कुरस्य जन्मेति कारकव्यवस्था ॥**

---

( स्वो० व्या० )

भूतश्च परनीत्याऽधिकृतनिर्भासः। तथाव्यवहारायाभिधीयत इति [2]विशेषणेनैनमवयवमधिकृत्याह–**व्यवहारस्य चार्थक्रियारूपत्वात्, असतो** निर्भासस्य **तादर्थ्यायोगात्**–व्यवहारार्थायोगा**दिति**। इहैव आशङ्काशेषनिवृत्त्यर्थमाह–**असच्चन्द्रद्वयं प्रतीयत इति चेत्**, एवमधिकृतनिर्भासोऽपि भविष्यतीति पराभिप्रायः। एतदाशङ्क्याह–**असत् प्रतीयत इति च व्याहतम्**। न सर्वथाऽसतः प्रतीतिरित्यर्थः। **क्व तर्हि तत्**–चन्द्रद्वयं **सदि**ति परः। **[3]ननु तत्प्रतीतौ**–चन्द्रद्वयप्रतीतावित्याचार्यः। **किमत्र मानमि**ति पर एव (?आह)। **तदनुभव एवे**ति सिद्धान्तवादी। **तदसत्त्वे**–चन्द्रद्वयासत्त्वे **को दोषः?**। अत्रोत्तरम्–**तदनुभवाभावः**–चन्द्रद्वयानुभवाभावः। **कुतस्तर्हि तत्**–चन्द्रद्वयं बहिरसदित्यभिप्रायः। इह समाधिः–**स्वहेतुजातात्** तदिति। **किं पुनस्तत्**–हेतुजातं **अस्य**–बोधप्रतिभासिनश्चन्द्रद्वयस्य?। अत्र निर्वचनम्–**बोधादृष्टविषयादि**। 'आदि'-शब्दाद् देशकालादिग्रहः। एतदभावेऽभावादिति भावः। **कथं तर्हि भ्रान्तं** हेतुजातोद्भवं सदित्यभिप्रायः। अत्रोत्तरम्–**अदृष्टाध्यारोपात्**, कर्मसामर्थ्येन विपर्ययादित्यर्थः। **यद्येवम**दृष्टाध्यारोपात् **नास्ति** तच्चन्द्रद्वयं **तत्त्वतः। इति चेत्**, एतदाशङ्क्याह–**न, अध्यारोपग्रहणरूपतया**–आधिक्यग्रहणरूपतया **भावात्। इति**–एवं **सती**–विद्यमाना **सनिबन्धना च**–चित्रनिबन्धनापेक्षया च **सन्नीत्या**–सर्वज्ञप्रणीतया **सर्वलोकप्रतीतिः। असँश्च बीजाङ्कुरनिर्भासः**

---

१ 'कुतस्तर्हि तत्' इति क–पाठः। २ 'विशेषणेनैतमव०' इति ङ–पाठः। ३ 'न तु' इति क–पाठः।

( मूलम् )

**एतेन ज्ञापकव्यवस्था प्रत्युक्ता, धूमादग्निप्रतिपत्त्ययोगात्, अयं धूमोऽयमग्निरिति निर्भासाभावात्, तमन्तरेण च तथाप्रतीत्यनुपपत्तेः, अद्वयबोधमात्रस्य च गगनतलवर्त्यालोककल्पत्वादिति । एवं च यदाह न्यायवादी–**

**"बीजादङ्कुरजन्माग्नेर्धूमात् सिद्धिरितीदृशी ।**
**बाह्यार्थाश्रयणी याऽपि कारकज्ञापकस्थितिः ॥[1]**
**साऽपि [2]तद्रूपनिर्भासा तथा नियतसङ्गमाः ।**
**बुद्धीराश्रित्य कल्प्येत यदि किं वा विरुध्यते ? ॥"[3]**

**इत्यादि, तदसाम्प्रतमिति दर्शितं भवति ॥**

**इतश्च ज्ञापकस्थितिः अयुक्ता, धूमप्रतिभासकालेऽग्निप्रतिभासा-**

( स्वो० व्या० )

**त्वन्नीत्या ।** कुत इत्याह–**उत्पत्त्याद्यसिद्धेः । इति**–एवं **न [4]बीजादङ्कुरस्य जन्म । इति**–एव **कारकव्यवस्था** त्वन्नीत्येति भावनीयम् ॥

**एतेने**त्यादि । **एतेन**–अनन्तरोदितेन निर्भासनिषेधेन **ज्ञापकव्यवस्था प्रत्युक्ता ।** कथमित्याह–**धूमादग्निप्रतिपत्त्ययोगात् ।** अयोगश्च **अयं धूमोऽयमग्निरिति निर्भासाभावात्** त्वन्नीत्या, **तमन्तरेण च**–निर्भासं विना च **तथाप्रतीत्यनुपपत्तेः**–धूमादग्निप्रतीतिरूपतया प्रतीत्यनुपपत्तेरिति । इहैव भावार्थमाह–**अद्वयबोधमात्रस्य गगनतलवर्त्यालोककल्पत्वान्निराकारतयेति । एवं च** कृत्वा **यदाह न्यायवादी–धर्मकीर्त्तिः** तदसाम्प्रतम्–अशोभनमिति दर्शितं भवतीति योगः । किं तदित्याह–**बीजादङ्कुरजन्म** तथा**ऽग्नेर्धूमात् सिद्धिः इतीदृशी**–एवम्भूता **बाह्यार्थाश्रयणी याऽपि कारकज्ञापकस्थितिः साऽपि तद्रूपनिर्भासा**–बीजादिरूपनिर्भासा **तथा नियतसं[5]ङ्गमाः** पौर्वापर्योत्पादादिना **बुद्धीः [6]आश्रित्य कल्प्येत यदि किं वा विरुध्यते ?** न किञ्चिदित्यर्थः । **इत्यादि तदसाम्प्रतमिति निदर्शितं भवती**ति व्याख्यातमेतत् ॥

अभ्युच्चयमाह–**इतश्च ज्ञापकस्थितिरयुक्ता, धूमप्रतिभासकालेऽग्नि-**

( विवरणम् )

(१४) **उत्पत्त्याद्यसिद्धे**रिति । भवन्मते हि अवस्तुत्वान्निर्भासस्य नोत्पत्ति-नाशौ स्तः । यस्य चोत्पाद-व्ययौ न विद्येते तदसदेव यथा खरविषाणम् । तथा च **बौद्ध**मते सर्वोऽपि निर्भास इति असत्त्वमेव तस्य ॥

१ अनुष्टुप् । २ 'सद्रूपनिर्भासा' इति क–पाठ । ३ अनुष्टुप् । ४ 'बीजादकुदकुरस्य' इति ङ–पाठ । ५ 'ससमा' इति ङ–पाठ । ६ 'आसृत्य साकल्पेत या(?य)दि तत् किं' इति ङ–पाठ ।

( मूलम् )

**भावात्, तथासंवित्तेः पश्चाद्भावित्वात्। अनग्निप्रतिभासजोऽप्येवं धूमप्रतिभासः स्यात्, लिङ्गभूतस्यास्य न्यायतः पूर्वमग्निप्रतिभासासिद्धेः। तथाहि–अन्तर्ज्ञेय[1]वादिनोऽप्यनुमानकाले धूमप्रतिभास एव पूर्वमुत्पद्यते, नाग्निप्रतिभासः, अनुमानाप्रवृत्तेः, अनुमेयस्यैव प्रत्यक्षत्वादिति पूर्वो[2]ऽनग्निप्रतिभास एव। एवं च कार्यात् कारणगत्ययोगः। धूमप्रतिभासोऽग्निप्रतिभासहेतुस्ततस्तद्गतिरिति चेत्, न, व्यभि-**

( स्वो० व्या० )

**प्रतिभासाभावात्।** अभावश्च **तथासंवित्तेः**–यौगपद्येनोभयासंवित्तेः। असंवित्तिश्च **पश्चाद्भावित्वात्** प्रयोगकालेऽग्निप्रतिभासस्य। यदि नामैवं ततः किमित्याह–**अनग्निप्रतिभासजोऽप्येवं** धूमप्रतिभासादग्निप्रतिभासस्य उत्पत्तौ सत्यां **धूमप्रतिभासः स्यात्** प्रयोगकालभावी। कुत इत्याह–**लिङ्गभूतस्यास्य**–धूमप्रतिभासस्य **न्यायतः**–न्यायेन **पूर्वमग्निप्रतिभासासिद्धेः**। अनग्निप्रतिभासजत्वमिति। एतत्प्रकटनायैवाह–**तथाही**त्यादि। तथाहि–**अन्तर्ज्ञेयवादिनोऽपि**–विज्ञानवादिनः **अनुमानकाले** प्रयोगमधिकृत्य **धूमप्रतिभास एव पूर्वमुत्पद्यते** लिङ्गभूतो **नाग्निप्रतिभासः**। कुत इत्याह–**अनुमानाप्रवृत्तेः**। अप्रवृत्तिश्च **अनुमेयस्यैव प्रत्यक्षत्वात्**। **इति**–एवं **पूर्वोऽनग्निप्रतिभास एव** प्रयोगकालभाविनो धूमप्रतिभासस्य। **एवं च** कृत्वा **कार्यात्**[3] **कारणगत्ययोगः** प्रयोगकालभाविनो धूमप्रतिभासस्याग्निप्रतिभासजन्यत्वादित्यर्थः। **धूमप्रतिभासः** अधिकृतः किल **अग्निप्रतिभास**[4]**हेतुस्ततः**–धूमप्रतिभासात् **तद्गतिः इति चेत्**–

( विवरणम् )

(१४) **पूर्वमग्निप्रतिभासासिद्धे**रिति। प्रयोगकाले धूमप्रतिभासात् पूर्वमानन्तर्येणाग्निप्रतिभासो नास्त्येवेत्यर्थः॥

(१७) **अनुमानाप्रवृत्ते**रिति। धूमप्रतिभासाद् यदि पूर्वमप्यग्निप्रतिभासः स्यात् तदा किमनुमानेनेत्यर्थः॥

(१८) **अनुमेयस्यैव प्रत्यक्षत्वा**दिति। अनुमेयस्यैव–अग्निप्रतिभासस्य॥

(२१) **किलाग्निप्रतिभासहेतु**रिति। किलेत्याप्तप्रवादसूचनार्थः। अग्निप्रतिभासस्य हेतुरग्निप्रतिभासहेतुः। अयमभिप्रायः–योऽयं प्रयोगकाले धूमप्रतिभासः (स) आत्मक्षणानन्तरमेवाग्निप्रतिभासं जनयिष्यतीति कृत्वा धूमप्रतिभासादग्निप्रतिभासगतिरिति॥

१ 'अद्वयवादिनो०' इति क–पाठः। २ 'पूर्वो नाग्नि०' इति ग–पाठः। ३ 'कार्यकारण०' इति ङ–पाठः। ४ 'हेतुभूतो धूम०' इति ङ–पाठः।

( मूलम् )

**चारसम्भवात्, नावश्यं कारणानि तद्वन्ति भवन्तीत्यभ्युपगतत्वाद् व्यभिचाराच्च ॥**

**स्यादेतद् धूमनिर्भासो न सर्वस्माज्ज्ञानादुत्पद्यते, किन्तु यद् विज्ञानमग्निनिर्भासस्य सन्तानपरिणामेन उत्पादनसमर्थं तत एव । न ह्यग्निनिर्भासस्याकारणभूतं क्वचिद् धूमनिर्भासकारणत्वेन दृश्यते, महानसादावग्निनिर्भाससहितस्यैव धूमनिर्भासस्य समुपलम्भात् । एवं च नाग्निनिर्भास एव धूमनिर्भासकारणम् । किं तर्हि ? अग्निनिर्भासजननसमर्थं निर्भासान्तरमपि । एतदपि तत्समर्थमेव नान्यदिति**

( स्वो० व्या० )

अग्निप्रतिभासगतिरिति चेत् । एतदाशङ्क्याह–**न, व्यभिचारसम्भवात् ।** सम्भवश्च **नावश्यं कारणानि तद्वन्ति भवन्तीत्यभ्युपगतत्वाद् व्यभिचाराच्च ।** धूमप्रतिभासादनग्निप्रतिभासोऽपि दृश्यत एवेति व्यभिचारः ॥

**स्यादेतद् धूमनिर्भासो न सर्वस्माज्ज्ञानादुत्पद्यते** सामान्येन, **किन्तु यद् विज्ञानमग्निनिर्भासस्य,** अन्याकारस्य विशिष्टस्य विज्ञानस्येत्यर्थः, **सन्तानपरिणामेन**–प्रबन्धवृत्त्या **उत्पादनसमर्थं तत एव** उत्पद्यत इति । भावनामाह **न ह्रीत्यादिना ।** न हि **अग्निनिर्भासस्याकारणभूतं** विज्ञानं **क्वचिद् धूमनिर्भासकारणत्वेन दृश्यते,** सन्तानपरिणामेनेति प्रक्रमः । कथमित्याह–**महानसादावित्यादि,** महानसादावित्यत्र 'आदि'शब्देन दवाग्निपरिग्रहः, **अग्निनिर्भाससहितस्यैव धूमनिर्भासस्य समुपलम्भात्** कारणात् । **एवं** चेत्यादि । एवं च कृत्वा **नाग्निनिर्भास एव**–केवलो **धूमनिर्भासकारणम् । किं तर्हि ? अग्निनिर्भासजननसमर्थं** सन्तानपरिणामेन **निर्भासान्तरमपि । एतदपि**–निर्भासान्तरं **तत्समर्थमेव**–धूमनिर्भासजननसमर्थमेव । **नान्यदि**त्यनेन

( विवरणम् )

(१३) **तद्वन्तीति** । कार्यवन्तीति । अभ्युपगममात्रमेवेदं भविष्यति यदुत नावश्यं कारणानि तद्वन्ति भवन्ति । व्यभिचारस्तु न भविष्यतीत्याह–(१३) **व्यभिचाराच्चेति** । व्यभिचारमेव भावयन्नाह–(१४) **धूमप्रतिभासादग्निप्रतिभासोऽपि दृश्यत एवेति व्यभिचार** इति । वल्मीकोद्भवाद् धूमप्रतिभासाद् दृश्यत एवानग्निप्रतिभास इति स्पष्ट एव व्यभिचारः ॥

१ 'पगमाद् व्यभि०' इति क–पाठः । २ 'स्यादेतद्धूमनिर्भासो' इति क–पाठः । ३ 'एवेत्यादि एव च' इति क–पाठः ।

( मूलम् )

**लिङ्गभूतधूमनिर्भासस्य पूर्वभाव्यनग्निनिर्भासादपि विशिष्टादुत्पत्तिः सफलैव । तथाहि–यदाप्यनग्निनिर्भासानन्तरं**[1] **धूमनिर्भासः संवेद्यते तदापि अग्निनिर्भासजननसमर्थमालयाख्यमेव विज्ञानं धूमनिर्भासहेतुः, तस्मात् सन्तानपरिणामेनाग्निनिर्भासजननसमर्थाद् विज्ञानसन्तानादुत्पन्नो धूमनिर्भासः कारणभूतस्य विज्ञानसन्तानस्याग्निनिर्भासजननसामर्थ्यमनुमापयति । एवं च कार्यात् कारणमेवानुमितं भवति । धूमविज्ञाने स्वोपादानं**[2] **पूर्वकं विज्ञानमग्निनिर्भासजननसमर्थमनुमापयताऽर्थतो भाव्यग्निनिर्भास एवानुमितो भवति, धूमनि-**

( स्वो० व्या० )

अतिप्रसङ्गव्यावृत्तिमाह–**इति**–एवं **लिङ्गभूतधूमनिर्भासस्य पूर्वभाव्यनग्निनिर्भासादपि विशिष्टात्**–सन्तानपरिणामेन तज्जननसमर्थात्[3] **उत्पत्तिः सफलैव**–सप्रयोजनैव । एतद्भावनायैवाह–**तथाही**त्यादि । तथाहीति पूर्ववत् । **यदाप्यनग्निनिर्भासानन्तरं** क्वचित् **धूमनिर्भासः संवेद्यते तदापि**–तस्मिन्नपि काले **अग्निनिर्भासजननसमर्थमालयाख्यमेव विज्ञानं**–चित्रप्रवृत्तिविज्ञानकारणं **धूमनिर्भासहेतुः** । यस्मादेवं **तस्मात् सन्तानपरिणामेनाग्निनिर्भासजननसमर्थात्**[4] कुत इत्याह–**विज्ञानसन्तानात्** सकाशात् । किमित्याह–**उत्पन्नो धूमनिर्भासः कारणभूतस्य** सामान्येन **विज्ञानसन्तानस्य** । किमित्याह–**अग्निनिर्भासजननसामर्थ्यमनुमापयति । एवं च** किं सिद्धं भवतीत्याह–**कार्यात् कारणमेवानुमितं भवति** । कथमूर्ध्वमग्निनिर्भासप्राप्तिरित्येतदाह **धूमविज्ञाने**त्यादिना । धूमविज्ञानेनाधिकृतेन **स्वोपादानं**–स्वकारणभूतं किमित्याह–**पूर्वकं विज्ञानं** सामान्येन **अग्निनिर्भासजननसमर्थं** सन्तानपरिणामेनैव **अनुमापयता** सता**ऽर्थतः**[5]–सामर्थ्येन[6] । किमित्याह–**भाव्यग्निनिर्भासः**

( विवरणम् )

(१२) **अतिप्रसङ्गव्यावृत्तिमाहे**ति । बाह्यधूमाभावे किमिति सर्वज्ञानानन्तरं धूमप्रतिभासो न भवतीत्येवंरूपो योऽतिप्रसङ्गस्तस्य व्यावृत्तिमाह ॥

(१२-१३) **पूर्वभाव्यनग्निनिर्भासादि**ति । पूर्वभाव्यनग्निनिर्भासादिति पूर्वभावी–धूमप्रतिभासप्राक्कालभावी स चासावनग्निनिर्भासश्च पूर्वभाव्यनग्निनिर्भासस्तस्मात् ॥

(१३) **तज्जननसमर्थादि**ति । अग्निप्रतिभासजननने[7] सहि(?मर्थात्) ॥

१ 'तथाप्यग्नि०' इति क–पाठः । २ 'स्वोपादानपूर्वकं' इति ग–पाठः । ३ 'समर्थनात्' इति क–पाठः । ४ 'समर्थनात् कुतः' इति क–पाठः । ५ 'यतः सतोऽर्थतः' इति ङ–पाठः । ६ 'सामर्थ्यं न किमित्याह' इति क–पाठः । ७ 'जनसहिता । कारण०' इति ख–पाठः ।

( मूलम् )

**भासस्य कारणभूतो ज्ञानसन्तान उत्तरोत्तरक्षणपरिणामेन अग्निनिर्भासस्य हेतुरित्येवमनुमानात् ॥**

**एवं चार्थक्रियार्थिनोऽपि प्रवृत्तिरविरुद्धा, प्रतिबन्धकाभावे दाहपाकादिनिर्भासहेतुरग्निनिर्भासो भविष्यति अत्र इत्येवमभिप्रायस्य प्रवृत्तेरिति । अत्रोच्यते–यत्किञ्चिदेतत्, उपपत्तिविरोधात्, लिङ्गभूतधूमनिर्भासस्य अनग्निनिर्भासान्तरादप्युत्पत्तौ अग्निनिर्भासजन्यत्वनियमाभावात्, अग्निनिर्भासजन्यस्वभावस्य सकृदप्यन्यतोऽभावात्, भावे तत्स्वभावत्वहानिः ॥**

---

( स्वो० व्या० )

**एवानुमितो भवति** । एवमूर्द्धमप्यग्निनिर्भासप्राप्तिः कार्याच्च र(?)कारणानुमानं **धूमनिर्भासस्य कारणभूतो विज्ञानसन्तान उत्तरोत्तरक्षणपरिणामेनाग्निनिर्भासस्य हेतुरित्येवमनुमानात्**, कारणधर्मानुमानादित्यर्थः ॥

**एवं** चेत्यादि । एवं च–कारणधर्मानुमानत एव **अर्थक्रियार्थिनोऽपि**–पुरुषस्य **प्रवृत्तिरविरुद्धा** । कथमित्याह–**प्रतिबन्धकाभावे दाहपाकादिनिर्भासहेतुः अग्निनिर्भासो भविष्यत्यत्र इत्येवमभिप्रायस्य**–प्रमातुः **प्रवृत्तेरिति** । एतदाशङ्क्याह–**अत्रोच्यते–यत्किञ्चिदेतत्**–असारमनन्तरोक्तम् । कुत इत्याह–**उपपत्तिविरोधात्** । एनमेवाह **लिङ्गभूते**त्यादिना । लिङ्गभूतधूम**निर्भासस्य अनग्निनिर्भासान्तरादप्युत्पत्तौ** सत्याम् । किमित्याह–**अग्निनिर्भासस्य जन्यत्वनियमाभावात्** । अभावश्च **अग्निनिर्भासजन्यस्वभावस्य** धूमनिर्भासस्य **सकृदपि**–एकमपि वारं **अन्यतः**–प्रतिभासान्तरात् **अभावात्** । **भावे**ऽन्यतः किमित्याह–**तत्स्वभावत्वहानिः**–अग्निनिर्भासजन्यस्वभावत्वहानिः प्रस्तुतधर्मनिर्भासस्य ॥

---

( विवरणम् )

(१४) **कारणधर्मानुमानादिति** । धूमप्रतिभासस्य यः कारणभूतः प्राच्यविज्ञानसन्तानस्तस्यायं धूमो यदुत सन्तानपरिणामेन पावकप्रतिभासं जनयिष्यतीति ततः कारणधर्मस्यानुमानं कारणधर्मानुमानं तस्मात् ॥

---

१ 'भावहानि.' इति ग–पाठ. । २ 'अनग्नि०' इति च–पाठ ।

(मूलम्)

**एवं च शक्रमूर्ध्नोऽपि तद्भावाविरोधः[1], तस्यानग्निनिर्भासवदनग्नेरपि धूमजननस्वभावत्वात्। अनग्निनिर्भासोऽग्निनिर्भासजननसमर्थ इति चेत्, न, ततो धूमनिर्भासभावविरोधात्। नानन्तरमेव, अपि तु पारम्पर्येणेत्यविरोध इति चेत्, कुतः किं न परम्परयेत्यसमाधिरेषः। व्यवहारकालभाव्यत्र पारम्पर्यं न दीर्घतरमिति चेत्, शक्रमूर्ध्नोऽप्यग्निभावे सम्भवत्येवैतत्, कथं पुनरेतदेवमिति स्पष्टमभिधीयतामिति चेत्, तद्विकारतदन्याग्निनिर्भासोपपत्तेरुक्तमेवेति। न**

(स्वो० व्या०)

**एवं च** कृत्वा **शक्रमूर्ध्नोऽपि** सकाशात् प्रतिभासरूपात् **तद्भावाविरोधः**-धूमप्रतिभासभावाविरोधः। कुत इत्याह-**तस्य**-शक्रमूर्ध्नो**ऽनग्निनिर्भासवदि**ति निदर्शनम्, **अनग्नेरपि धूमजननस्वभावत्वा**दिति। **अनग्निनिर्भासो**ऽधिकृतः **अग्निनिर्भासजननसमर्थः**। **इति चेत्**, एतदाशङ्क्याह-**न, ततः**-अनग्निनिर्भासाद् **धूमनिर्भासभावविरोधात्** अनग्निनिर्भासजननसामर्थ्येन[2] इति भावः। **नान्तरमेवा**नग्निनिर्भासः अनग्निनिर्भासजननसमर्थः; **अपि तु पारम्पर्येण** सन्तानपरिणामत **इत्यविरोधः**। **इति चेत्**, एतदाशङ्क्याह-**कुतः किं न परम्परया**-संसारानादितया **इत्यसमाधिरेषः**। **व्यवहारकालभाव्यत्र पारम्पर्यं** गृह्यते, **न दीर्घतरं**-संसारानादिताख्यम्। **इति चेत्**, एतदाशङ्क्याह-**शक्रमूर्ध्नो**ऽप्यधिकृतात् **अग्निभावे** सति **सम्भवत्येवैतद्**-व्यवहारकालभावि पारम्पर्यम्। **कथं पुनरेतत्**-अधिकृत**मेवमिति स्पष्टमभिधीयताम्**। **इति**

(विवरणम्)

(११) **शक्रमूर्ध्नोऽपीति**। वल्मीकात्॥

(१२-१३) **अनग्निनिर्भासवदिति निदर्शनमि**ति। यथाहि प्रयोगकाले प्राच्यात् अनग्निरूपात् प्रतिभासाद्-धूमप्रतिभासाद् धूमप्रतिभासः समजनि, एवं शक्रमूर्ध्नोऽपि भवतु, तस्याप्यनग्नित्वात्॥

(१३) **अनग्नेरपीति**। अनग्नेरपि-पावकविलक्षणस्यापि सतः शक्रमूर्ध्नः॥

(१५) **अनग्निनिर्भासजननसामर्थ्येने**ति। अग्निनिर्भासजनने समर्थोऽग्निनिर्भासजननसमर्थः, तस्य भावोऽग्निनिर्भासजननसामर्थ्यं तेन। यद्यधिकृतोऽनग्निनिर्भासजननसमर्थस्तदा कथं ततो धूमप्रतिभासः प्रादुःष्यादिति?॥

१ 'तद्भावानिरोधः' इति ग-पाठः। २ 'जननसमर्थस्तदा सामर्थ्येनेति' ति क-पाठः।

( मूलम् )

**शक्रमूर्धप्रतिभासजो धूमप्रतिभास एव । किं न तथासंवेद्यमानोऽपि? तत्त्वतो भ्रान्तिसंवेदनात् । किमन्यस्य तत्संवेदनादधिकं रूपम्? ननु विशिष्टहेतुजन्यत्वम् । का पुनर्हेतोर्विशिष्टता? अग्निप्रतिभासजननसामर्थ्यम् । न हि न तत् तथा शक्रमूर्धप्रतिभासस्यापीत्युक्तम् । न च तत्र नियमेनेति वक्तुं युक्तम्, इतरस्या(?त्रा)पि तुल्यत्वात् । न हि प्रतिभासान्तरादपि धूमप्रतिभासोत्पत्तौ नियम-**

( स्वो० व्या० )

**चेत्**, एतदाशङ्क्याह–**तद्विकारतदन्याग्निनिर्भासोपपत्तेः**–शक्रमूर्धविकारात् तदन्याग्निनिर्भासोपपत्तेः कारणात् **उक्तमेवेति**–अभिहितमेवेति । एतदुक्तं भवति–शक्रमूर्ध्नोऽपि धूमवत् तदन्याग्निनिर्भासोऽपि क्वचिद् भवत्येव । आह–**न शक्रमूर्धप्रतिभासजो धूमप्रतिभास एव**, तदाभासत्वादित्यभिप्रायः । अत्रोत्तरम्–**किं न तथा**–धूमप्रतिभासतया **संवेद्यमानोऽपि?** । आह–**तत्त्वतः**–परमार्थेन **भ्रान्तिसंवेदनात्** नेति । अत्रोत्तरम्–**किमन्यस्य**–अभ्रान्तस्य **तत्संवेदनाधिकं**–धूमप्रतिभासवेदनातिरिक्तं **रूपम्?** । आह–**ननु विशिष्टहेतुजन्यत्वम**धिकं रूपमित्यत्रोच्यते । **का पुनर्हेतोः** प्रस्तुतस्य **विशिष्टता?** । आह–**अग्निप्रतिभासजननसामर्थ्यं** विशिष्टता इह समाधिः । **न हि न तत्**–अग्निप्रतिभासजननसामर्थ्यं **तथा**–क्वचित् तद्भावेन **शक्रमूर्धप्रतिभासस्यापि** । किं तर्हि? अस्त्येव **इत्युक्तम्** । इहैवाभ्युच्चयमाह **न** चेत्यादिना । **न च–न तत्र**–शक्रमूर्धप्रतिभासे **नियमेन** अधिकृतसामर्थ्य**मिति**–[२]एवं **वक्तुं युक्तम्** । कुत इत्याह–**इतरत्रापि**–अभिप्रेतहेतौ **तुल्यत्वात्** कारणात् । एतद्भावनायाह–**न ही**त्यादि । न हि **प्रतिभासान्तरादपि** परहेतुत्वाभिमताद् **धूमप्रतिभासो-**

( विवरणम् )

(१०) **शक्रमूर्धविकारादि**ति । (११) **तदन्याग्निनिर्भासोपपत्तेरि**ति । शक्रमूर्ध्नो विकारस्तस्मादनन्तरं तदन्यस्य–केवलधूमावलोककप्रमातु[३]र्विलक्षणस्य प्रमातुरग्निनिर्भासोपपत्तेः । तदयमभिप्रायः–कोऽपि प्रमाता शक्रमूर्ध्नोऽनन्तरं धूमं पश्यति, तदनु चान्यत् किञ्चित् । अन्यस्तु प्रमाता प्रथमतः शक्रमूर्द्धानं वेदयते, तदनु तद्विकारं धूमनिर्भासम् । ततश्च तत्रैव प्रदेशे प्रस्तावायातमनग्निनिर्भासं वेदयते इत्यस्ति शक्रमूर्ध्नः परम्परयाऽग्निनिर्भासजननसामर्थ्यमिति ॥

१ 'भ्रान्त सवेदनात्' इति ङ–पाठ । २ 'एव युक्तः कुत' इति ङ–पाठ । ३ 'विलक्षप्रमातु०' इति ख–पाठ ।

( मूलम् )

**तोऽग्निनिर्भासः, विध्यापितादौ क्वचिदसम्भवात्। न च प्रतिबन्धकाभावविशेषणान्न तुल्यत्वमिति युक्तं वचः, अस्येतरत्रापि वक्तुं शक्यत्वात्। तथाहि–शक्रमूर्द्धप्रतिभासादपि धूमप्रति[1]भासोत्पत्तौ प्रतिबन्धकाभावे सति उक्तवद् भवत्येवाग्निप्रतिभासः, तद्विकारा[2]दग्न्यन्तराभवनस्यैव प्रतिबन्धकत्वात्। प्रतिबन्धग्रहणकाले न शक्र[3]मूर्द्ध[4]प्रतिभासेन धूमप्रतिभासस्य ग्रहणमिति चेत्, समानमेतदनग्निप्रतिभासतस्तद्भावे, तत्प्रतिभासान्तरेण लोके तथाऽदर्शनात्,**

( स्वो० व्या० )

**त्पत्तौ** सत्यां **नियमतः**–अवश्यन्तया **अग्निप्रतिभासः**। कथं न हीत्याह–**विध्यापितादौ क्वचित्**–दैवेन **असम्भवात्** अग्निप्रतिभासस्य। **न** चेत्यादि। न च **प्रतिबन्धकाभावविशेषणात्** असति प्रतिबन्धक इत्यस्मात् **न तुल्यत्वमिति**–एवं **युक्तं वचः**। कुतो न युक्तमित्याह–**अस्य**–वचस **इतरत्रापि**–प्रस्तुतप्रतिभासान्तरे **वक्तुं शक्यत्वात्**। एतदेव भावयति **तथाही**त्यादिना। तथाहि–**शक्रमूर्द्धप्रतिभासादपि** प्रक्रान्ताद् **धूमप्रतिभासोत्पत्तौ** सत्यां **प्रतिबन्धकाभावे**ऽपि **सति** असति प्रतिबन्ध इति **उक्तवत्**–यथोक्तं तथा **भवत्येवाग्निप्रतिभासो** न भवति। कुत इत्याह–**तद्विकारात्**, प्रक्रमात् शक्रमूर्द्धविकारात्, **अग्न्यन्तराभवनस्यैव प्रतिबन्धकत्वात्**। **प्रतिबन्धे**त्यादि। प्रतिबन्धग्रहणकाले लिङ्गलिङ्गिनोर्न **शक्रमूर्द्धप्रतिभासेन** सह **धूमप्रतिभासस्य** लिङ्गभूतस्य **ग्रहणम्**। **इति चेत्**, एतदाशङ्क्याह–**समानमेतत्**–अनन्तरं चोदितं सामान्येन **अनग्निप्रतिभासतः** सकाशात् **तद्भावे**–धूमप्रतिभासभावे **तत्प्रतिभासान्तरेण**–अनग्निप्रतिभासान्तरेण धूमप्रतिभासकारणतयेष्टेन सहेति भावः।

( विवरणम् )

(१८-१९) **शक्रमूर्द्धविकारात् अग्न्यन्तराभवनस्यैव प्रतिबन्धकत्वादिति**। शक्रमूर्द्धविकारादनन्तरं यदग्न्यन्तरस्याभवनम्–अग्निविशेषस्याभवनं तस्यैव प्रतिबन्धकत्वात्। परस्य ह्ययमाशयः–प्रतिबन्धकाभावे विवक्षितानग्निनिर्भासाद् व्यवहारकालभाविपारम्पर्येण भवत्येवाग्निनिर्भासः। आचार्योऽप्येवमाह–प्रतिबन्धकाभावे सति शक्रमूर्ध्नोऽपि परम्परया भवत्येवानलप्रतिभासः। प्रतिबन्धनं चैतदेवात्र यच्छक्रमूर्द्धविकारादनन्तरं क्वचिदग्निप्रतिभासविशेषस्याभवनमिति ॥

१ 'भासोत्पत्तेः प्रति०' इति ग–पाठः। २ 'दग्न्यन्तरस्याभवन०' इति ग–पाठः। ३ 'मूर्ध्नः प्रति०' इति क–पाठः। ४ 'प्रतिभासस्य ग्रहण०' इति ग–पाठः।

( मूलम् )

**अन्यथाऽयोगाद् व्यवहारासिद्धेरिति । अस्तु वाऽग्निप्रतिभासजननसमर्थादेव प्रतिभासान्तरादस्य जन्म, तथापि ततस्तत्सामर्थ्यतो भाव्यग्निप्रतिभासानुमानात् कारणात् कार्यावसायप्रसङ्गः ॥**

**स्यादेतद् यतो धूमप्रतिभासस्ततोऽग्निप्रतिभासोऽपि । इति तत्त्वतो धूमप्रतिभासोऽग्निप्रतिभासेन सहैकसामग्र्यधीनस्ततोऽयं स्वकारणस्यैवाग्निप्रतिभासजननयोग्यतां [1]नाम धर्ममनुमापयति । इति**

( स्वो० व्या० )

कथमेतदेवमित्याह–**लोके तथाऽदर्शनात्**–तेन सह प्रतिबन्धग्रहणादर्शनात् । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथाऽयोगात्** । एव च भवन्नीत्यैव **व्यवहारासिद्धेरिति** । अभ्युच्चयमाह **अस्तु** वेत्यादिना । अस्तु वा–भवतु वा **अग्निप्रतिभासजननसमर्थादेव प्रतिभासान्तरात्**–पराभिप्रेतात् **अस्य जन्म,** प्रक्रमाद् धूमप्रतिभासस्य, **तथापि**–एवमपि सति **ततः**–धूमप्रतिभासात् **तत्**[3]**सामर्थ्यतः**–प्रस्तुतप्रतिभासान्तरसामर्थ्येन **भाव्यग्निप्रतिभासानुमानात्** कारणात् । किमित्याह–**कारणात्** सकाशात् **कार्यावसायप्रसङ्गः** । एवं च लिङ्गसङ्ख्यानियमो विरुध्यत इति ॥

**स्यादेतदित्यादि** । स्यादेतत्–अथैवं मन्यसे **यतो धूमप्रतिभासः** प्रतिभासान्तरात् **ततोऽग्निप्रतिभासोऽपि** भावी । **इति**–एवं **तत्त्वतः**–परमार्थेन **धूमप्रतिभासोऽग्निप्रतिभासेन सह** किमित्याह–**एकसामग्र्यधीनो** वर्तते **ततोऽयं**–धूमप्रतिभासः **स्वकारणस्यैव**–प्रक्रान्तप्रतिभासान्तरस्य **अग्निप्रतिभासजननयोग्यतां नाम धर्ममनुमापयति,** तदव्यतिरिक्तत्वात् तस्य[2] ।

( विवरणम् )

(११) **अन्यथाऽयोगादिति** । अनग्निप्रतिभासेन सह धूमप्रतिभासस्य प्रतिबन्धग्रहणदर्शनेऽभ्युपगम्यमानेऽयोगात्–अघटनात् प्रतिबन्धस्यैव ॥

(१६-१७) **एवं च लिङ्गसङ्ख्यानियमो विरुध्यत** इति । भवतो हि मते त्रिरूपाणि च त्रीण्येव लिङ्गानि अनुपलब्धिः स्वभावः कार्यं चेति वचनान्नियतसङ्ख्यानियमस्त्रिरूप एव । यदा च कारणादनग्निनिर्भासरूपात् धूमप्रतिभासहेतोर्भाव्यग्निप्रतिभासरूपं कार्यमनुमीयते तदा आपद्यते कारणात् कार्यावसायः । एवं च कारणलिङ्गं चतुर्थं प्राप्नोति । तच्च प्रस्तुतसङ्ख्यानियमविरोधाधायकमिति ॥

१ 'नाम' इति पाठो न विद्यते क–प्रतौ । २ 'तस्य' इति ङ–पाठ. । ३ 'सामर्थ्यात् भाव्यग्नि०' इति ङ–पाठ. ।

( मूलम् )

कार्यादेव कारणानुमानम् । तद्योग्यताप्रतिपत्तिरेव च तत्त्वतः अग्निप्रतिभासप्रतिपत्तिः । इति न कारणात् कार्यानुमानापत्तिः । एतदप्यसत्, प्रतीतिबाधितत्वात् । न वै धूमप्रतिभासादुक्तलक्षणात् कारणप्रतिपत्तिः, तथाऽननुभवात्, तदुत्तरकालमेव क्वचित् अग्निप्रतिभासानुभूतेः । न सा हेतुप्रतिभासस्य तथायोग्यतां विहाय इति चेत्, अस्त्येतत्, किन्त्वसौ नार्वाग्दर्शिना तथाऽवगन्तुं पार्यते, तथाप्रतीतेः, अवगमेऽपि बलात् कारणात् कार्यावसायप्रसङ्गः, तावत्क्षणव्यवहिताग्निप्रतिभासावधित्वात् तस्या इति । 'एवं चार्थक्रियार्थिनोऽपि प्रवृत्तिरविरुद्धा, प्रतिबन्धकाभावे दाहपाकादिनिर्भासहेतुरग्निप्रतिभासो भविष्यत्यत्रेत्येवमभिप्रायस्य प्रवृत्तेरिति'[1] अपि वचनमात्रमेव, उक्तवत् कार्यानुमानव्यतिरेकेण तदप्रवृत्तेः । तथा

( स्वो० व्या० )

इति—एवं कार्यादेव कारणानुमानम् । तत्त्वतः तद्योग्यताप्रतिपत्तिरेव च—विवक्षितकारणयोग्यताप्रतिपत्तिः । इति—एवं न कारणात् कार्यानुमानापत्तिः इति । एवं पराभिप्रायमाशङ्क्याह—एतदप्यसत्—अशोभनम् । कुत इत्याह—प्रतीतिबाधितत्वात् । एतदेवाह—न वै धूमप्रतिभासात्—अधिकृतात् उक्तलक्षणयोग्यतासचिवा(त्) कारणप्रतिपत्तिः । कुत इत्याह—तथाऽननुभवात् । न हि तदा तद्योग्यतानुभवः, अग्निप्रतिभासयोग्यताऽनुभवे हि तदैवाग्निप्रतिभासापत्तेरिति भावनीयम् । तदुत्तरेत्यादि । तदुत्तरकालमेव—धूमप्रतिभासोत्तरकालमेव योग्यताप्रतीतिव्यवधानमन्तरेण क्वचिदग्निप्रतिभासानुभूतेः कारणात् । न सा—अनुभूतिः हेतुप्रतिभासस्य—अधिकृतस्य तथा—तेन प्रकारेण योग्यतां विहाय । इति चेत्, एतदाशङ्क्याह—अस्त्येतद् यदुक्तं भवता, किन्त्वसौ—योग्यता नार्वाग्दर्शिना—पृथग्जनेन प्रमात्रा तथा—तेन प्रकारेण अवगन्तुं पार्यते । कुत इत्याह—तथाप्रतीतेः कारणात् । अवगमेऽपि कथञ्चिद् योग्यताया बलात् कारणात् कार्यावसायप्रसङ्गः । कथमित्याह—तावत्क्षणव्यवहिताग्निप्रतिभासावधित्वात् तस्याः—योग्यताया इति । एवं चार्थक्रियार्थिनोऽपि—प्रमातुः प्रवृत्तिरविरुद्धा । कथमित्याह—प्रतिबन्धकाभावे सति दाहपाकादिनिर्भासहेतुरग्निप्रतिभासो भविष्यत्यत्रेत्येवमभिप्रायस्य—प्रमातुः प्रवृत्तेरित्यपि[2] पूर्वपक्षोदितं[3] वचनमात्रमेव, निरर्थकमित्यर्थः । कुत

१ द्रष्टव्यं १०३तमं पृष्ठम् । २ 'प्रवृत्तिरित्यपि' इति ङ-पाठः । ३ १०३तमे पृष्ठे प्रोक्तम् ।

( मूलम् )

**कार्यानुमानसिद्धौ च तदनन्तरप्रतिभासस्यापि जलौदनादिरूपस्य तत एवानुमानप्रसङ्गः, प्रस्तुतधूमप्रतिभासहेतोस्तद्योग्यताया अपि भावात्, अभावे तद्भावविरोधात् सन्तानोच्छेदापत्तेः, तदभ्युपगमे च प्रतीतिबाधा। न तत्रार्थितादय इत्यप्रसङ्ग इति चेत्, वस्तुस्थितिस्तावदेवम्, अर्थितादयस्त्वितरत्रापि चिन्त्याः, बाह्याभावे स्वसंवेद्यक्षणिकज्ञानमात्रपक्षे तेषां दुर्घटत्वात्। किं वा न तेऽपि? अज्ञानमत्रापराध्यति। यदा पुनरुक्तवत् तद्योग्यतावगमसम्भवः**

( स्वो० व्या० )

इत्याह–**उक्तवत्**–यथोक्तं तथा **कार्यानुमानव्यतिरेकेण तदप्रवृत्तेः**–अर्थक्रियार्थ्यप्रवृत्तेः। अभ्युच्चयमाह **तथे**त्यादिना। तथा **कार्यानुमानसिद्धौ च** सत्यां **तदनन्तरप्रतिभासस्यापि**–अग्निप्रतिभासान्तरप्रतिभासस्यापि **जलौदनादिरूपस्य** चित्रस्य **तत एव**, धूमप्रतिभासादिति[1] प्रक्रमः। किमित्याह–**अनुमानप्रसङ्गः**। कथमित्याह–**प्रस्तुतधूमप्रतिभासहेतोः** प्रतिभासान्तरस्य **तद्योग्यताया अपि**–जलौदनादिरूपप्रतिभासयोग्यताया अपि **भावात्**। तदभावेऽग्निप्रतिभासानन्तरं कथं क्वचिज्जलौदनादिप्रतिभास इति भावनीयम्। अत एवाह–**अभावे तद्भावविरोधात्** अभावेऽधिकृतयोग्यताया तद्भावविरोधात्–जलौदनादिरूपप्रतिभासविरोधात् तथा **सन्तानोच्छेदापत्तेः** अपराभावेन **अभ्युपगमे च** सन्तानोच्छेदस्य **प्रतीतिबाधा**। तदूर्ध्वमपि जलौदनादिरूपप्रतिभासप्रतीतेः। **न तत्रे**त्यादि। तत्र–जलौदनादिरूपे प्रतिभासान्तरे **अर्थितादय इति** कृत्वा **अप्रसङ्गः। इति चेत्**, एतदाशङ्क्याह–**वस्तुस्थितिस्तावदेवं** यथोक्ता, **अर्थितादयास्त्वितरत्रापि**–अग्निप्रतिभासादौ **चिन्त्याः**। कथमित्याह–**बाह्याभावे** सति **स्वसंवेद्यक्षणिकज्ञानमात्रपक्षे तेषाम्**–अर्थितादीनां **दुर्घटत्वात्। किं वा न तेऽपि**–अर्थितादयः?। **अज्ञानमत्रापराध्यति** योग्यतायाः। **यदा पुनरुक्तवत् तद्-**

( विवरणम् )

(१९) **अपराभावेने**ति। अपरस्य–जलौदनादेः प्रतिभासस्याभावेन। अयमभिप्रायः–प्रतिभासाना निर्मूलोच्छिन्नत्वात्॥

(२४-२५) **किं वा न तेऽपि–अर्थितादय** इति। जलौदनादिविषया अपि अर्थितादयः कि वा न भवन्ति? भवन्त्येव जैनमते कस्यचित् प्रमातुरित्यर्थः॥ यतः (२५) **अज्ञानमत्रापराध्यति योग्यताया** इति। अज्ञाताया हि आद्यविज्ञानलक्षणस्य योग्यतायाम[2]र्थितादयो जलादिगोचरा न भवन्ति॥

१ 'भासादिति प्रति प्रक्रम' इति ङ–पाठ। २ 'मर्थितायामर्थितादयो' इति ख–पाठ.।

## ( मूलम् )

**तदा तेऽपि तदर्थितया पुंसामयत्नोपनता इति प्रवर्तन्त एव, सातबहुलत्वाल्लोकस्य। न च कारणात् कार्यानुमानमपि न युक्तियुक्तमेव, प्रतिपच्चन्द्रेण '[1]पूर्णिमाचन्द्रानुमानसिद्धेः, वज्रासनाद् विशिष्टज्ञानानुमानवद् व्यभिचारासम्भवात् । एवं च सर्वमसमञ्जसमिति**

## ( स्वो० व्या० )

**योग्यतावगमसम्भवस्तदा तेऽपि**–अर्थितादयः **तदर्थितया** कारणेन '[2]**पुंसामयत्नोपनता इति** कृत्वा **प्रवर्तन्त** एव। कुत इत्याह–**सातबहुलत्वात्**–सुखबहुलत्वात् कारणात् **लोकस्य** । तथाहि–प्रासङ्गिकमर्थित्वं भवत्यपरसम्पादनादि च

## ( विवरणम् )

(८) **तदर्थितयेति** । जलौदनादनर्थितया ॥

(१०) **प्रासङ्गिकमर्थित्वं भवत्यपरसम्पादनादि चेति** । अर्थित्वं प्रासङ्गिकं भवति, अपरसम्पादनादि च प्रासङ्गिकं भवतीत्यर्थः । तत्र पा[3]वकार्थिनः प्रमातुः जलौदनादिविषयमर्थित्वं प्रासङ्गिकं तथा तस्यैवापरस्य जलौदनादेर्यत् सम्पादनादि-निकटीकरणस्थालीनिक्षेपचुल्लीमस्तकारोपणादि तदपि प्रासङ्गिकम् । पावके समासादिते सति सर्वमेतत् प्रसङ्गत एव सिध्यतीति भावः ॥ क्वचित् (१०) **अपरसम्पादनादेवेति** पाठो दृश्यते । तत्र प्रासङ्गिकमर्थित्वं भवतीति स[4](?सा)[मा]ध्येऽयं हेतुरुपन्यस्तः । अस्य चायमर्थः–पावकार्थिनः प्रमातुः जलौदनादिविषयमर्थित्वं प्रासङ्गिकं भवति, पावकेन शीतापनोदव्यतिरिक्तस्यापरस्याप्योदनादेः सम्पादनात् ॥

अत्रान्तरे वृत्तिकृता सूत्रखण्डमेकं न व्याख्यातम् । तच्च केषुचिदेव सूत्रपुस्तकेषु दृश्यते यथा (४-६) **न च कारणात् कार्यानुमानमपि न युक्तियुक्तमेव, प्रतिपच्चन्द्रेण पूर्णिमाचन्द्रानुमानसिद्धेः, वज्रासनाद् विशिष्टज्ञानानुमानवद् व्यभिचारासम्भवादिति** । अथास्यार्थः किञ्चित् प्र[5]तार्यते । परो हि आचार्येण कारणात् कार्यानुमाने प्रसञ्जिते तन्निराकरणं कृतवान् । तद्दूषणाय च सूरिराह–न च–नैव कारणात् कार्यानुमानमपि न युक्तियुक्तमेव । कुत इत्याह–प्रतिपच्चन्द्रेण–लोकप्रतीतेन पूर्णिमाचन्द्रस्य–लोकप्रतीतस्यैव अनुमानसिद्धेः । कारणादनु[6]मीयते हि प्रति(?)व्यभिचारस्यासम्भवात् । अयमभिप्रायः–वज्रासने प्रकर्षप्राप्ते सति नियमाद् दिव्यज्ञानमुत्पद्यत इति भवतां कृतान्तः । ततो यथा वज्रासनादनुमीयमानेन व्यभिचारसम्भव एवं प्रति-

१ 'पौर्णिमा०' इति ग–पाठः । २ 'पुंसापयत्नोपनता' इति क–पाठः । ३ 'पावकार्थितः' इति क–पाठः । ४ 'सोध्योयं हेतु०' इति ख–पाठः । ५ 'प्रतायते' इति क–पाठः । ६ 'मीयते हि प्रतिपच्चन्द्राद्' इति ङ–पाठः ।

(मूलम्)

**परिभाव्यतामेतत्। बाह्यान्वयिचित्रवस्तुभावे चायमदोषः, लिङ्गप्रतिपत्तिकाले लिङ्गिन एव सत्त्वात्, लिङ्गस्यापि वैशिष्ट्योपपत्तेः, अग्निजन्यस्वभावत्वस्यापि धूमे भावात्, तदाभासे चाभावात्, अन्यथा तत्तदनुपपत्तेः शक्रमूर्द्धादेरप्यग्नित्वप्रसङ्गादिति चित्रस्वभावता धूमस्य, धूममात्रप्रतिभासजननस्वभावाधिकस्वभावभावात्, अन्यथा तन्मात्रप्रतिभासाविशेषात्, तन्मात्रादुत्पत्तेः, तत्तदाभासावसायाभाव इति। अस्ति चायमाविद्वदङ्गनादिसिद्धः**

(स्वो० व्या०)

इति। **एवं चे**त्यादि। एवं च कृत्वा **सर्वमसमञ्जसमिति परिभाव्यतामेतत्**—अनन्तरोदितमिति। **बाह्ये**त्यादि। **बाह्यान्वयिचित्रवस्तुभावे** सति **अयम्**—अनन्तरोदितः **अदोषः**। कथमित्याह—**लिङ्गप्रतिपत्तिकाले** सति **लिङ्गिन एव सत्त्वात्** अन्वयित्वेन तथा **लिङ्गस्यापि**—धूमादेः **वैशिष्ट्योपपत्तेः**। कथमित्याह—**अग्निजन्यस्वभावत्वस्यापि धूमे भावात्** चित्रवस्तुभावेन, **तदाभासे च**—धूमाभासे च शक्रमूर्द्धादिप्रभवे**ऽभावात्** अग्निजन्यस्वभावत्वस्य। इत्थं चैतदङ्गीकर्त्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे **तत्तदनुपपत्तेः**, तस्य—तदाभासस्य तदनुपपत्तेः—तदाभासत्वानुपपत्तेः अग्निजन्यस्वभावत्वस्य भावेन। किमित्याह—**शक्रमूर्द्धादेरप्यग्नित्वप्रसङ्गात्** अग्निजन्यस्वभावधूमजनकत्वेन। न चैतदेवमिति **चित्रस्वभावता धूमस्य**। इहैवोपपत्तिमाह—**धूममात्रप्रतिभासजननस्वभावाधिकस्वभावभावात्**। इत्थं चैतदङ्गीकर्त्तव्यमित्याह—**अन्यथा तन्मात्रप्रतिभासाविशेषात्**—धूममात्रप्रतिभासाविशेषात्। अविशेषश्च **तन्मात्रात्**—धूममात्रादुत्पत्तेः, **तत्तदाभासावसायाभावः**—धूमधूमा-

(विवरणम्)

पचन्द्राद् भविष्यन् पौर्णिमाशशधर इति। न च वाच्यं व्यभिचारोऽत्र भविष्यति, यतो वज्रासनात्—प्रधानाद् योगिप्रतीततदासनविशेषात् सकाशाद् विशिष्टज्ञानमनुमानवद्—दिव्यज्ञानानुमान इव व्यभिचारस्यासम्भवात्। अयमभिप्रायः—वज्रासने प्रकर्षप्राप्ते सति नियमाद् दिव्यज्ञानमुत्पद्यत इति भवतां कृतान्तः। ततो यथा वज्रासनादनुमीयमानेन व्यभिचारसम्भवः, एवं प्रतिपचन्द्राद् पौर्णिमाशशधरानुमानेऽपि व्यभिचाराभाव एवेति ॥

(११) **सर्वमसमञ्जसमिति**। बाह्यार्थसद्भावसाधकमिदं सर्वमपि प्रागुक्तम्, अतो भवत्पक्षे सर्वमसमञ्जसं प्राप्तम्, अभ्युपगमस्य व्यवहारेण बाधितत्वात् ॥

१ 'सर्वं समञ्जस' इति क-पाठ.।

(मूलम्)

(तथाप्रतीतेः) विच्छिन्नार्थग्रहणस्वभाव[1]संवेदनवेदनाच्च । बाह्यार्थगोचरः, स्वनिवृत्त्यपरोत्पत्तिद्वयनिष्पादनैकस्वभाव[2]त्वेन च तच्चित्रतापत्त्या वस्त्वन्वयानुसारी फलवान् चित्रक्षयोपशमसम्भूतचित्रज्ञानसंवेद्य इति परिभाव्यतामेतत् ॥

आह–एवमपि तत्तदाभासविशेषो दुष्परिज्ञान एव, उभयत्र धूमवेदनात् । उच्यते–अस्ति तावदसौ, परिज्ञाने तु यत्नः कार्यो न

(स्वो० व्या०)

भासावसायाभाव इति । अस्ति चायं–तत्तदाभासावसायः आविद्वदङ्गनादिसिद्धः तथाप्रतीतेः विच्छिन्नार्थग्रहणस्वभावसंवेदनवेदनाच्च । अयं बाह्यार्थगोचरस्तथाप्रतीतेरेव तथा स्वनिवृत्त्यपरोत्पत्तिद्वयनिष्पादनैकस्वभावत्वेन च हेतुना तच्चित्रतापत्त्या कारणेन वस्त्वन्वयानुसारी फलवान् तदुभयभावत एव चित्रक्षयोपशमसम्भूतचित्रज्ञानसंवेद्य इति परिभाव्यतामेतत् सर्वमेवेति ॥

आह–एवमपि–यथोक्तं भवता तथापि तत्तदाभासविशेषः–धूमधूमाभासविशेषो दुष्परिज्ञान एव । कुत इत्याह–उभयत्र–तत्तदाभासे धूमवेदनात् । उच्यतेऽत्र समाधिः–अस्ति तावदसौ–तत्तदाभासविशेषः परिज्ञाने तु

(विवरणम्)

(१२) तथाप्रतीतेरेवेति । प्रतीयते हि [3]लोके बाह्यार्थरूपोऽग्नेर्जातो धूमो धूमत्वेन, वल्मीकोद्भवस्तु धूमाभासत्वेन ॥ भवतु नाम बाह्यार्थगोचरस्तत्तदाभासावसायः, परं वस्त्वन्वयानुसारी न भविष्यतीत्याह–(१२-१३) तथा स्वनिवृत्त्यपरोत्पत्तिद्वयनिष्पादनैकस्वभावत्वेन च हेतुना तच्चित्रतापत्त्या कारणेन वस्त्वन्वयानुसारीति । वस्तुनः–धूमादेरन्वयः कार्येऽनुगमो वा वस्त्वन्वयस्तमनुसरति–अनुयातीत्येवंशीलो वस्त्वन्वयानुसारी तत्तदाभासावसायः वस्तूनामन्वयं साक्षात् कुर्वाणस्तत्तदाभासावसायः प्रवर्त्तत इत्यर्थः । कया यो वस्त्वन्वय इत्याह–तच्चित्रतापत्त्या तस्य–वस्तुनश्चित्रतापत्त्या कारणेन । एषाऽपि कुत इत्याह–स्वनिवृत्तिश्च–आत्मनः कथञ्चिन्नाशः अपरोत्पत्तिश्च–कार्योत्पाद एतल्लक्षणं यद्[4] द्वयं तन्निष्पादन[5]एकः स्वभावो तत् तथा तस्य भावः–तत्त्वं तेन हेतुना । इदमुक्तं भवति–धूमादिवस्त्वात्मानं निवर्त्तयति कार्यं च जनयतीति चित्रस्वभावत्वाच्चास्यान्वयः, तदन्वयं च तत्तदाभासावसायोऽनुसरतीति ॥

१ 'संवेदनाच्च' इति ग–पाठः । २ 'भावत्वे च तच्चित्र०' इति ग–पाठः । ३ 'लोके बाह्यार्थसद्भावसाधकमिदं सर्वमपि प्रागुक्तम्, अतो भवत्पक्षे स तच्चित्रतापत्त्या' इति ख–पाठः ४ 'यत(?)द्वयं' इति ख–पाठः । ५ 'एतत् तदाभासावसायात् तथा तस्य' इति ख–पाठः ।

( मूलम् )

**अविवेचितं लिङ्गं लिङ्गिनं गमयति, न चायमसम्भवीति, कार्यकारणभावस्य सर्वत्र नियतत्वात्, अन्यथा तदनुपपत्तेः। एवमपि नो [1]दोषाभाव एव, अनग्नेर्धूमवदधूमाद् धूमज्ञानाविरोधादिति ॥**

**शक्रमूर्द्धनि धूमासिद्धेः अधूमान्न जातुचिद् धूमज्ञानमिति चेत्, न, बाष्पादौ भावात् तथालोकप्रतीतेः। तस्य तदाभासत्वे शक्र[2]मूर्द्धधूमेऽपि समानः प्रसङ्गः, उत्पातजत्वेन तस्याप्यधूमत्वात्। इति नियत एव कार्यकारणभावोऽभ्युपगन्तव्यः। तथा च सति बाष्पादौ तदितरविशेषपरिज्ञानवत् शक्रमूर्द्धधूमादावपि तत्सम्भवादुक्त-**

( स्वो० व्या० )

यत्नः **कार्यो** भवता। किमित्यत आह–**नाविवेचितं लिङ्गं लिङ्गिनं गमयति। न चायमसम्भवी** परिज्ञानयत्नः। कथमित्याह–**कार्यकारणभावस्य सर्वत्र नियतत्वात्, अन्यथा तदनुपपत्तेः**–कार्यकारणभावानुपपत्तेः। **एवमपि**, तदनियतत्वेऽपीत्यर्थः, **नः**–अस्माकं **दोषाभाव एव**। कथमित्याह–**अनग्नेः**–शक्रमूर्ध्नो **धूमवदिति** निदर्शन **अधूमात्** सकाशात् **धूमज्ञानाविरोधादिति** ॥

आह–**शक्रमूर्द्धनि धूमासिद्धेः** कारणादधूमात् सकाशात् **न जातुचित्**–न कदाचिद् **धूमज्ञानम्। इति चेत्**, एतदाशङ्क्याह–**न बाष्पादौ भावात्**, 'आदि'शब्दाद् विशिष्टरेण्वादिग्रहः, **तथा**–धूमतया **लोकप्रतीते**रिति। **तस्ये**त्यादि। तस्य–बाष्पादेः **तदाभासत्वे**–धूमाभासत्वे। किमित्याह–**शक्र[4]मूर्द्धधूमेऽपि समानः प्रसङ्गः**। सोऽपि धूमाभास एवेति **उत्पातजत्वेन** हेतुना **तस्यापि**–शक्रमूर्द्धजधूमस्य **अधूमत्वात्। इति**–एव **नियत एव कार्यकारणभावोऽभ्युपगन्तव्यः। तथा च सति**–एव च सति **बाष्पादौ त[3]दितरविशेषपरिज्ञानवत्**–धूमेतरविशेषपरिज्ञानवदिति निदर्शनम्, **शक्रमूर्द्धधूमादावपि** अधिकृते **तत्सम्भवात्**–तदितरविशेषपरिज्ञानसम्भवात्। किमित्याह–**उक्तदोषाभावः**।

( विवरणम् )

(२१) **उत्पातजत्वेने**ति। शक्रमूर्द्धप्रभवो हि धूम उत्पातज एव, अरिष्टरूपत्वात् ॥

(२३-२४) **तदितरविशेषपरिज्ञानसम्भवा**दिति। तस्माद्–धूमादितरस्य–धूमाभासस्य सम्बन्धिनो विशेषस्य यत् परिज्ञान तस्य सम्भवात् ॥

१ 'दोषभाव.' इति ग–पाठ। २ 'मूर्वे वूमेऽपि' इति ङ–पाठ.। ३ 'तदपरविशेषपरिज्ञानवत्' इति ङ–पाठ। ४ 'मूर्द्धप्रभावो' इति ख–पाठ।

(मूलम्)

दोषाभावः । इति बाह्यभाव एव ज्ञापकस्थितिः, नान्तर्ज्ञेयभावे, उक्तवदयोगात् ॥

एतेन स्वभावानुपलब्ध्योरपि ज्ञापकत्वं व्युदस्तम्। न हि स्वभावाख्यमपि लिङ्गमप्राप्तबहिःसत्ताकमद्वयबोधमात्रतया ज्ञापकत्वाय [1]अलम्, ज्ञाप्यस्यातदात्मकत्वाच्च । न हि कृतकत्वादिज्ञानमनित्यत्वादिज्ञानात्मकम्, तथाऽननुभवात्, अनात्मभूतज्ञानान्तरगमकत्वे च स्वभावत्वहानिः । तद्धि कारणभूतं वा गम्येत कार्यभूतं वेत्युभयथाऽपि न युक्तियुक्तं स्वभावत्वम्, नियमतोऽभेदात्। एवं केवलभूतलादिज्ञानादपि घटाभावज्ञानादौ योजना कार्या। इति लिङ्गान्तरत्वाभावो भवन्नीत्या, तत्त्वतस्तथाऽननुभूतेरिति । एवं च यदिदमाशङ्क्य

(स्वो० व्या०)

इति-एवं बाह्यभाव एव सति ज्ञापकस्थितिः, नान्तर्ज्ञेयभावे । कुत इत्याह-उक्तवदयोगात् अन्तर्ज्ञेयवादे ज्ञापकस्थितेरिति ॥

एतेन-अनन्तरोदितेन स्वभावानुपलब्ध्योरपि हेत्वोः ज्ञापकत्वं व्युदस्तम्-अपाकृतम् । कथमित्याह-न हीत्यादि । न यस्मात् स्वभावाख्यमपि लिङ्गं कृतकत्वादिरूपमप्राप्तबहिःसत्ताकमद्वयबोधमात्रतया कारणेन ज्ञापकत्वायालम्, ज्ञाप्यस्यातदात्मकत्वाच्च । एतदेवाह न हीत्यादिना । न हि कृतकत्वादिज्ञानं अनित्यत्वादिज्ञानात्मकम् । कथं नेत्याह-तथाऽननुभवात्-कृतकत्वादिज्ञानस्यानित्यत्वादिज्ञानात्मकत्वेनाननुभवात् । अनात्मभूतज्ञानान्तरगमकत्वे च कृतकत्वादिज्ञानस्य स्वभावत्वहानिः । तद्धीत्यादि । तद् यस्मादनित्यत्वादिज्ञानं कारणभूतं वा गम्येत तेन कार्यभूतं वा। उभयथाऽपि-एवं न युक्तियुक्तं स्वभावत्वम् । कुत इत्याह-नियमतः अभेदादनयोः। एवं केवलभूतलादिज्ञानादपि सकाशाद् घटाभावज्ञानादौ [2]साध्ये योजना कार्या । इति-एवं लिङ्गान्तरत्वाभावो भवन्नीत्या-द्वयबोधमात्रतया तत्त्वतः-परमार्थेन तथा-[3]लिङ्गतया अननुभूतेरिति । एवं च

(विवरणम्)

(१४) बाह्यभाव एवेति । बाह्यार्थसद्भाव एवेत्यर्थः ॥

१ 'अलं न हि ज्ञाप्य०' इति क-पाठः । २ 'साध्ययोजना' इति क-पाठः । ३ 'लिङ्गलिङ्गितया' इति ङ-पाठः ।

( मूलम् )

"अनग्निजन्यो धूमः स्यात् तत् कार्यात् कारणे गतिः ।
न स्यात् कारणतायां वा कुत एकान्ततो गतिः ? ॥[1]
तत्रापि धूमाभासा धीः प्रबोधपटुवासनाम् ।
जनयेदग्निनिर्भासां धियमेव न पावकम् ॥[2]
तद्योग्यवासनागर्भ एवं धूमावभासिनीम् ।
व्यनक्ति चित्तसन्तानो धियं धूमोऽग्नितस्ततः ॥"[3]

इत्यादि वार्त्तिककारेणोक्तं तदुक्तिमात्रमेव, उक्तवदयोगादिति ॥

अन्यस्त्वाह-संव्यवहारार्थ[4]मनुमानलक्षणप्ररूपणम् । स च उक्तस्वरूपात् ततः सिद्ध्यत्येव, अन्यथा तदसिद्धेः; परमार्थतस्त्वद्वयं बोधमात्रं तत्त्वमिति नानुमानानुमेयव्यवस्था । एतदप्यसत्, विचाराक्षमत्वात् । तथाहि-कोऽयं संव्यवहारः ? अन्यतोऽन्यप्रतिपत्तिः ।

( स्वो० व्या० )

सति यदिदमाशङ्क्य अनग्निजन्यो धूमः स्यादित्यादि वार्त्तिककारेणोक्तं तदुक्तिमात्रमेवेति योगः । अनग्निजन्यो धूमः स्यात् प्रतिभासान्तरोत्पादेन तत्-तस्मात् कार्यात्-धूमात् कारणे गतिर्न स्यादग्नौ कारणतायां वा धूमस्याग्नौ तदुत्तरकालं तत्प्रतिभासभावतः कुत एकान्ततो गतिः, धूमादग्नेः नावश्यं कारणानि तद्वन्ति भवन्ति इति कृत्वा । इहोत्तरम्-तत्रापीत्यादि । तत्रापि-व्यतिकरे धूमाभासा धीः प्रबोधपटुवासनां विशिष्टां जनयेदग्निनिर्भासां धियमेव, न पावकं-नाग्निम् । एवमपि कथमग्नेर्धूम इत्याह-तद्योग्यवासनागर्भः-अग्निनिर्भासधीयोग्यवासनागर्भ. एवं धूमावभासिनीं धियं व्यनक्ति चित्तसन्तानः इति तैतः[5]-सन्तानापेक्षया धूमो[6]ऽग्नित इत्युच्यते । इत्यादि वार्त्तिककारेणोक्त यत् तदुक्तिमात्रमेव । कथमित्याह-उक्तवदयोगादिति ॥

अन्यस्त्वाह-संव्यवहारार्थमनुमानलक्षणप्ररूपणम् । स च-संव्यवहार उक्तस्वरूपात् ततः-अनुमानलक्षणात् सिद्ध्यत्येव, अन्यथा-उक्तलक्षणानुमानव्यतिरेकेण तदसिद्धेः-व्यवहारासिद्धेः । परमार्थतस्त्वद्वयं बोधमात्रं तत्त्वं ग्राह्यग्राहकाकारशून्यमिति नानुमानानुमेयव्यवस्था । एतदाशङ्क्याह-एतदप्यसत्-अशोभनम् । कुत इत्याह-विचाराक्षमत्वात् । एतदेवाह तथाहीत्यादिना । तथाहि-कोऽयं संव्यवहारो नाम ? । एवं पृष्टः पर आह-अन्यतोऽन्य-

१-३ अनुष्टुप् । ४ 'प्रयोगसादृश्यार्थं द्रष्टव्य १०१तम पृष्ठम् । ५ 'तव सन्ताना०' इति क-पाठ । ६ 'धूमोऽग्निवत इत्यु०' इति क-पाठ ।

( मूलम् )

**यद्येवं कथमद्वयं बोधमात्रं तत्त्वम्? । न सा परमार्थत इति । [1]नास्त्येव तर्हि किं तदर्थमनुमानलक्षणप्ररूपणया? । अथ साऽप्यसती, कथं शास्त्रप्रणयनम्? । तदप्यसदेवेति । तदिदं विहारकक्षाप्रवेशनमित्यलमत्र निर्बन्धेन ॥**

**किञ्चाद्वये बोधमात्रे तत्त्वे न भवापवर्गविशेष इति न युक्ता तत्तत्त्वकल्पना। कथं न विशेषो ग्राह्यादिप्रपञ्चवतो भवत्वात् तद्रहितस्य चापवर्गत्वादिति, न, अद्वये बोधमात्रे ग्राह्यादिप्रपञ्चाभावात्, भावे वाऽद्वयत्वविरोधात् निमित्तासिद्धेश्च । तथाहि-किमस्य निमित्तम्? अनिमित्तत्वेऽभावप्रसङ्गः । बोधमात्रनिमित्तत्वे सदापत्तिः । अविद्या**

---

( स्वो० व्या० )

**प्रतिपत्तिः**, लिङ्गात् लिङ्गिप्रतिपत्तिरित्यर्थः। एतदाशङ्क्याह-**यद्येवं कथमद्वयं बोधमात्रं तत्त्वम्?**। अत्राह-**न सा**-अन्यतो[2]ऽन्यप्रतिपत्तिः **परमार्थत इति** कृत्वा। एतदाशङ्क्याह-**नास्त्येव तर्हि** सा **किं तदर्थम्**-अन्यतोऽन्यप्रतिपत्त्यर्थम**नुमानलक्षणप्ररूपणया?** न किञ्चिदित्यर्थः । पराभिप्रायमाह-**अथ साऽप्यसती**-अनुमानलक्षणप्ररूपणा । एतदाशङ्क्याह-**कथं शास्त्रेण प्रणयनम्?** अस्ति चैतत्। अत्राह-**तदप्यसदेवेति** शास्त्रप्रणयनम् । एतदाशङ्क्याह-**तदिदं विहारकक्षाप्रवेशनं** सर्वापलापेन इत्य**लमत्र निर्बन्धेन**, दुःस्थितत्वादस्य ॥

अभ्युच्चयमाह **किञ्चे**त्यादिना। **किञ्चाद्वये** ग्राह्याकारादिरहिते **बोधमात्रे तत्त्वे**-वस्तुनि **न भवापवर्गविशेष इति** कृत्वा **न युक्ता तत्तत्त्वकल्पना**-अद्वयबोधमात्रतत्त्वकल्पना । अत्राह-**कथं न विशेषः**, भवापवर्गयोरिति प्रक्रमः, **ग्राह्यादिप्रपञ्चवतो** बोधस्येति सामर्थ्यं **भवत्वात्**-संसारत्वात् **तद्रहितस्य**-ग्राह्यादिप्रपञ्चरहितस्य **चापवर्गत्वात्**-मोक्षत्वा**दिति** । एतदाशङ्क्याह-**न, अद्वये बोधमात्रे** तत्त्वे **ग्राह्यादिप्रपञ्चाभावात्, भावे वा** ग्राह्यादिप्रपञ्चस्य-**अद्वयत्वविरोधात्** तथा **निमित्तासिद्धेश्च** ग्राह्यादिप्रपञ्चस्य । **तथाहि-किमस्य**-ग्राह्यादिप्रपञ्चस्य **निमित्तम्? अनिमित्तत्वे** सत्य**भावप्रसङ्गो**ऽस्य । **बोधमात्रनिमित्तत्वे सदापत्ति**स्तस्यापवर्गेऽपि भावात् । **अविद्या निमित्तम्। इति चेत्,**

---

( विवरणम् )

(१८-१९) **विहारकक्षाप्रवेशनमिति** । सर्वविचारपरिहारेण [3]मठैककोणप्रवेश इत्यर्थः ॥

---

१ नास्त्येवं तर्हि' इति ग-पाठः । २ 'सामान्यतोऽन्य०' इति ङ-पाठः । ३ 'मचैककोण' इति ख-पाठः ।

(मूलम्)

**निमित्तमिति चेत्, [1]बाह्यार्थसिद्धिः। बोधमात्रमेवाविद्येति चेत्, ननूक्तो दोषः। क्लिष्टं तदेव सेति चेत्, कुतः क्लिष्टत्वम्?। स्वभावत एवेति चेत्, न [2]ततः शुद्धिः, अबोधक्षणस्येव ततोऽक्लिष्टस्यानुदयात्। अक्लिष्टश्चासौ [3]शुद्धिः, स चायुक्तः ततः, सङ्क्लेशमात्रत्वात्। तद्धि स्वस्वभावेनाजनयज्जनकधर्मतामतिपतति जनयच्च तेन भिन्नजातीयम्। न हि शुद्धबोधमात्रादशुद्धबोधजन्म, तत्तत्स्वभावनियमात्, न नीलात् शुक्लोदयवददोषः, तन्मात्रान्नीलान्तरवत् तदसिद्धेः, शक्त्यन्तरोपादानं हि तदिष्यते,**

(स्वो० व्या०)

एतदाशङ्क्याह–**बाह्यार्थसिद्धिः,** बोधमात्रतोऽन्यत्वात् तस्या इति भावः। **बोधमात्रमेवाविद्या। इति चेत्,** एतदाशङ्क्याह–**ननूक्तो दोषः**–बोधमात्रनिमित्तत्वे सदापत्तिः[4]। **क्लिष्टं तदेव**–बोधमात्र **सा**–**अविद्या। इति चेत्,** एतदाशङ्क्याह–**कुतः क्लिष्टत्वं** बोधमात्रस्य? **स्वभावत एव। इति चेत्,** एतदाशङ्क्याह–**न ततः शुद्धिः,** न क्लिष्टादक्लिष्टजन्मेत्यर्थः। एतदेवाह **अबोधे**त्यादिना। [5]**अबोधक्षणस्येवे**ति निदर्शनम्। **ततः**–क्लिष्टाद् बोधमात्रात् **अक्लिष्टस्यानुदयात्** तस्यैव। **अक्लिष्टश्चासौ**–बोधः **शुद्धि**रुच्यते। **स** चैवम्भूतो**ऽयुक्तः ततः**–क्लिष्टाद् बोधमात्रात्। कुत इत्याह–**सङ्क्लेशमात्रत्वात्** तस्य। **तद्धि**–क्लिष्ट बोधमात्रं **स्वस्वभावेन**–आत्मीयेन रूपेण क्लिष्टतालक्षणेन **अजनयत्**। किमित्याह–**जनकधर्मतामतिपतति, जनयच्च तेन**–स्वस्वभावेन (**भिन्नजातीयं**–) विजातीयं कार्यं जनकधर्मतामतिपतति। एतदेव निदर्शनान्तरेणाह–**न हि शुद्धबोधमात्रात्** [6]सकाशाद् **अशुद्धबोधजन्म**। कुत इत्याह–**तत्तत्स्वभावनियमात्** तस्य–शुद्धबोधमात्रस्य शुद्धबोधमात्रजननस्वभावनियमादिति। **न नीला**द् बोधमात्रा**च्छुक्लोदयवददोषः,** किन्तु दोष एव। कुत इत्याह–**तन्मात्रात्**–नीलमात्रात्, **नीलान्तरवदि**ति निदर्शनं सजातीयमेव। **तदसिद्धेः**–शुक्लोदयासिद्धेः। इत्थ चैतदङ्गीकर्त्तव्यमित्याह–

(विवरणम्)

(१७) **तस्यैवे**ति। अक्लिष्टक्षणहेतोर्विवक्षितानन्तरक्लिष्टक्षणस्यैव। अयमभिप्रायः–यथाऽयमक्लिष्टक्षणहेतुतया परिकन्कि(? क्लि)ष्टक्षणहेतुतया परिकल्पितः क्लिष्टो ज्ञानक्षणः स्वकारणात् क्लिष्टक्षणात्, एवमस्मादपि क्लिष्टात् क्लिष्टस्यैवात्पादो युक्तः, नाक्लिष्टस्येति॥

१ 'बाह्यार्थसिद्धे' इति ग–पाठ। २ 'तत अबोध०' इति ग–पाठ। ३ 'शुद्ध स' इति ग–पाठ। ४ द्रष्टव्य ११६तम पृष्ठम्। ५ 'अबोधे क्षण०' इति ङ–पाठ। ६ 'सङ्काशाद्' इति क–पाठ।

(मूलम्)

"कस्यचित् किञ्चिदेवान्तर्वासनायाः प्रबोधकम् ।
ततो धियां विनियमो न बाह्यार्थव्यपेक्षया ॥"[1]

इत्यादिवचनात् । न चात्रोपादाननिमित्तभावो ज्यायान्, कस्यचित् क्वचित् सहकारित्वायोगादिति निर्लोठितं प्रपञ्चेन ॥

अनन्तरविज्ञानशक्तिपक्षे तु न नीलाच्छुक्लजन्म, तथाऽनुभवभावेऽपि सन्न्यायायोगात्, हेत्वभेदे फलभेदानुपपत्तेः, अन्यथाऽतिप्रसङ्गात्, नीलाच्छुक्लवच्छुद्धादप्यशुद्धजन्मानिषेधात् । न शुद्धोऽशुद्धजननस्वभावः । इतर इतरस्वभावः कथम् ?, सर्वथा सङ्क्लेशनिवृत्तेः

(स्वो० व्या०)

शक्त्यन्तरोपादानं, शुक्लशक्त्युपादानमित्यर्थः[2], यस्मात् तत्-शुक्लमिष्यते भवद्भिः । कुत इत्याह-कस्यचित्-बोधमात्रस्य किञ्चिदेव-शक्तिरूपं अन्तर्वासनायाः प्रबोधकं भवति, ततो धियां विनियमो नीलशुक्लादितया, न बाह्यार्थव्यपेक्षया इत्यादिवचनात् कारणात् । न चात्रोपादाननिमित्तभावो ज्यायान्[3] । कुत इत्याह-भवत्पक्षे कस्यचित् क्वचित् सहकारित्वायोगादिति एतन्निर्लोठितं प्रपञ्चेन अधस्तात् ॥

अनन्तरेत्यादि । अनन्तरविज्ञानशक्तिपक्षे पुनस्तस्यैवैषा शक्तिरित्यस्मिन् न [4]नीलाद् विज्ञानात् शुक्लजन्म-शुक्लविज्ञानोदयः । तथाऽनुभवभावेऽपि सति किमित्याह-सन्न्यायायोगात् । अयोगश्च हेत्वभेदे सति फलभेदानुपपत्तेः । अभिन्नं च नीलविज्ञानं नीलशुक्लहेतुः, शक्तिरपि तदेवेत्यभिप्रायः । एवं चोक्तदोषसिद्धिरेव । इत्थं चैतदङ्गीकर्तव्यमित्याह-अन्यथाऽतिप्रसङ्गात् । एनमेवाह-नीलाच्छुक्लवदिति निदर्शनम् । शुद्धादपि बोधादशुद्धजन्मानिषेधात् । आह-न शुद्धोऽशुद्धजननस्वभावः, बोध इति प्रक्रमः । अत्रोत्तरम्-इतरः-क्लिष्ट इतरजननस्वभावः-शुद्धजननस्वभावः । कथम् ? अत्राह-सर्वथा सङ्क्लेशनिवृत्तेः-निरन्वयसङ्क्लेश-

(विवरणम्)

(१८) अनन्तरविज्ञानशक्तिपक्षे इति । नीलज्ञानस्यैवेदृशी शक्तिर्येन तदनन्तरं शुक्लज्ञानमुत्पद्यते इत्यस्मिन् शुद्धबोधेऽपि तुल्यैवेयम् ॥

(२५) सर्वथा सङ्क्लेशनिवृत्तेरिति । अत्र 'सर्वथा'शब्दस्याग्रतोऽकारप्रश्लेषः कार्यः । ततोऽसङ्क्लेशनिवृत्तेरिति भवति । अत्र चायं भावार्थः-यथा सङ्क्लिष्टक्षणादनन्तरं सर्वथा सङ्क्लेशनिवृत्तौ सत्यां शुद्धः क्षण उत्पद्यत इत्यङ्गीक्रियते तथाऽसङ्-

१ अनुष्टुप् । २ 'मित्यर्थः यस्मात् तत् शुक्लमित्यर्थः यस्मात्' इति क-पाठः । ३ 'ज्यायते' इति ङ-पाठः । ४ 'नीलाद्विज्ञानात्' इति ङ-पाठः ।

( मूलम् )

**शुद्धबोधेऽपि तुल्यैवेयम् । कथं भूयस्तद्भावः एव? मा भवत्विति निषिध्यते । इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा यस्य सर्वथा निवृत्तिस्तस्यानन्तरं तत्सदृशेनैव भवितव्यमित्युक्तदोषानतिवृत्तिरेव ॥**

**किञ्चाद्वये बोधमात्रे तत्त्वे सङ्क्लिष्टोऽसङ्क्लिष्टश्च बोध इत्येतदेवासम्भवि अन्यत्र वचनमात्रात्, उभयत्र बोधमात्रभावात्, अन्यथा तत्तत्त्वासिद्धेः, तदतिरिक्तस्य चाभावाद् बोधभेदमात्रस्याप्रयोजकत्वात्, तस्मिन् सत्यपि जातिभेदायोगात् शुद्धबोधभेदेषु तदनुपपत्तेः। एवमपि तदङ्गीकरणे इष्टबाधा शुद्धबोधानामपि क्लिष्टेतरत्वप्रसङ्गात्,**

( स्वो० व्या० )

नाशतो विजातीयजननस्वभावसिद्धेरित्यर्थः । एतदाशङ्क्याह–**शुद्धबोधेऽपि तुल्यैवेयं**–सर्वथा सङ्क्लेशनिवृत्तिः, अतो विजातीयजननस्वभावसिद्धेः क्लिष्टबोधो भवतीति अभिप्रायः। अत्राह–**कथं भूयः**–पुनस्तद्भा**वः**–शुद्धबोधभावः? । एतदाशङ्क्याह–**मा भवत्विति निषिध्यते । इत्थं चैतदङ्गीकर्त्तव्य**मनन्तरोदितम् । **अन्यथा**–एवमनभ्युपगमे सति **यस्य सर्वथा निवृत्तिस्तस्यानन्तरं तत्सदृशेनैव भवितव्यं** सर्वथा निवृत्त्याऽपि विजातीयजननस्वभावताक्षेपादिति–**एवमुक्तदोषानतिवृत्तिरेव** । न क्लिष्टाच्छुद्धजन्मेति भावः ॥

अभ्युच्चयमेवाह **किञ्चे**त्यादिना । किञ्च **अद्वये बोधमात्रे तत्त्वे सङ्क्लिष्टः असङ्क्लिष्टश्च बोध इत्येतदेवासम्भवि** तत्त्वतः, **अन्यत्र वचनमात्रात्**, निरर्थकादिति । एतदेवाह–**उभयत्र**–सङ्क्लिष्टेऽसङ्क्लिष्टे च **बोधमात्रभावात्, अन्यथा तत्तत्त्वासिद्धेः**–बोधमात्रतत्त्वासिद्धेः **तदतिरिक्तस्य च**–बोधमात्रातिरिक्तस्य च **अभावाद् बोधभेदमात्रस्य च** केवलस्य **अप्रयोजकत्वात्** । कथमित्याह–**तस्मिन् सत्यपि**–बोधभेदमात्रे **जातिभेदायोगात्** । अयोगश्च **शुद्धबोधभेदेषु** नानासन्तानान्तरवर्तिषु **तदनुपपत्तेः**–जातिभेदानुपपत्तेः । **एवमपि**–बोधभेदमात्रतायां **तदङ्गीकरणे**–जातिभेदाङ्गीकरणे **इष्टबाधा** । कथमित्याह–**शुद्धबोधानामपि** सन्तानान्तरवर्तिनां **क्लिष्टेतरत्वप्रसङ्गात्** ।

( विवरणम् )

**क्लिष्टक्षणादनन्तरं सर्वप्रकारैरसङ्क्लेशनिवृत्तेस्तुल्यत्वात् क्लिष्टः क्षण उत्पद्यत इत्यप्यभ्युपगम्यतां, सर्वथा निवृत्तेरुभयत्राप्यविशिष्टत्वात् ॥**

१ 'बुद्धबोधा०' इति ग–पाठ । २ 'सिद्धे क्लिष्ट०' इति क–पाठ । ३ 'भवत्विति' इति ङ–पाठ । ४ 'स्वनाक्षेपा०' इति ङ–पाठ । ५ 'अभ्युच्चयमाह' इति ङ–पाठ. । ६ 'बुद्धबोद्धा०' इति ङ–पाठ. ।

( मूलम् )

**तेषामपि मिथो भेदात्, तन्मात्रस्य च तद्भावहेतुत्वात्, अन्यथाऽधिकभावसिद्धिः, क्लिष्टो बोध इति क्लेशस्य बोधविशेषणत्वात्, असतो विशेषणत्वायोगात् अतिप्रसङ्गात्, तदितरत्राप्यविशिष्टत्वात्। तथाहि–बोधो बोध इति तत्त्वे क्लेशाभाव उभयत्राविशिष्ट एवेति। न च निरंशं तत्त्वमिति तत्त्वतो न विशेषणविशेष्यभावः, क्लिष्टो बोध इति तत्त्वानुपपत्तेर्निरंशस्यैकस्वभावत्वात् तस्य च बोध एवोपयोगात्, अन्यथा तदबोधतापत्तेः क्लिष्ट इति शब्दहेत्वभावात् तत्त्वतस्तत्तत्त्वाविशेषात्। इति यथोदिततत्त्वानुपपत्तिः॥**

**एतेन यदुच्यते–"तदेवाद्वयं[1] बोधमात्रं तथास्वभावत्वात् तथाऽवभासमानं ग्राह्यादिरूपत्वाद् विकल्पात्मकत्वात् क्लिष्टो बोध**

( स्वो० व्या० )

प्रसङ्गश्च **तेषामपि**–शुद्धबोधानां[2] **मिथः**–परस्परं **भेदात्, तन्मात्रस्य च**–भेदमात्रस्य च **तद्भावहेतुत्वात्**–क्लिष्टेतरभावहेतुत्वात्। **अन्यथा**–एवमनभ्युपगमेऽ**धिकभावसिद्धिः क्लिष्टो बोध इति**–एवं **क्लेशस्य बोधविशेषणत्वात्, असतः**–क्लेशस्य **विशेषणत्वायोगात्**। अयोगश्च **अतिप्रसङ्गात्**। **तदितरत्रापि**–शुद्धबोधेऽ**विशिष्टत्वात्** असद्विशेषणस्य। एतदेव भावयति **तथाहीत्यादिना**। तथाहि–**(बोधो) बोध इति तत्त्वे क्लेशाभाव उभयत्र**–बोधे **अविशिष्ट एवेति** तदितरत्राप्यविशिष्टत्वसिद्धिः। **न चे**त्यादि। न च **निरंशं तत्त्वमिति** कृत्वा **तत्त्वतः**–परमार्थेन हेतुना **न विशेषणविशेष्यभावः**। कुत इत्याह–**क्लिष्टो बोध इति**–एवं **तत्त्वानुपपत्तेः**। अनुपपत्तिश्च **निरंशस्यैकस्वभावत्वात् तस्य च**–एकस्य स्वभावस्य **बोध एवोपयोगात्**। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा**–एवमनभ्युपगमे **तदबोधतापत्तेः** तस्य–बोधस्याबोधतापत्तेः। एवं **क्लिष्ट इति शब्दहेत्वभावात्** बोधैकस्वभावतया। अत एवाह–**तत्त्वतः**–परमार्थेन **तत्तत्त्वाविशेषात्**–बोधतत्त्वाविशेषात्। **इति**–एवं **यथोदिततत्त्वानुपपत्तिः**, क्लिष्टबोध इति तत्त्वानुपपत्तिरित्यर्थः॥

**एतेन यदुच्यते** परैः–**तदेवाद्वयं बोधमात्रं** वस्तु **तथास्वभावत्वात्** कारणात् **तथाऽवभासमानं** ग्राह्यादिरूपतयैव **ग्राह्यादिरूपत्वात्[3]** कारणात्

( विवरणम् )

(१९) **बोधो बोध** इति। कोऽर्थः?। बोधो बोध इति क्लिष्टता हेतोरन्यस्य **कस्यचिदभावात्**॥

१ 'द्वयबोधः' इति ग–पाठः। २ 'बुद्धबोधानां' इति ङ–पाठः। ३ 'ग्राह्यत्वादिरूप०' इति ङ–पाठः।

( मूलम् )

उच्यते" इत्यादि तदपि प्रतिक्षिप्तम्, अद्वयस्य निरंशत्वात्, असतश्चाननुभवात्। इति कर्मलक्षण एव क्लेशोऽस्तु। सत्यस्मिन्नपरिकल्पिते तद्योगात् क्लिष्टता तद्वियोगाच्च परमार्थत एव शुद्धिरित्युपपद्यते भवापवर्गविशेषो नान्यथा। एवं च तस्य कर्मणः सत्त्वादचेतनत्वाद् बाह्यसिद्धिरेवेत्यलं प्रसङ्गेन ॥

इतश्च बाह्यप्रतिक्षेपोऽयुक्तः[1], आप्तवचनविरोधात्, "सञ्चितालम्बना पञ्च विज्ञानकायाः" इति वचनप्रामाण्याद् बाह्यसञ्चयस्येष्टत्वात्, आलम्बनत्वेन तद्वस्तुत्वसिद्धेः, विज्ञानजनकत्वात्, अवस्तुनो जनकत्वायोगात्, उक्तवत् तद्भावाविरोधाच्च। तथाहि-'तन्नैरन्तर्यावस्थानमेव तेषां तथास्वभावतया कथञ्चिदपृथग्भूत[2]तथाविधैकपरि[3]-

( स्वो० व्या० )

विकल्पात्मकत्वादेव क्लिष्टो बोध उच्यते इत्यादि यदुच्यते तदपि प्रतिक्षिप्तम्। कथमित्याह-अद्वयस्यैकतया निरंशत्वात्, असतश्च-क्लेशस्य अननुभवात्। इति-एवं कर्मलक्षण एव क्लेशोऽस्तु। सत्यस्मिन्नपरिकल्पिते-कर्मलक्षणे क्लेशे तद्योगात्-कर्मलक्षणक्लेशयोगात् क्लिष्टता तद्वियोगाच्च-अपरिकल्पितक्लेशवियोगाच्च परमार्थत एव शुद्धिरिति-एवमुपपद्यते। किमित्याह-भवापवर्गविशेषो नान्यथा। एवं च सति तस्य कर्मणः क्लेशरूपस्य सत्त्वादचेतनत्वाद् बाह्यसिद्धिरेव बोधभेदेन इत्यलं प्रसङ्गेन ॥

इतश्च बाह्यप्रतिक्षेपोऽयुक्तः। कुत इत्याह-आप्तवचनविरोधात्। विरोधश्च सञ्चितालम्बनाः पञ्च रूपादिज्ञानभेदतः विज्ञानकाया इति वचनप्रामाण्यादेवं बाह्यसञ्चयस्येष्टत्वादिति। आलम्बनत्वेन हेतुना तद्वस्तुत्वसिद्धेः।[4] सिद्धिश्च[5] विज्ञानजनकत्वात् अवस्तुनो जनकत्वायोगात् उक्तवत्-यथोक्तं तद्भावाविरोधाच्च-सञ्चयभावाविरोधाच्च। प्रागुक्तस्मरणार्थमाह तथाहीत्यादिना। तथाहि-तन्नैरन्तर्यावस्थानमेव, प्रक्रमात् परमाणुनैरन्तर्यावस्थानमेव तेषां-परमाणूनां तथास्वभावतया कारणेन कथञ्चिदपृथग्भूततथाविधैकपरिणामवत्, तन्नैरन्तर्यावस्थानं तत्समूहः-परमाणुसमूहः

१ 'प्रतिक्षेपो युक्त' इति क-पाठ। २ 'भूतभूततया०' इति क-पाठ। ३ 'परिणामवत्समूह.' इति ग-पाठ। ४ 'सिद्धेऽसिद्धिश्च' इति ङ-पाठ। ५ 'सिद्धिश्च तद्विज्ञान०' इति क-पाठ.।

( मूलम् )

**णामवत् तत्समूहः' इत्युक्तम्[1] । समूहः सञ्चय इति चानर्थान्तरमेव। न चेदं गम्भीरदेशनायोग्यतापादनाय विनेयानुगुण्यत उक्तमिति युक्तम्, प्रमाणाभावात्, तद्विवक्षाया अप्रत्यक्षत्वात् तथाऽनुभवाभावात्, तथापि तत्कल्पने अतिप्रसङ्गादिति । न च "चित्तमात्रं भो जिनपुत्र यदेतत् त्रैधातुकम्" इत्यादि बाधकं वचनमेव प्रमाणमत्र, [2]तदनाप्ततापत्तेः विरुद्धार्थाभिधानात् तुल्ययोगक्षेमत्वात्, [3]अस्यैव चान्यार्थत्वादिति । तथाहि–इदमेव युक्तं यदास्थानिवृत्त्यर्थमस्य संयोग-वियोगाभ्यां हर्षादिकरणेन सङ्कल्पमात्ररमणीयताकथनम्, अन्यथा बाह्याभावेन दानपारमितादीनां तन्निबन्धनगुणानाम-**

( स्वो० व्या० )

इत्युक्तं प्राक्[4] । मा भूत् समूह-सञ्चययोर्भेदप्रतिपत्तिरित्याह–**समूहः सञ्चय इति चानर्थान्तरमेव । न चेदं** [5]सञ्चितालम्बना इत्यादि **गम्भीरदेशनायोग्यतापादनाय**, विज्ञानदेशनायोग्यतापादनायेत्यर्थः, **विनेयानुगुण्यतः**–शिष्यानुगुण्येन **उक्तमिति युक्तं** वक्तुम् । कुत इत्याह–**प्रमाणाभावात्, तद्विवक्षायाः**–आप्तविवक्षाया **अप्रत्यक्षत्वात्**–परोक्षत्वात् । अप्रत्यक्षत्वं च **तथाऽनुभवाभावात्**–तद्विवक्षाग्रहणतयाऽनुभवाभावात् । **तथापि**–एवमपि **तत्कल्पने**–विनेयानुगुण्यत उक्तमिति कल्पने किमित्याह–**अतिप्रसङ्गादिति । न च "चित्तमात्रं भो जिनपुत्र यदेतत् त्रैधातुकं"**–काम-रूपा-ऽरूपधातुरूपमित्यादि [6]**बाधकं वचनमेव प्रमाणमत्र** विनेयानुगुण्यत उक्तमिति कल्पनायाम् । कुत इत्याह–**तदनाप्ततापत्तेः** आप्तस्यानाप्ततापत्तेः । आपत्तिश्च **विरुद्धार्थाभिधानात्** तथा **तुल्ययोगक्षेमत्वात्** । एतदेवाह–**अस्यैव**–चित्तमात्रमित्यादेर्वचनस्य **अन्यार्थत्वादिति** । इदमेव भावयति **तथाहीत्यादिना** । तथाहीति पूर्ववत् । **इदमेव युक्तं यदास्थानिवृत्त्यर्थमस्य**–अर्थस्य **संयोग-वियोगाभ्यां हर्षादिकरणेन**, 'आदि'शब्दाद् विषादादिग्रहः, **सङ्कल्पमात्ररमणीयताकथनम् । अन्यथा**–एवमनभ्युपगमे [7]**बाह्याभावेन** हेतुना **दानपारमितादीनाम्** । 'आदि'शब्दाच्छीलपारमितादि-

( विवरणम् )

(१७) **दानपारमितादीनामिति** । दानस्य प्रकर्षप्राप्तिर्दानपारमिता । एवमन्याऽपि ॥

१ २५तमे पृष्ठे । २ 'तदनाप्ततात्तेः' इति ग–पाठः । ३ 'अस्यैवानार्थं०' इति ग–पाठः । ४ २५तमे पृष्ठे । ५ 'संवितालम्बिना' इति क–पाठः । ६ 'बोधकं' इति क–पाठः । ७ 'बाह्यताभावेन' इति क–पाठः ।

( मूलम् )

**भावः, तदभावाच्च तस्यैव भगवतोऽभावप्रसङ्गः। न च विज्ञानमात्रसम्पादनीया एव ते, लोके तथाऽदर्शनात्, दानादिज्ञानभावेऽपि परप्रीत्याद्यभावात्, अतः शून्यतावचनवन्न्यायबाधितत्वात् प्रमाणभावाज्जातियुक्तियोगात् त्रैधातुकास्थानिवृत्त्यर्थमेवैतदिति युक्तम्। एवं चाप्तवचनतोऽपि सिद्धे बाह्येऽर्थे व्यवस्थितं सदसदादित्वं घटस्य॥**

---

( स्वो० व्या० )

ग्रहः। **तन्निबन्धनगुणानाम्**–आप्तनिबन्धनगुणानाम**भावः, तदभावाच्च**–तन्निबन्धनगुणाभावाच्च **तस्यैव भगवतः**–आप्तस्य **अभावप्रसङ्गः। न च विज्ञानमात्रसम्पादनीया एवैते**–दानपारमितादयः। कुत इत्याह–**लोके तथाऽदर्शनात्।** अदर्शनं च **दानादिज्ञानभावे**[1]**ऽपि परप्रीत्याद्यभावात्** परोऽत्र सम्प्रदानम्। 'आदि'शब्दाद् भुक्त्यादिग्रहः। उपसहरन्नाह–**अतः शून्यतावचनवदिति** निदर्शनम्। शून्याः सर्वसंस्कारा इत्यादि **न्यायबाधितत्वात्** हेतोः **प्रमाणभावात्** शून्यतायां **जातियुक्तियोगात्** एतद्युक्तीनां **त्रैधातुकास्थानिवृत्त्यर्थमेव तत्**–वचन यदुत "चित्तमात्रम्"इत्यादि **इति युक्तं** वक्तुम्। **एवं चाप्तवचनतोऽपि सिद्धे बाह्येऽर्थे** किमित्याह–**व्यवस्थितं सदसदादित्वं घटस्य॥**

---

( विवरणम् )

(१५) **जातियुक्तियोगादिति**। जातियुक्तिभिर्योगात्–सम्बन्धात्॥

(१५) **एतद्युक्तीनामिति**। एतद्युक्तीनां–शून्यतावादयुक्तीनाम्॥

(१५-१६) **त्रैधातुकास्थानिवृत्त्यर्थमेवेति**। [2]रूपा-ऽरूपा-कामास्त्रयो धातवः। एतत् स्वरूप च बौद्धराद्धान्तसिद्धमिति॥

इति श्रीमुनिचन्द्रसूरिविरचिते अनेकान्तजयपताकोद्द्योतदीपिकावृत्तिटिप्पणके योगाचारमतवादः॥

---

१ 'भावोऽपि' इति ङ–पाठ। २ 'रूप्या-ऽरूप्य-काम्यास्त्रयो' इति च–पाठ.।

# षष्ठोऽधिकारः ।

( मूलम् )

यच्चोक्तम्[1]-'विरोधिधर्माध्यासितस्वरूपत्वाद् वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः'[2] इत्येतदपि सूक्ष्मेक्षिकया मुक्तिमार्गमनालोच्यैवोक्तमिति, उक्तवत् सत्त्वानित्यत्वादीनां विरोधित्वासिद्धेः, अन्यथा वस्त्वभावप्रसङ्गात् । किञ्च तथाभूतवस्त्वभावे सत्येकान्तवादिन एव मुक्त्यभावप्रसङ्गः । तथाहि-यदि तदात्मा-ऽङ्गना-भवन-मणि-कनक-धन-धान्यादिकमेकान्तेनैवानात्मकत्वादिधर्मयुक्तं भावनालम्बनमिष्यते, हन्त तर्हि सर्वथाऽनात्मकत्वाद् भावकभाव्याभावात् तत्परिज्ञानोत्तरकालभाविभावनाभावतः कुतः कस्य वा दोषप्रहाणमिति कथ्यतामिदम् ॥

स्यादेतत् परपरिकल्पिताविचलितैकस्वभावात्मापेक्षया[3] तदनात्म-

( स्वो० व्या० )

यच्चोक्तमित्यादि । यच्चोक्तं मूलपूर्वपक्षे[4]-'विरोधिधर्माध्यासितस्वरूपत्वाद् वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः' इत्येतदपि सूक्ष्मेक्षिकया मुक्तिमार्गमनालोच्यैवोक्तमिति । कुत इत्याह-उक्तवत्-यथोक्तं तथा सत्त्वानित्यत्वादीनां धर्माणां विरोधित्वासिद्धेः कारणात् । अन्यथा-एवमनभ्युपगमे किमित्याह-वस्त्वभावप्रसङ्गात् निर्णीतमेतत् । किञ्च तथाभूतवस्त्वभावे सति अनेकान्तात्मकवस्त्वभाव इत्यर्थः, एकान्तवादिन एव-वादिनो मुक्त्यभावप्रसङ्गः । एतदेवाह तथाहीत्यादीना । तथाहीत्युपप्रदर्शने । यदि तदात्मा-ऽङ्गना-भवन-मणि-कनक-धन-धान्यादिकमेकान्तेनैव-सर्वथैव अनात्मकत्वादिधर्मयुक्तं भावनालम्बनमिष्यते, हन्त तर्हि सर्वथाऽनात्मकत्वात् कारणात् भावकभाव्याभावात् हेतोः तत्परिज्ञानोत्तरकालभाविभावनाभावतः-एकान्तेनैव अनात्मकत्वादिवस्तुपरिज्ञानोत्तरकालभाविभावनाभावेन कुतः कस्य वा दोषप्रहाणं-रागादिप्रहाणमिति कथ्यतामिदम् ॥

स्यादेतदित्यादि । स्यादेतत्-अथैवं मन्यसे परपरिकल्पितश्चासौ अविचलितैकस्वभावश्चेति विग्रहः, एवम्भूतश्चासावात्मा च तदपेक्षया तत्-

---

१ प्रथमे खण्डे २७तमे पृष्ठे । २ 'भावप्रसङ्गस्त्वभावप्रसङ्गात् इत्येतदपि' इति ग-पाठः । ३ 'कल्पिताविचालितैक०' इति ग-पाठः । ४ प्रथमे खण्डे २७तमे पृष्ठे ।

( मूलम् )

**कमभ्युपगम्यते, न पुनः प्रतिक्षणनश्वरात्मापेक्षयेति। एतदप्यसारम्, विकल्पानुपपत्तेः । तथाहि–तत् कथञ्चित् प्रतिक्षणनश्वरं स्यात् सर्वथा वा ? । यदि कथञ्चिदर्हन्मतानुवाद एव । तथा चोक्तमर्हन्मतानुसारिभिः–**

**"सर्वव्यक्तिषु नियतं क्षणे क्षणेऽन्यत्वमथ च न विशेषः ।**
**[1]सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानात् ॥"[2]**

**इत्यादि । अथ सर्वथा, हन्त तर्ह्यैहिकामुष्मिक[3]सकललोकसंव्यवहाराभावप्रसङ्गः । तथाहि–प्रतिक्षणनिरन्वयनश्वरत्वे सत्यात्मादिवस्तुनो ग्राह्यग्राहकभाव-स्मरण-प्रत्यभिज्ञान-कुतूहलविरमणादि आविद्वदङ्गनादिप्रतीतमपि नोपपद्यते । न हि ग्राह्यार्थ-तद्ग्राहकसंवेदनयोः**

---

( स्वो० व्या० )

अवस्तु **अनात्मकमभ्युपगम्यते, न पुनः प्रतिक्षणनश्वरात्मापेक्षयेति । एतदपि**–परसम्मत**मसारम् ।** कथमित्याह–**विकल्पानुपपत्तेः ।** एनामेवाह **तथाहीत्यादिना** । तथाहीति पूर्ववत् । **तत्**–वस्तु **कथञ्चित्**–पर्यायापेक्षया **प्रतिक्षणनश्वरं स्यात् सर्वथा वा । यदि कथञ्चिदर्हन्मतानुवाद एव ।** एनमेवाह **तथा चोक्तमित्यादिना** । तथा चोक्त**मर्हन्मतानुसारिभिः**–पूर्वाचार्यैः । किमुक्तमित्याह–**सर्वव्यक्तिषु**–घटाद्यासु **नियतं क्षणे क्षणेऽन्यत्वम्,** क्षण[4]सम्बन्धभेदात् । **अथ च न विशेषः** कथञ्चित् सदादिरूपतया । भावार्थमाह– **सत्योश्चित्यपचित्योः** चित्रसहकारिसामर्थ्येन **आकृतिजातिव्यवस्थानात्**–संस्थानसत्त्वव्यवस्थानादित्यादि । **अथ सर्वथा** प्रतिक्षणनश्वर तन्न । **हन्त तर्ह्यैहिकामुष्मिकसकललोकसंव्यवहाराभावप्रसङ्गः** । एतदेव भावयति **तथाहीत्यादिना** । तथाहि–**प्रतिक्षणनिरन्वयनश्वरत्वे सति**–प्रतिक्षण सर्वथा निरनुवृत्तिनशनशीलत्वे सति **आत्मादिवस्तुनो ग्राह्यग्राहकभावश्च स्मरणं** च **प्रत्यभिज्ञानं** च **कुतूहलविरमणादि** चेति द्वन्द्वः, **एतदाविद्वदङ्गनादिप्रतीतमपि नोपपद्यते**–न घटते । **न हीत्यादि** । न यस्मात् **ग्राह्यार्थ-तद्ग्राहक-**

---

१ 'सत्योश्चित्र्यत्यपविच्योतपराकृति०' इति क-पाठो भ्रान्तिमूलक । २ आर्या । ३ 'सकले लोक०' इति क-पाठ । ४ 'सम्बन्धविभेदात्' इति ङ-पाठ ।

( मूलम् )

कथञ्चिदपि तुल्यकालताऽभ्युपगम्यते, तयोर्हेतुफलभावाभ्युपगमात्। उक्तं च[1]–"ग्राह्यतां विदुर्हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम्" इति। एवं च सति ग्राह्यार्थाभाव एव ग्राहकसंवेदनप्रसूतेः तदभावभावित्वात् कुतस्तस्य तद्ग्राहकत्वमितरस्य च तद्ग्राह्यत्वमित्यादाय युक्तिप्रदीपं तिरस्कृत्य स्वदर्शनाभिनिवेशतिमिरं निभाल्यतामेतदिति।

आकारार्पणक्षमत्वमपि तस्यानिश्चितमेव, न यतोऽनन्तरातीतविषयाकारमेतत् संवेदनमिति विनिश्चेतुं शक्यते, तस्याग्रहणात् तदानीमसत्त्वादिति तदाकारमेतदतदाकारं न भवतीत्यवगमानुप-

( स्वो० व्या० )

संवेदनयोः कथञ्चिदपि तुल्यकालताऽभ्युपगम्यते परैः, तयोः–[2]ग्राह्यार्थतद्ग्राहकसंवेदनयोर्हेतुफलभावाभ्युपगमात्। उक्तं च धर्मकीर्त्तिना ग्राह्यतां विदुरर्थस्य हेतुत्वमेव युक्तिज्ञाः–अनुमानादिविदः। किंविशिष्टं हेतुत्वमित्याह–ज्ञानाकारार्पणक्षममिति। एवं च सति ग्राह्यार्थाभाव एव वस्तुस्थित्या ग्राहकसंवेदनप्रसूतेः। किमित्यत आह–तदभावभावित्वात्–ग्राह्यार्थाभावभावित्वात् संवेदनस्य। कुतस्तस्य–संवेदनस्य तद्ग्राहकत्वं–ग्राह्यत्वेनाभिमतार्थग्राहकत्वम्। इतरस्य च–अर्थस्य तद्ग्राह्यत्वं–तदुत्तरकालभाविसंवेदनग्राह्यत्वमित्यादाय युक्तिप्रदीपं [3]सूक्ष्माभोगहस्तेन तिरस्कृत्य स्वदर्शनाभिनिवेशतिमिरं निभाल्यतामेतत्–अनन्तरोक्तमिति ॥

उपचयमाह–आकारार्पणक्षमत्वमपि तस्य–अर्थस्य अनिश्चितमेव। कथमित्याह–न यतोऽनन्तरातीतविषयाकारमेतत् संवेदनमिति–एवं विनिश्चेतुं शक्यते। कुत इत्याह–तस्य–अनन्तरातीतविषयस्य अग्रहणात्। अग्रहणं च तदानीं–संवेदनकाले असत्त्वाद् विषयस्य इति–एवं तदाकारम्–अनन्तरातीतविषयाकारम् एतत्–संवेदनमतदाकारम्–अन्याकारं न भवती-

( विवरणम् )

अथ मुक्तिवादे किञ्चिदवचूर्ण्यते–(१५) ज्ञानाकारार्पणक्षममिति। ज्ञाने स्वाकारढौकनसहं हेतुत्वं युक्तिज्ञा विदुः ॥

१ धर्मकीर्तिना। २ 'ग्राह्यथैतद्०' इति ङ-पाठः। ३ 'सूक्ष्माभोगे हस्तेन' इति क-पाठः।

( मूलम् )

**पत्तिः । संवेद्यमानादेव संवेदनाकारात् तदाकारत्वावगम इति चेत्, तथाहि—न यद् यदाकारं न भवति तत् तद्ग्राहकं भवति, पीताकारमिव नीलस्य, तद्ग्राहकं चैतदिति कथं तदवगमानुपपत्तिरिति? । एतदप्ययुक्तम्, अविचारितरमणीयत्वात्, तत्प्रत्यक्षताऽनुपपत्तेः, अनुमीयमानत्वात्, न चानुमीयमानताऽपि, एवंविधाविनाभावव्यवस्थाकारिणः क्षणद्वयग्राहिणो विज्ञानस्याभावात्, क्षणिकत्वविरोधात्, कारणविज्ञानबोधान्वयव्यतिरेकेण कार्यविज्ञाने तद्वैशिष्ट्यायोगात् अतिप्रसङ्गादिति ॥**

---

( स्वो० व्या० )

**त्यवगमानुपपत्तिः । संवेद्यमानादेव संवेदनाकारात्** तद्गतादेव **तदाकारत्वावगमः**—अनन्तरातीतविषयाकारत्वावगम **इति चेत्,** एतदेव भावयति **तथाही**त्यादिना । तथाहि—**न यद् यदाकारं न भवति** सवेदन **तत् तद्ग्राहकं भवति । पीताकारमिव** संवेदन **नीलस्य तद्ग्राहकम्**—अनन्तरातीतविषयग्राहक **चैतत्**—अधिकृतसंवेदन**मिति**—एवं **कथं तदवगमानुपपत्तिः**—अनन्तरातीतविषयाकारत्वावगमानुपपत्ति**रिति? ।** नैवेत्यर्थः । अत्राह—**एतदप्ययुक्तम**नन्तरोदितम् । कुत इत्याह—**अविचारितरमणीयत्वात् ।** अस्याविचारितरमणीयत्वं च **तत्प्रत्यक्षतानुपपत्तेः**—अनन्तरातीतविषयाकारस्य प्रत्यक्षतानुपपत्तेः । अनुपपत्तिश्च **अनुमीयमानत्वात्** तस्य । **न चानुमीयमानताऽ**प्यत्र । कुत इत्याह—**एवंविधाविनाभावव्यवस्थाकारिणः क्षणद्वयग्राहिणो विज्ञानस्याभावात् ।** अभावश्च **क्षणिकत्वविरोधात् ।** तदेवं विशिष्टं तद्व्यवस्थाकारीत्यारेकानिरासायाह—**कारणे**त्यादि । कारण**विज्ञानबोधान्वयव्यतिरेकेण कार्यविज्ञाने तद्वैशिष्ट्यायोगात्** तस्य—कार्यविज्ञानस्य वैशिष्ट्यायोगात् **अतिप्रसङ्गात्** तद्वदपरस्यापि वैशिष्ट्यापत्ते**रिति ॥**

---

( विवरणम् )

(२३) **कारणविज्ञानबोधान्वयव्यतिरेकेणे**ति । कारणरूपं विज्ञानं तस्य बोधः—चिद्रूपता तस्यान्वयः—अनुगमस्तद्व्यतिरेकेण—तदभावेन । (यदा) हि कारणविज्ञानस्य [1]कार्यादिज्ञानेऽन्वय. स्यात् तदा वैशिष्ट्य स्यात् कार्यविज्ञानस्य । यदा त्वेकान्तक्षणिकतया निर्मूलं प्रलीने एव कारणज्ञाने कार्यस्य ज्ञानमुत्पद्यते तदा किंकृत तस्य वैशिष्ट्यं येनातीतविषयाकारगोचरमनुमानं ततो भवेदिति ॥

---

१ 'कारणविज्ञाने' इति क-पाठ ।

( मूलम् )

**स्यादेतत् समानकालयोरेव ग्राह्यग्राहकभावः। तथाहि–स्वहेतुभ्य एव तद् विज्ञानं विशिष्टसमानकालभाविभावग्राहकस्वभावम्, भावोऽपि तद्ग्राह्यस्वभाव एवोत्पद्यत इति यथोक्तदोषानुपपत्तिः, न, तयोस्तादात्म्यतदुत्पत्त्यनुपपत्तेः प्रतिबन्धाभावात्। स्यादेतत् एकसामग्र्यधीनत्वादुभयोर्वस्तुतस्तदुत्पत्तिलक्षण एव प्रतिबन्धः। तथाहि–स्वकार्यसाधनप्रवृत्तग्राह्यनिमित्तस्वोपादानजन्यं विज्ञानम्, एवं स्वकार्यसाधनप्रवृत्तसमनन्तरविज्ञाननिमित्तस्वोपादानजन्यं च ग्राह्य-**

( स्वो० व्या० )

**स्यादेतत् समानकालयोरेवार्थसंवेदनयोर्ग्राह्यग्राहकभावः। तथाहि–स्वहेतुभ्य एव तद् विज्ञानं**–विवक्षितं **विशिष्टसमानकालभाविभावग्राह[1]कस्वभावम्, भावोऽ**प्यसौ विवक्षितः **तद्ग्राह्यस्वभाव एव**–विवक्षितविज्ञानग्राह्यस्वभाव एव **उत्पद्यत इति**–एवं **यथोक्तदोषानुपपत्तिः**। एतदाशङ्क्य आह–**न तयोः**–प्रस्तुतार्थसंवेदनयोः **तादात्म्यत[2]दुत्पत्त्यनुपपत्तेः** कारणात् **प्रतिबन्धाभावा**दिति। **स्यादेतत्**–अथैवं मन्यसे **एकसामग्र्यधीनत्वात्** कारणात् **उभयोः**–अर्थ-संवेदनयो**र्वस्तुतः**–परमार्थेन **तदुत्पत्तिलक्षण एव प्रतिब[3]न्धः**। एतद्भावनायैवाह–**तथाही**त्यादि। तथाहीति पूर्ववत्। **स्वकार्यसाधनप्रवृत्तं** च तद् **ग्राह्यं** च तदेव **निमित्तं** यस्य **स्वोपादानस्य** विज्ञानसम्बन्धिनः **तज्जन्यं विज्ञानं** वर्तते। **एवं स्वकार्यसाधनप्रवृत्तं** च तत् **समनन्तरवि-**

( विवरणम् )

(१५) **तादात्म्यतदुत्पत्त्यनुपपत्तेरिति**। समानकालभाविनोर्हि ज्ञेय-ज्ञानयोर्न तदुत्पत्तिलक्षणः सम्बन्धो जाघटीति, एककालवर्त्तित्वेनैव परस्परमुपकार्योपका[4]रकभावस्याभावात्। तादात्म्यं तु सुतरां न भवति, जडचिद्रूपस्वभावत्वादर्थ-संवेदनयोः। अतत्सम्बन्धद्व[5]याभावे कथं ग्राह्यग्राहकभावो भवितुमर्हति वैशेषिकस्यापि मते ?। एतच्च परेण वैलक्ष्यभाषितमेव कृतं यदुत समानकालयोरेवार्थ-संवेदनयोर्ग्राह्यग्राहकभावः। न हि तन्मतमेवंविधं समस्ति, विषयक्षणानन्तरं ज्ञानक्षणोत्पत्तिसमभ्युपगमात्॥

(८-९) **स्वकार्यसाधनप्रवृत्तग्राह्यनिमित्तस्वोपादनजन्यं विज्ञानम्। एवं स्व-**

१ 'ग्राहस्वभावं' इति ङ–पाठः। २ 'तस्तदुत्पत्त्यनु०' इति ङ–पाठः। ३ 'बन्धः तद्भावना०' इति ङ–पाठः। ४ 'वारस्याभावात्' इति क–पाठः। ५ 'द्वयोर्भावे' इति क–पाठः।

( मूलम् )

**मिति कथं न प्रतिबन्ध इति ? । उच्यते–ग्राह्य-ग्राहकयोर्मिथो हेतुहेतुमद्भावा[1]भावतस्तदुत्पत्त्यसिद्धेः, उक्तवदन्योन्यमनुपकारित्वेन निमित्तताऽनुपपत्तेश्च । ग्राह्यग्राहकभावलक्षण एव तयोः प्रतिबन्ध इति**

---

( स्वो० व्या० )

**ज्ञानं** च तदेव **निमित्तं** यस्य **स्वोपादान**स्यार्थसम्बन्धिनस्तज्जन्यं **च ग्राह्यमिति**–एवं **कथं न प्रतिबन्धो**ऽर्थसंवेदनयोरि**ति** प्रतिबन्ध एवेति । एतदाशङ्क्याह–**उच्यते** । यथा न प्रतिबन्धः **ग्राह्य-ग्राहकयोः** प्रस्तुतयो**र्मिथः**–परस्परं **हेतुहेतुमद्भावा[2]भावात्** कारणात् **तदुत्पत्त्यसिद्धेः** समानकालतयेति भावः । **उक्तवत्**–यथोक्त तथा**ऽन्योन्यमनुपकारित्वेन** हेतुना **निमित्तत्वानुपपत्तेश्च** कारणादिति । **ग्राह्ये**त्यादि । ग्राह्य**ग्राहकभावलक्षण एव तयोः**–

---

(विवरणम्)

**कार्यसाधनप्रवृत्तसमनन्तरविज्ञाननिमित्तस्वोपादानजन्यं च ग्राह्यमिति कथं न प्रतिबन्ध इति ?** । एवं सूत्रं तावद् व्याख्यायते–स्वकार्यसाधने प्रवृत्तं स्वकार्यसाधनप्रवृत्तम्, तच्च ग्राह्यं च–मृदादि तन्निमित्त–सहकारि यस्य तत् तथा, तच्च तत् स्वोपादानं च–प्राच्यविज्ञानलक्षणरूपं तेन जन्यते त(य?)त् तत् स्वकार्यसाधनप्रवृत्तग्राह्यनिमित्तस्वोपादानजन्यं वर्तते विज्ञानम् । तथा एवम्–अनेनैव प्रकारेण स्वकार्यसाधनप्रवृत्तं च तत् समनन्तर[3]विज्ञानं च, तन्निमित्त–सहकारि यस्य तत् तथा, तच्च [4]तत् स्वोपादानं च–मृदादि तज्जन्य वर्तते ग्राह्यं–घटादि । अयमभिप्राय.–विज्ञानस्य सम्बन्धी उपादानक्षणो विज्ञानं जनयन् आत्मसमकालभाविनमर्थक्षणमपेक्षते । अर्थस्यापि सम्बन्धी उपादानक्षणोऽर्थक्षणं जनयन् सन्नात्मसमकालवर्त्तिनं विज्ञानक्षणमपेक्षत इति । ततो यद्यपि समानकालभाविनाऽर्थक्षणेन न ज्ञानं जनितं तथापि तत्सजातीयेन पाश्चात्यक्षणेन जनितमिति कृत्वा समानकालभाविनोऽर्थस्य ग्राहकं [5]भवतु, तत्तुल्येन जनितत्वादिति । एतद्व्याख्यानानुसारेण वृत्त्यक्षराणि सुगमान्येवेति न व्याख्यातानि ॥

(११-१२) **निमित्तत्वानुपपत्तेश्चे**ति । सहकारित्वस्याघटनादित्यर्थः ॥

---

१ 'भाव , तदु०' इति **ग**–पाठ । २ 'भावात् तदु०' इति **ङ**–पाठ । ३ 'विज्ञानं भूतनिमित्तं' इति **ख–च**–पाठ । ४ 'वेनस्यापादानं' इति **ख–च**– पाठ । ५ 'भवतुल्येन' इति **च**–पाठ. ।

( मूलम् )

**चेत्, न, अस्य धर्मकीर्तिनाऽनङ्गीकृतत्वात्। किं तेन? मयाऽङ्गीकृतो न्याय्यत्वादिति चेत्, अङ्गीक्रियतां तर्हि कथञ्चित् तत्स्थैर्यमप्यनुभवन्यायसम्पन्नत्वात्, अन्यथा क्षणिकत्वाद्यवगतिविरोधात्। न ह्येकान्तेन क्षणस्थितिधर्मणा विज्ञानेनोपलब्धोऽपि भावः क्षणिकोऽयमिति गम्यते, तदनु तेन तदभावानवगमात् तमन्तरेणापि तद्गतावतिप्रसङ्गः शङ्खपीतज्ञानवदतथाभूतादपि ततः कुतश्चिन्निमित्तात् तत्तथाभूतभावाविरोधात्, तत् प्रतीत्य भवतस्तत्त्वतस्तदुपकारानपे-**

( स्वो० व्या० )

अर्थ-संवेदनयोः **प्रतिबन्धः।** **इति चेत्,** एतदाशङ्क्याह–**ने**त्यादि। **न अस्य**–ग्राह्य-ग्राहकभावलक्षणस्य प्रतिबन्धस्य **धर्मकीर्त्तिना**–भवत्तार्किकचूडामणिना**ऽनङ्गीकृतत्वात्। किं तेन? मयाऽङ्गीकृतो न्याय्यत्वा**द्धेतोः। **इति चेत्,** एतदाशङ्क्याह–**अङ्गीक्रियतां तर्हि कथञ्चित्**–केनचित् प्रकारेण द्रव्यार्थतया **तत्स्थैर्यमपि**–अर्थसंवेदनस्थैर्यमपि, **अनुभवन्यायसम्पन्नत्वात्; अन्यथा**–एवमनभ्युपगमे **क्षणिकत्वाद्यवगतिविरोधात्[1]।** ऐनमेवाह[2]–**न ह्री**त्यादि। न यस्मात् **एकान्तेन[3] क्षणस्थितिधर्मणा विज्ञानेन उपलब्धोऽपि** सन् **भावः क्षणिकः अयमिति गम्यते, तदनु**–तत्पृष्ठतः **तेन**–विज्ञानेन **तदभावानवगमात्,** तुल्यकालनिवृत्त्येति भावः। **तं**–तदभावावगमम**न्तरेणापि तद्गतौ**–क्षणिकत्वगतौ **अतिप्रसङ्गः,** अक्षणिकत्वाधिगत्यापत्तेः। एतद्भावनायैवाह–**शङ्खपीतज्ञानवत्** इति निदर्शनम्, **अतथाभूतादपि ततः**–वस्तुन इह तावन्नित्यादपि **कुतश्चिन्निमित्ता**दान्तरदोषतोऽवस्थाभेददर्शनादेः **तत्तथाभूतभावाविरोधात्।** तं[4]च तत् तथाभूतं च तत्तथाभूतं तस्य भावस्तत्तथाभूतभावस्तस्याविरोधात्। एतदुक्तं भवति–नित्यादपि वस्तुनो यथोक्तनिमित्तात् क्षणिकविज्ञानभावाविरोधादिति। एतद्भावनायैवाह–**तत् प्रतीत्ये**त्यादि। **तत्**–अनित्यं वस्तु **प्रतीत्य[5] भवतो** विज्ञानस्य

( विवरणम् )

**(२४) यथोक्तनिमित्तादि**ति। अवस्थाभेददर्शनलक्षणात्॥

१ 'त्वाद्यधिगति विरोधात्' इति ग-पाठः। २ 'एनामेवाह' इति ङ-पाठः। ३ 'एकं तत्-क्षण०' इति क-पाठः; ङ-पाठस्तु 'एकान्तक्षण०' इवि। ४ 'तच्च तथाभूतं' इति ङ-पाठः। ५ 'प्रतीत्य ततो' इति क-पाठः।

(मूलम्)

क्षिणः तद्भावाभावाविशेषेण नित्यादपि तद्भावसिद्धेः। [1]भावोऽपि नावगम्यत इति चेत्, को वा किमाह? । आत्मानुमानतः क्षणिकताधिगतिरिति चेत्, न, आत्माभावे तस्याप्यप्रवृत्तेः। इत्यलं प्रसङ्गेन विजृम्भितमेवात्रासत्[2]स्वयूथ्यैरिति ॥

स्मरणाद्यसम्भवस्तु प्रति[3]क्षणनिरन्वयनश्वरत्वे सति वस्तुनः सुभाव्य एव। न ह्यन्येनान्यस्मिन्ननुभूतेऽन्यस्यान्योपलब्धौ स्मरणप्रत्यभिज्ञानादयो युज्यन्त इति। एवमैहिकसकललोकसंव्यवहाराभाव इति स्थितम्। आमुष्मिकव्यवहारस्तु सुतरामसङ्गतः, कृतनाशाकृताभ्यागमप्रसङ्गात्। तथाहि—यः कुशले प्रवर्त्तते स तदैव सर्वथा

---

(स्वो० व्या०)

तत्त्वतः—परमार्थेन तदुपकारानपेक्षिणोऽन्वयाभावेन तद्भावाभावाविशेषेण तस्य—वस्तुनो भावाभावाभ्यामविशेषः परमार्थतस्तेन हेतुना नित्यादपि—वस्तुनः तद्भावसिद्धेः—अधिकृतविज्ञानभावसिद्धेः। भावोऽपि तस्य वस्तुनः क्षणस्थितिधर्मणा विज्ञाने नावगम्यत इति चेत्, को वा किमाह? एवमेवैतदित्यर्थः। आत्मानुमानतो ज्ञानेन क्षणिकताधिगतिरिति चेत् वस्तुन इति। एतदाशङ्क्याह—न, आत्माभावे ज्ञानस्य क्षणिकतया निवृत्तेः तस्यापि—अनुमानस्यापि अप्रवृत्तेः। इत्यलं प्रसङ्गेन विजृम्भितमेवात्र—व्यतिकरेऽसत्स्वयूथ्यैः—दिवाकरादिभिः सन्मत्यादिषु इति ॥

स्मरणाद्यसम्भवस्तु प्रागुपन्यस्तः प्रतिक्षणनिरन्वयनश्वरत्वे सति वस्तुनः—सचेतनादेः सुभाव्य एव। न यस्मादन्येन—प्रमात्रा अन्यस्मिन्—प्रमेयेऽनुभूते सति अन्यस्य—प्रमातुरन्योपलब्धौ—प्रमेयान्तरोपलब्धौ स्मरणप्रत्यभिज्ञानादयो युज्यन्त इति। एवम्—उक्तनीत्या ऐहिकसकललोकसंव्यवहाराभाव इति स्थितम्। आमुष्मिकव्यवहारस्तु पारलौकिकः कर्मफलसम्बन्धादिः सुतरामसङ्गतः। कुत इत्याह—कृतनाशाकृताभ्यागम-

---

(विवरणम्)

(१४) भावाभावाभ्यामविशेष इति। अन्वयाभावे हि ज्ञानस्य [4]जायमानेऽस्य विषयवस्तुनः सम्बन्धिभ्या भावाभावाभ्यां न कश्चिद् विशेष इति ॥

---

१ 'भावो नावगम्यत' इति क-पाठ। २ श्रीसिद्धसेनदिवाकरादिभि। ३ 'क्षण निरन्वय०' इति ग-पाठ.। ४ 'जायमानस्य विषय०' इति ख-च-पाठ।

(मूलम्)

विनश्यति। कुशलमपि च कर्मात्मलाभसमनन्तरमेव निरन्वयमपैति। अतः कृतनाशः। क्षणान्तरस्य च चिरनष्टात् कर्मणः पुनरायत्यां फलोदयाभ्युपगमे सत्यकृताभ्यागम इति। न चैतद् युक्तियुक्तम्। तथा मुक्तिरपि प्राणिनामसङ्गतैव। तथाहि–तीव्रतरवेदना[1]निर्भिन्नशरीरः संसारविमुखया प्रज्ञया विभावितसंसारदोषो निरास्थो जिहासुर्भवमुपादित्सुर्निर्वाणं रागादिक्लेशपक्षविक्षोभदक्षमामुखीकृत्य मार्गममलं क्रमेणावदायमानचित्तसन्ततिः निरतिशयपेशलरसामास्वादयति निर्वृतिमिति न्यायः। अयं च प्रतिक्षणनिरन्वयनश्वरत्वे सति आत्मादिवस्तुनो न घटामुपैति। तथाहि–अन्य एव दुःखैः सांसारिकैः

(स्वो० व्या०)

प्रसङ्गात्। एनमेवाह–तथाहीत्यादि। तथाहीति पूर्ववत्। यः कुशले प्रवर्त्तते स तदैव सर्वथा विनश्यति, निरन्वयनश्वरत्वात्। कुशलमपि च कर्म–पुण्याख्यमात्मलाभसमनन्तरमेव निरन्वयमपैति। अतः कृतनाशः, तदा फलमदत्त्वैव नाशात्। क्षणान्तरस्य च–कर्तृक्षणादन्यस्य चिरनष्टात् कर्मणः पुनरायत्याम्–आगामिनि काले फलोदयाभ्युपगमे सति किमित्याह–अकृताभ्यागम इति। न चैतत्–अनन्तरोदितं युक्तियुक्तम्। तथा मुक्तिरपि प्राणिनामसङ्गतैव निरन्वयक्षणिकतायाम्। कथमित्याह–तथाहीत्यादि। तथाहीति पूर्ववत्। तीव्रतरवेदना[2]निर्भिन्नशरीरः सन् जरादिना संसारविमुखया प्रज्ञया लोकोत्तरया विभावितसंसारदोषो जन्मादिभावेन निरास्थः–संयोगवियोगसारत्वात् संसारस्यास्थारहितः जिहासुः–हातुमिच्छुर्भवमुपादित्सुः–उपादातुमिच्छुर्निर्वाणं रागादिक्लेशपक्षविक्षोभदक्षम्। किमित्याह–आमुखीकृत्य मार्गं–सम्यग्दर्शनादिलक्षणं अमलं–निरतिचारं क्रमेणावदायमानचित्तसन्ततिः, विशुद्ध्यमानचित्तसन्तान इत्यर्थः, निरतिशयपेशलरसां–परमपेशलप्रीतिमास्वादयति [3]निर्वृतिमिति न्यायः। अयं च–न्यायः प्रतिक्षणनिरन्वयनश्वरत्वे सति आत्मादिवस्तुनो न घटामुपैति। एतदेव दर्शयति तथाहीत्यादिना। तथाहि–अन्य एव दुःखैः सांसारिकैः शारीरमानसैः

१ 'निर्विण्णः शरीरी संसार०' इति ग–पाठः। २ 'निर्विन्नशरीरः' इति ङ–पाठः। ३ 'निर्वृत्तिनिमित्तन्यायः' इति ङ–पाठः।

( मूलम् )

**पीड्यतेऽन्यश्च निर्विद्यतेऽन्यस्य च विरागमुक्ती इत्यतोऽशोभनमेतत्, अतिप्रसङ्गात्। एवमामुष्मिकव्यवहारोऽप्यसङ्गत इति स्थितम्॥**

**स्यादेतद् विशिष्टकार्यकारणभावनिबन्धनः सर्व एवायमैहिकामुष्मिकव्यवहारः। तथाहि—विशिष्टां रूपादिसामग्रीं प्रतीत्य विशिष्टमेव संवेदनमुपजायते, ततश्च तदेव तस्य ग्राहकमभिधीयते, न पुनरन्यत्, अतिप्रसङ्गात्। एवं स्मरणाद्यपि भावनीयमिति॥**

**कृतनाशाकृताभ्यागमप्रसङ्गोऽप्यत्रानवकाश एव, क्षणभेदेऽपि उपादानोपादेयभावेनैकस्यामेव सन्ततौ आहितसामर्थ्यस्य कर्मणः फलदानात्, अतो य एव सन्तानः कर्त्ता स एवोपभोक्तेति। तथाहि—**

( स्वो० व्या० )

**पीड्यतेऽन्यश्च निर्विद्यते**, तदत्यन्तभेदात्। **अन्यस्य च** [1]**विरागमुक्ती, इति**—अत एव हेतोः **अतोऽशोभनमेतत्**—अनन्तरोदितम्, **अतिप्रसङ्गात्,** [2]सन्तानान्तरफलापत्तेः नानात्वाविशेषादित्यर्थः। **एवमामुष्मिकव्यवहारोऽप्यसङ्गत इति स्थितम्॥**

**स्यादेतत्**—अथैवं मन्यसे—**विशिष्टकार्यकारणभावनिबन्धनः सर्व एवायम्**—अनन्तरोदितः **ऐहिकामुष्मिकव्यवहारः।** तथाहीत्यादि। **विशिष्टाम्**—अपेक्षकार्यजननसमर्थां **रूपादिसामग्रीं प्रतीत्य विशिष्टं संवेदनमुपजायते। ततश्च तदेव**—सवेदनं **तस्य**—रूपादेः **ग्राहकमभिधीयते; न पुनरन्यत्**—संवेदनान्तरम्, **अतिप्रसङ्गात्। एवं स्मरणाद्यपि भावनीयं** तत्सस्कारनिबन्धनत्वेन **इति॥**

**कृतनाशाकृताभ्यागमप्रसङ्गोऽप्यत्र**—विशिष्टकार्यकारणभावपक्षे **अनवकाश एव।** कथमित्याह—**क्षणभेदेऽपि** सति **उपादानोपादेयभावेन,** हेतुफलभावेनेत्यर्थः। **एकस्यामेव सन्ततौ** किमित्या[3]ह—**आहितसामर्थ्यस्य कर्मणः** प्रतीत्य भवनद्वारेण **फलदानात्** कारणात्, **अतो य एव सन्तानः कर्ता** सामान्येन **स एव (उप)भोक्तेति,** यथोक्तमसद्वृद्धैः—

( विवरणम् )

(२२) **तत्संस्कारनिबन्धनत्वेने**ति। तस्य—ज्ञानस्य संस्कारः—वासनारूपो निबन्धनं—कारणं यस्य स्मरणादेस्तत् तथा तस्य भावः—तत्त्वं तेन॥

१ 'विरागविरागमुक्ती' इति ङ-पाठ.। २ 'सन्तानान्तरे सन्तानान्तर०' इति ङ-पाठ.। ३ 'त्याह हित०' इति ङ-पाठ.।

( मूलम् )

**'यः कुशले प्रवर्त्तते स यद्यपि तदैव सर्वथा विनश्यति'[1] तथापि निरुध्यमानः स्वानुरूपकार्योत्पादनसमर्थं[2] सामर्थ्यं विज्ञानसन्ततौ आधाय निरुध्यते। यतः सामर्थ्यविशेषादुत्तरोत्तरक्षणपरिणामेन कालान्तरपरिणामसञ्ज्ञातवासनापरिपाकात्मकारिप्रत्ययसमवधानोपनीतप्रबोधात् फलमिष्टमनिष्टं चोपजायते, ततो न यथोक्तदोषः। प्रतीतश्चा-**

---

( स्वो० व्या० )

"यस्मिन्नेव तु सन्ताने आहिता कर्मवासना।
फलं तत्रैव सन्ताने कर्पासे रक्तता यथा॥"[3]

**तथाहि–यः कुशले प्रवर्त्तते स यद्यपि तदैव**–प्रवृत्तिकाल एव **सर्वथा विनश्यति तथापि निरुध्यमानः स्वानुरूपकार्योत्पादनसमर्थं सामर्थ्यं** विशिष्टं प्रतीत्योत्पादेन **विज्ञानसन्ततावाधाय निरुध्यते। यतः सामर्थ्यविशेषा**दाहितात् **उत्तरोत्तरक्षणपरिणामेन** प्रशान्तवाहितया **कालान्तरपरिणामेन सञ्ज्ञातश्चासौ वासनापरिपाकश्च,** स एव **आत्मकारी** चासौ **प्रत्ययश्च** तस्य **समवधानं** तेन **उपनीतप्रबोधात्** सामर्थ्यविशेषात् **फलमिष्टमनिष्टं चोपजायते[4] ततो न यथोक्तदोष** ऐहिकामुष्मिकव्यवहारोच्छेदलक्षणः।

---

( विवरणम् )

(१४) **प्रशान्तवाहितयेति।** प्रशान्तः–निरुत्सुकः सन् वहति[5]–प्रवर्त्तते सर्वकार्येषु यः स तथा तस्य भावः–तत्ता तया। कुशलानुष्ठातृपुरुषापेक्षया चेदं विशेषणम्, अकुशलानुष्ठायिनस्त्वप्रशान्तवाहितैव॥

(५–७) **कालान्तरपरिणामसञ्ज्ञातवासनापरिपाकात्मकारिप्रत्ययसमवधानोपनीतप्रबोधादिति** सूत्रम्। अत्रैवं समासः–कालान्तरपरिणामेन सञ्ज्ञातो वासनायाः परिपाको यस्य सामर्थ्यविशेषस्य सः, तथाऽऽत्मानं कार्यसम्बन्धिनं कुर्वत इत्येवंशीला आत्मकारिणः, ते च ते प्रत्ययाश्च–कारणानि तेषां समवधानं–निकटीभावः तेनोपनीतः–ढौकितः प्रबोधो यस्य स तथा। ततः कालान्तरपरिणामेन सञ्ज्ञातो वासनापरिपाकश्चासौ आत्मकारिप्रत्ययसमवधानोपनीतप्रबोधश्च तस्मात् सामर्थ्यविशेषात्॥

(१६-१७) **इष्टमनिष्टं चोपजायत इति।** प्रशान्तवाहितायामिष्टम्, अन्यथा त्वनिष्टमित्यर्थः॥

---

१ सन्तुलनार्थं द्रष्टव्ये १३१ तमं पृष्ठं १३२ तमं च। २ 'त्पादने समर्थं' इति क–पाठः। ३ अनुष्टुप्। ४ 'जायतेऽतो न' इति ङ–पाठः। ५ 'वहते प्रवर्तते' इति च–पाठः।

(मूलम्)

यमर्थः। तथाहि–रसायनादिभिः प्रथमोपनिपातवेलायामाहितो विशेषो [1]देहे तदुत्तरोत्तरावस्थाभेदोपजननेन पश्चाद् देहाद्यतिशयस्य बल-मेधा-ऽऽरोग्यादेर्निष्पादकः, तथा लाक्षारसनिषेकोपनीतसामर्थ्यं मातुलिङ्गकुसुममुत्तरोत्तरविशेषोपजननेन फलोदरान्तवर्तिनः केशरस्य [2]रक्तताहेतुर्भवत्येवेति दृष्टत्वान्मुच्यतामभिनिवेशवैशसम् ॥

यच्चोक्तम्[3]–'मुक्तिरपि प्राणिनामसङ्गतैवेत्यादि यावदयं च प्रतिक्षणनिरन्वयनश्वरत्वे सत्यात्मादिवस्तुनो न घटामुपैति' इति, तदप्ययुक्तम्, प्रतिक्षणनिरन्वयनश्वरात्मपक्ष एव युज्यमानत्वात्। तथाहि–नैरात्म्यवादिनः क्षणिकाः पदार्था यथाहेतुसन्निधानं वि-

(स्वो० व्या०)

प्रतीतश्चायमर्थो लोकेऽपि। तथाहि–रसायनादिभिः–सञ्जीवनादिलक्षणैः [4]प्रथमोपनिपातवेलायामाहितो विशेषो जरादिविघातबीजलक्षणः [5]देहे तदुत्तरोत्तरावस्थाभेदोपजननेन–विशिष्टविशिष्टतरभेदतः पश्चाद् देहा(द्य)तिशयस्य–प्रकृष्टदेहादेः बल[6]मेधारोग्यादेर्निष्पादको भवति। निदर्शनान्तरमाह तथेत्यादिना। तथा लाक्षारसनिषेकोपनीतसामर्थ्यं मातुलिङ्गकुसुमं–बीजपूरकपुष्पमुत्तरोत्तरविशेषजननेन तत्सन्तान एव फलोदरान्तरवर्त्तिनः केशरस्य मातुलुङ्गसम्बन्धिन एव रक्तताहेतुर्भवत्येव। इति–एवं [7]दृष्टत्वात् कारणात् मुच्यतामभिनिवेशवैशसम्–अभिनिवेशव्यसनम् ॥

यच्चोक्तं[8] सिद्धान्तवादिना–'मुक्तिरपि [9]प्राणिनामसङ्गतैवेत्यादि यावदयं च प्रतिक्षणनिरन्वयनश्वरत्वे सत्यात्मादिवस्तुनो न घटामुपैति' तदप्ययुक्तम्। कुत इत्याह–प्रतिक्षणनिरन्वयनश्वरात्मपक्ष एव युज्यमानत्वात् मुक्तेः। एतदेवाह तथाहीत्यादिना। तथाहीति पूर्ववत्। नैरात्म्यवादिनः क्षणिकाः पदार्था यथाहेतुसन्निधानं ते विक्रियामात्मसात्कुर्वाणाः

(विवरणम्)

(२४-२५) नैरात्म्यवादिनः क्षणिकाः पदार्था इति। नैरात्म्यवादिनः–बौद्धस्य मते क्षणिकाः [10]पदार्थाः विज्ञानसन्तानरूपा एवात्र गृह्यन्ते, तेषामेव 'समुपरोधहेतुभिर्दण्डादिभिर्यदा पीड्यन्ते' इत्यादि [11]विशेषणानां घटमानकत्वात् ॥

---

१ 'देहतदुत्तरो०' इति ग–पाठ। २ 'रक्ततो हेतु०' इति क–पाठ। ३ १३२तमे पृष्ठे। ४ 'प्रथमोपरिपात०' इति क–पाठ। ५ 'देहोत्तरोत्तरा०' इति ङ–पाठ। ६ 'मेधारोग्यनिष्पादको' इति ङ–पाठ। ७ 'दृष्टान्तत्वात्' इति ङ–पाठ। ८ १३२तमे पृष्ठे। ९ 'प्राणिनामसम्भवेत्यादि' इति क–पाठ.। १० 'पदार्थों स(?)विज्ञान०' इति ख–पाठः। ११ 'विशेषाना' इति ख–पाठ.।

( मूलम् )

क्रियामात्मसात्कुर्वाणाः समुपरोधहेतुभिर्यदा पीड्यन्ते दुःखविशेषाध्यासितोत्तरक्षणोत्पत्तितस्ततस्ते निर्विद्युक्तोत्तरोत्तरक्षणसमुत्पादान्निर्विण्णाः तदुत्तरोत्तरश्रुतभावनादिना[1] अक्लिष्टानेकक्षणपरम्परोत्पादेन दान-दम-संयमाद्यनेकप्रकारशुभधर्माध्यासाद्[2] रागादिबीजोन्मूलनसमर्थमार्गभावनातः प्रतिकलमवदायमानविशुद्धपर्यन्तवर्त्तिक्षणोत्पादाधिगतविमुक्तयः कथ्यन्त इत्यनवद्यम्; अन्यथाऽऽत्मनो व्यवस्थितत्वाद् वेदनाऽभावाद् भावेऽपि विकारान्तराभावात् प्रतिपक्षाभ्यासेनाप्यनाधेयातिशयत्वान्मुक्त्यसम्भवः। इत्येतदपि तत्त्वापरिज्ञानविजृम्भितमेव, भवत्पक्षे कार्यकारणभावस्यैवायोगात्, अयोगश्च विकल्पानुपपत्तेः। तथाहि–तत् कार्यमुत्पद्यमानं नष्टाद्

---

( स्वो० व्या० )

क्षणिकतयैव समुपरोधहेतुभिः–ज्वरादिभिः यदा पीड्यन्ते दुःखविशेषाध्यासितोत्तरक्षणोत्पत्तितः प्रबन्धेन ततस्ते–क्षणिकाः पदार्था निर्विद्युक्तोत्तरोत्तरक्षणसमुत्पादात् प्रबन्धेन निर्विण्णाः सन्तः तदुत्तरोत्तरश्रुतभावनादिना अक्लिष्टानेकक्षणपरम्परोत्पादेन दान-दम-संयमाद्यनेकप्रकारशुभधर्माध्यासात्–प्रस्तुतधर्माध्यासेन रागादिबीजोन्मूलनसमर्थमार्गभावनातः, नैरात्म्यभाव इत्यर्थः, प्रतिकलं कलां कलां प्रति अवदायमानाः-शुद्ध्यमानाश्च ते विशुद्धपर्यन्तवर्तिक्षणोत्पादाधिगतविमुक्तयश्चेति [3]समासः त एवम्भूताः कथ्यन्त इत्यनवद्यम्। इत्थं चैतदङ्गीकर्त्तव्यमिति विपक्षे बाधामाह अन्यथेत्यादिना। अन्यथा–एवमनभ्युपगमे आत्मनो व्यवस्थितत्वात् अप्रच्युतानुत्पन्नस्थिरैकस्वभावतया वेदनाऽभावात् भावेऽपि वेदनाया विकारान्तराभावात् प्रतिपक्षाभ्यासेनापि शास्त्रविहितेन अनाधेयातिशयत्वाच्च कारणात् मुक्त्यसम्भवः। इति–एवं पूर्वपक्षमाशङ्क्याह सिद्धान्तवादी–एतदपि–अनन्तरोक्तं तत्त्वापरिज्ञानविजृम्भितमेव। कथमित्याह–भवत्पक्षे कार्यकारणभावस्यैवायोगात् कारणात्। अयोगश्च अस्य विकल्पानुपपत्तेः। एनामेवाह तथाहीत्यादिना। तथाहीति पूर्ववत्। तत् कार्यमुत्पद्यमानं नष्टाद्

---

१ 'भावनादिना क्लिष्टा' इति ग–पाठः। २ 'शुभकर्मा०' इति ग–पाठः। ३ 'समासत एवम्भूताः' इति ङ–पाठः।

( मूलम् )

**वा हेतुत उत्पद्येतानष्टाद् वा नष्टानष्टाद् वेति। कारणमप्यनेकमेकस्वभावस्य कार्यस्य जनकं भवेत्, यद्वाऽनेकस्वभावस्य, अथवैकमेकस्वभावस्य, यदि वा अनेकस्वभावस्येति सर्वथाऽपि दोषः। तथाहि—न नष्टादुत्पद्यते, तस्य तदानीमसत्त्वात् तदहेतुकत्वापत्तेः, सदाभावाभावप्रसङ्गात्। नाप्यनष्टात्, कार्य-कारणयोर्यौगपद्यापत्तेः, सव्येतरगोविषाणादिषु तदनभ्युपगमात्, अभ्युपगमे च प्रतीतिविरोधात्। नापि नष्टानष्टात्, नियोगतो विरोधापत्तेः, तस्यैव तथाभवनायोगात्, योगेऽप्यभ्युपगमप्रकोपादिति ॥**

**अथ तुलोन्नामावनामवद्धेतुविनाशकाले कार्योत्पादान्नायं दोष**

---

( स्वो० व्या० )

**वा हेतुत उत्पद्येत** तदभावेऽ**नष्टाद् वा** सद्भाव[1] एव **नष्टानष्टाद् वेति।** परिणतिमत्[2] **कारणमपि** तत् **अनेकं**—रूपादि **एकस्वभावस्य कार्यस्य**—विज्ञानादेः **जनकं भवेत्, यद्वाऽनेकस्वभावस्य** चित्रधर्मणः। **अथवैकं**[3] कारणं—रूपाद्येव **एकस्वभावस्य**—रूपादेरेव कार्यस्य। **यदि वाऽनेकस्वभावस्य**—कार्यस्य एकमेव कारण**मिति** एतावन्तः पक्षाः। इह च **सर्वथाऽपि दोषः।** तमाह **तथा**हीत्यादिना। तथाहि—**न नष्टादुत्पद्यते** कारणात् कार्यम्, **तस्य**—नष्टस्य **तदानीं**—कार्यकाले **असत्त्वात्, तदहेतुकत्वापत्तेः** तस्य—कार्यस्याहेतुकत्वापत्तेः। एवं च **सदाभावाभावप्रसङ्गात्,** तस्याहेतुकत्वाविशेषेणेति भावः। **नाप्यनष्टात्,** कारणात् कार्यमुत्पद्यत इति प्रक्रमः। कुत इत्याह—**कार्य-कारणयोर्यौगपद्यापत्तेः।** ततः किमित्याह—**सव्येतरगोविषाणादिषु तदनभ्युपगमात्**—कार्यकारणभावानभ्युपगमात्, **अभ्युपगमे**ऽपि तत्र कार्यकारणभावस्य **प्रतीतिविरोधात्। नापि नष्टानष्टात्** कारणात् कार्यमुत्पद्यते, **नियोगतो विरोधापत्तेः,** नष्टानष्टविरोधस्य अनुभवा-ऽनुमानाभ्यामविरोधेऽप्यभ्युपगमविरोधादित्यर्थः। तथा चाह—**तस्यैव**—कारणस्य **तथा**—कार्यतया **भवनायोगात्, योगे**ऽपि तत्तत्स्वभावतया **अभ्युपगमप्रकोपादिति ॥**

**अथ तुलोन्नामावनामवदि**ति निदर्शनम्। **हेतुविनाशकाले कार्योत्पा-**

---

१ 'तद्भाव एव' इति ङ-पाठ । २ 'णतिमत. कारण०' इति ङ-पाठ । ३ 'अथैक' इति ङ-पाठ ।

( मूलम् )

इति समाधिरास्थीयते। तत्रापि वक्तव्यम्–कोऽयं हेतुविनाशः? किं हेतुस्वभाव एव, यथाऽऽहुः–"क्षणस्थितिधर्मा[2]भाव एव नाश इति?" किं वा हेतुप्रत्यस्तमयः, यथाऽऽहुः–"न भवत्येव केवलम्"?। किञ्चातः यदि हेतुस्वभावः सैव हेतु-फलयोर्यौगपद्यापत्तिः, तन्नाशोत्पादयोरेव तत्त्वात्, तयोश्च यौगपद्याभ्युपगमात्। अथ हेतुप्रत्यस्तमयः, न तस्य कार्योत्पादसमानकालता, निःस्वभावत्वेन कादाचित्कत्वायोगात्, त[1]त्त्वे वा तस्य सहेतुत्ववस्तुत्व(?त्वादि)प्रसङ्गादिति ॥

स्यादेतद् द्वितीये क्षणे कार्यस्य सत्तोत्पादात्मिका। प्रथमे तु कारणं जातम्। तच्चाविनष्टमेव तदा। स हि तस्य स्वसत्तायाः कालः, क्षणभावित्वात् तु तत् फलकाले निवर्त्तते, अनुवृत्तावपि तस्य नैरर्थक्यं

( स्वो० व्या० )

दात् कारणात् नायं दोषः–अनन्तरोदित इति समाधिरास्थीयते। तत्रापि–समाधौ वक्तव्यं भवता–कोऽयं हेतुविनाशो नाम? । किं हेतुस्वभाव एव हेतुविनाशो यथाऽऽहुः[3] तार्किकचूडामणयः–"क्षणस्थितिधर्माभाव एव नाश इति"? किं वा हेतुप्रत्यस्तमयः–हेतुविनाशः यथाऽऽहुः त एव–"न भवति एव केवलम्" इति? । किञ्चातः? उभयथाऽपि दोषः । तमाह–यदि हेतुस्वभावः हेतुविनाशः सैव हेतु-फलयोः । किमित्याह–यौगपद्यापत्तिः । कथमित्याह–तन्नाशोत्पादयोरेव–हेतुफलनाशोत्पादयोरेव तत्त्वात्–हेतुफलतत्त्वात् तयोश्च–तन्नाशोत्पादयोर्यौगपद्याभ्युपगमादिति ॥

अथ हेतुप्रत्यस्तमयः–हेतुविनाशः न तस्य–हेतुप्रत्यस्तमयस्य कार्योत्पादसमानकालता। कुत इत्याह–निःस्वभावत्वेन हेतुना कादाचित्कत्वायोगात् तस्य तत्त्वे वा–कादाचित्कत्वे वा तस्य सहेतुत्ववस्तुत्वादिप्रसङ्गादिति ॥

स्यादेतदिति पूर्वपक्षोपन्यासः । द्वितीये क्षणे–कारणानन्तरभाविनि कार्यस्य सत्ता। किम्भूतेत्याह–उत्पादात्मिका। प्रथमे तु क्षणे कारणं जातम्। तच्च कारणमविनष्टमेव तदा–स्व[4]क्षणे । किमित्यत आह–स यस्मात् तस्य–कारणस्य स्वसत्तायाः कालो वर्त्तते क्षणभावित्वात् तु तत्–कारणं फलकाले निवर्त्तते, द्वितीयक्षण इत्यर्थः । अनुवृत्तावपि तस्य–कारणस्य फलकाले नैरर्थक्यं

१ 'तत्त्वे वा, सहेतु०' इति ग–पाठः । २ 'भावो नाश०' इति ङ–पाठः । ३ 'तथाऽऽह' इति ङ–पाठः । ४ 'स्वलक्षणे' इति ङ–पाठः ।

(मूलम्)

**निष्पत्तेस्तदानीं कार्यस्य, तदित्थं कारणक्षणानन्तरभावित्वात् कार्यस्य अविनष्टाच्च हेतोरुत्पादः, न च यौगपद्यप्रसङ्ग इति। एतदप्यचारु, स्वतन्त्रविरोधात्, कारणभावाविच्छेदित्वेन कार्यभावस्यान्वयापत्तेः, भावा[1]विच्छेदस्यान्वयत्वात्, तस्य चेत्थमङ्गीकरणात्, सदैव भावाभावाभावादिति। कारणभावादन्य एव कार्यभाव इति चेत्, न, एकान्तेन अन्यत्वासिद्धेः, तत्त्वतो भेदकाभावात् तदतिरिक्तक्षणानभ्युपगमात्, अभ्युपगमे तदक्षणिकत्वप्रसङ्गात् तस्याप्यपरक्षणानुपपत्तेः अनवस्थाप्रसङ्गात्, अप्रसङ्गेऽपि तद्भावाभेदकत्वेनान्वयापत्तेः,**

(स्वो० व्या०)

**निष्पत्तेः** कारणात् **तदानीं**—द्वितीयक्षणे **कार्यस्य, तदित्थं कारणक्षणानन्तरभावित्वात् कार्यस्य।** किमित्याह—**अविनष्टाच्च हेतोरुत्पादः** कार्यस्य **न च यौगपद्यप्रसङ्गो** हेतु-फलयोरिति। एतदाशङ्क्याह—**एतदप्यचारु।** कुत इत्याह—**स्वतन्त्रविरोधात्।** एनमेवाह—**कारणभावाविच्छेदित्वेन** उक्तनीतेः **कार्यभावस्य अन्वयापत्तेः** कारणात्। आपत्तिश्च **भावाविच्छेदस्यैवान्वयत्वात् तस्य च**—भावाविच्छेदस्य **इत्थम्**—उक्तनीत्याऽ**ङ्गीकरणात्।** भावार्थमाह—**सदैव भावाभावाभावात्,** नाशाव्यवधानादिति। **कारणभावादन्य एव कार्यभाव इति चेत्,** नैव भावाविच्छेद इत्यभिप्रायः। एतदाशङ्क्याह—**न, एकान्तेन**—सर्वथा [2]**अन्यत्वासिद्धेः।** असिद्धिश्च **तत्त्वतः**—परमार्थेन **भेदकाभावात्।** अभावश्च **तदतिरिक्तक्षणानभ्युपगमात्**—कारणभावाद्यतिरिक्तक्षणानभ्युपगमात्। **अभ्युपगमे** तदतिरिक्तक्षणस्य **तदक्षणिकत्वप्रसङ्गात्**—क्षणस्याक्षणिकत्वप्रसङ्गात्। प्रसङ्गश्च **तस्यापि**—क्षणस्य **अपरक्षणानुपपत्तेः।** अनुपपत्तिश्च **अनवस्थाप्रसङ्गात्** तस्याप्यपरक्षणाभावेनाक्षणिकत्वात्, क्षणोऽस्य

(विवरणम्)

(१८) **नाशाव्यवधानादिति।** नाशेनाव्यवधानं नाशाव्यवधानं तस्माद्। भावानन्तर भाव एवोत्पन्नो न तुच्छोऽभाव इति भावाविच्छेदादन्वय एव ॥

(२१-२२) **कारणभावाद्यतिरिक्तक्षणानभ्युपगमादिति।** कारणस्य भावः—सत्ता कारणभावः। 'आदि'शब्दात् कार्यभावपरिग्रहः। तदतिरिक्तक्षणस्यानभ्युपगमात् ॥

१ 'विच्छेदस्त्वान्वय०' इति क-पाठ। २ 'अन्यथासिद्धे' इति ङ-पाठ।

(मूलम्)

**उभयत्र भावाविशेषादिति । आकारादिभेदादविशेषासिद्धिरिति चेत्, न, तद्वद् भावभेदाभावात् तथाऽनुभवसिद्धत्वात्, अन्यथा अन्यतराभावापत्तेः, तदात्मनाऽपि विशेषात्, [1]तत्तथाऽभावेन तददलत्वाच्चेति ॥**

**स्यादेतत्–हेत्वनिवृत्तिपक्षे तत्तादवस्थ्येन हेतुफलभावानुपपत्तेः निवृत्त्यनिवृत्तिपक्षस्य च[2] विरुद्धत्वात्, तन्निवृत्तावेव तदनन्तरभावित्वेन तद्भाव[3]सिद्धिः गत्यन्तराभावादिति, न, अनेकदोषप्रसङ्गात्,**

---

(स्वो० व्या०)

अस्तीति क्षणिक इति कृत्वा । **अप्रसङ्गेऽपि** अनवस्थायाः **तद्भावाभेदकत्वेन**–कारणादिभावाभेदकत्वेन हेतुना । किमित्याह–**अन्वयापत्तेः** । भावार्थमाह–**उभयत्र**–कारणे कार्ये च **भावाविशेषादिति । आकारादिभेदात्** तयोः **अविशेषासिद्धिरिति चेद्** भावस्य । एतदाशङ्क्याह–**न, तद्वत्**–आकारादिभेदवत् **भावभेदाभावात्**, कार्य-कारणयोरिति प्रक्रमः । अभावश्च **तथाऽनुभवसिद्धत्वात्** भावाभेदतयेति । इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा**–एवमनभ्युपगमे **अन्यतरस्य**–कारणतादेर**भावापत्तेः** । आपत्तिश्च **तदात्मनाऽपि**–भावात्मनाऽपि **विशेषात्** । उपचयमाह–तथा **तत्तथाऽभावेन** तस्य–कारणस्य तथा–कार्यतया अभावेन हेतुना । किमित्याह–**तददलत्वाच्चेति** तस्य–कार्यस्यानुपादानत्वाच्चेति । न हि सर्वथा कारणनिवृत्तौ अभावादृते कार्यस्योपादानमिति भावनीयम् ॥

**स्यादेतत्–हेत्वनिवृत्तिपक्षे** कारणनित्यतया **तत्तादवस्थ्येन** तस्य–हेतोः तादवस्थ्येन हेतुना **हेतुफलभावानुपपत्तेः निवृत्त्यनिवृत्तिपक्षस्य च** हेतुगतस्य **विरुद्धत्वात् तन्निवृत्तावेव**–हेतुनिवृत्तावेव **तदनन्तरभावित्वेन**–हेत्वनन्तरभावित्वेन **तद्भावसिद्धिः**–फलभावसिद्धिः **गत्यन्तराभावादिति** ।

---

(विवरणम्)

(१७-१८) **भावात्मनाऽपि विशेषादिति** । यदि हि कार्य-कारणयोः परस्परं भावात्मनाऽपि–सत्तारूपेण विशेषः स्यात् तदाऽन्यतरस्य भाव एव स्यात्; यतो भावात्मना विशेषस्तदैव भवति, यदि एकः कश्चिद् भावः सत्ताभावो भवतीति ॥

---

१ 'तत्तथाऽभावेनातददलत्वा०' इति **क**–पाठः । २ 'च' इति पाठो **ग**–प्रतौ नास्ति । ३ 'सिद्धेः गत्य०' इति **ग**–पाठः ।

( मूलम् )

**तन्निवृत्तावेव तदनन्तरभावित्वे तस्य परमार्थतोऽसत एव सद्भावापत्तिः, अपरस्य तथाभाविनोऽभावात्, सा चायुक्ता निरुपाख्यस्य खरविषाणादेरिव जन्मार्थविशेषायोगात्, अन्यथा सर्व एवासन्तः यतः कुतश्चिज्जन्मासादयेयुरिति हेतुफलनियमो न भवेत् ॥**

**स्यादेतत् प्रतिनियतशक्तयो हि भावास्तेभ्यः कुतश्चित् किञ्चिदेवोत्पद्यते, न सर्वमसत्त्वाविशेषेऽपीति, तदयुक्तम् । यदि हि कार्यैः संक्लि(?श्लि)ष्टमूर्त्तयः प्रत्ययाः स्युस्तदा तेषां प्रतिनियतकार्यसम्बन्ध-**

( स्वो० व्या० )

एतदाशङ्क्याह–**न, अनेकदोषप्रसङ्गात्** । एनमेवाह–**तन्निवृत्तावेव**–हेतुनिवृत्तावेव **तदनन्तरभावित्वे**–हेत्वनन्तरभावित्वे (**तस्य**–) फलस्य **परमार्थतः असत एव सद्भावापत्तिः** । कथमित्याह–**अपरस्य**–कस्यचित् **तथाभाविनः** फलतया भाविनो**ऽभावात्** । **सा चायुक्ता** [1]असत एव सद्भावापत्तिरिति **निरुपाख्यस्य खरविषाणादेरिवेति** निदर्शनं, **जन्मार्थविशेषायोगादिति** युक्तिः । इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा सर्व एवासन्तः** वान्ध्येयादयः **यतः कुतश्चिज्जन्मासादयेयुरिति** कृत्वा **हेतुफलनियमो न भवेत्** ॥

**स्यादेतत्–प्रतिनियतशक्तयो हि** [2]**भावास्तेभ्यः**–भावेभ्यः **कुतश्चित्**–भावात् **किञ्चिदेवोत्पद्यते**, न किञ्चिदेवोत्पद्यते । **न सर्वमसत्त्वाविशेषेऽपि इति** । एतदाशङ्क्याह–**तदयुक्तम्** । कथमित्याह–**यदि हि कार्यैः** [3]**संश्लिष्टमूर्त्तयः प्रत्ययाः स्युस्तदा तेषां**–प्रत्ययानां **प्रतिनियतकार्यसम्बन्ध-**

( विवरणम् )

(१३-१४) **अपरस्य कस्यचित् तथाभाविनः फलतया भाविनोऽभावादिति** । सर्वथा कारणनिर्वृत्तौ कार्यसत्तामङ्गीक्रियमाणाया नास्त्यभावमपहाय अपरः कश्चिद् वस्तुविशेषो यः कार्यरूपतया परिणतिं लभत इत्यर्थः । अतः सामर्थ्यादसत एव सद्भावापत्तिरायाता ॥

(१५) **जन्मार्थविशेषायोगादिति** । जन्म–उत्पादलक्षणो योऽर्थविशेषः–धर्मभेदरूपस्तस्याभावादभावस्य–तुच्छरूपस्य ह्यभावस्य नास्ति जन्मलक्षणार्थविशेषः । अन्यथा वान्ध्येयादीनामपि जन्म स्यात् ॥

(२०-२१) **कार्यैः संक्लि(?श्लि)ष्टमूर्त्तयः प्रत्ययाः स्युरिति** । शक्तिरूपतया यदि कार्याणि कारणेषु भवेयुरित्यर्थः ॥

१ 'असत्य एव' इति ङ–पाठ । २ 'भावा वर्तन्ते तेभ्य' इति ङ–पाठ । ३ 'सङ्क्लिष्टमूर्त्तय.' इति क–पाठ ।

( मूलम् )

भावात् तस्मिन् कार्ये शक्तिनियमः स्यात्। न चैतदेवं, सतोऽसता संश्लेषायोगात्, तस्मान्निरवधिकमेव सामर्थ्यमवस्थितमिति सर्वतः सर्वस्योत्पत्तिप्रसङ्गो दुर्निवारः। स्यादेतत् न दुर्निवारः, सामर्थ्यप्रतिनियमवर्मितेषु भावेषु तदप्रवृत्तेः। यदेव हि यदुत्पादने शक्तं तत एव तदुत्पादः, नान्यतः। सा च तस्य सामर्थ्यप्रतिनियतिः स्वहेतोः तस्याप्यात्मनिमित्तादिति अनादित्वात् कार्यकारणपरम्पराया नानवस्थाऽपीष्टबाधिका। आदौ हि [1]परिकल्प्यमाने तस्याहेतुकत्वं स्यात्। तच्चायुक्तम्, नित्यं सदसत्त्वापत्तेः, अत एव न [2]कार्यसंश्लेषाभावतः कारणस्य निरवधिकसामर्थ्यदोषः हेतुपरम्परातस्तस्यैव तथास्वभावत्वादिति ॥

किञ्च कारणस्य कार्यस्वभाववियोगादेव कारणत्वव्यवस्थितिः।

( स्वो० व्या० )

भावात् कारणात् तस्मिन् कार्ये प्रतिनियत एव शक्तिनियमः [3]स्यात् अवधिभावेनेति भावः। न चैतदेवं कथमित्याह–सतः–कारणभावस्य असता–कार्यभावेन संश्लेषायोगात् तस्मान्निरवधिकमेव सामर्थ्यं कारणभावस्य–अवस्थितम्। इति–एवं सर्वतोऽभावात् सर्वस्योत्पत्तिप्रसङ्गो दुर्निवार इति भावनीयम्। स्यादेतत्–न दुर्निवारः सामर्थ्यप्रतिनियमवर्मितेषु भावेषु–पदार्थेषु तद[4]प्रवृत्तेः–सर्वस्योत्पत्तिप्रसङ्गस्याप्रवृत्तेः। यदेव हि कारणं यदुत्पादने शक्तं–यत्कार्योत्पादने समर्थं तत एव कारणात् तदुत्पादः–तत्कार्यप्रभवः, नान्यतः–कारणान्तरात्। सा च तस्य सामर्थ्यप्रतिनियतिः विवक्षितकारणस्य स्वहेतोस्तस्यापि एषा आत्मनिमित्तादपरतः। इति–एवमनादित्वात् कार्यकारणपरम्पराया न अनवस्थाऽपि इष्टबाधिका। आदौ हि परिकल्प्यमाने तस्य–कार्यादेरहेतुकत्वं स्यात्। तच्चायुक्तम–हेतुकत्वम्। कुत इत्याह–नित्यं सदसत्त्वापत्तेः, प्रक्रमात् कार्यादेरिति, अत एव न कार्यसंश्लेषाभावतः कारणस्य निरवधिकसामर्थ्यदोषः, हेतुपरम्परातस्तस्यैव–कारणस्य तथास्वभावत्वात्–विशिष्टकार्यजननस्वभावत्वादिति ॥

अभ्युच्चयमाह किञ्चेत्यादिना। किञ्च कारणस्य कार्यस्वभाववियोगादेव

१ 'परिकल्पमाने' इति क–पाठः। २ 'कार्य्यश्लेषाभावतः' इति ग–पाठः। ३ 'स्यात्' इति ग–प्रतौ न विद्यते। ४ 'प्रवृत्तेः सर्वतः सर्व०' इति ङ–पाठः।

(मूलम्)

**यदि हि कार्यस्वभावसम्बद्धं कारणं भवेत् तदा कार्यमपि कारणवन्निष्पन्नमेव। इति किं कुर्वत् कारणं स्यात्?। किञ्च क्रियमाणं कार्यमिति व्यतिरिक्तावधिविकलमेवोक्तवद् विशिष्टं तत्सामर्थ्यमिति यथोक्तदोषाभावः। एतदप्यसमीचीनम्, प्रलापमात्रत्वात्। तथाहि–'यदेव हि यदुत्पादने शक्तं तत एव तदुत्पादः, नान्यतः'[1] इत्यत्र न सामर्थ्यप्रतिनियति[2]स्तदतिरेकेण, अपि तु तत्सत्तामात्रम्। तच्च सर्वासतामविशिष्टम्। इति कथं ततस्तस्यैवोत्पादः?। तस्यैव तथास्वभावत्वादिति चेत्, असत्तामात्रगोचरमिदमस्य अकारणवत्सलत्वं न तदविशेषे विशेषप्रवृत्त्येदमपनेतुं न्याय्यम्। असतः**

---

(स्वो० व्या०)

किमित्याह–**कारणत्वव्यवस्थितिः। यदि हि कार्यस्वभावसम्बद्धं कारणं भवेत् तदा**–तस्मिन् काले **कार्यमपि** [3]**कारणवन्निष्पन्नमेव। इति**–एव **किं कुर्वत् कारणं स्यात्?।** न किञ्चिदपीत्यर्थः। **किञ्च क्रियमाणं कार्यमिति**–एवं **व्यतिरिक्तावधिविकलमेव** अभूतभवनतया **उक्तवद् विशिष्टं** हेतुपरम्परात एव **तत्सामर्थ्यमिति**–एव **यथोक्तदोषाभावः। एतदप्यसमीचीनम्**–अशोभनम्। कुत इत्याह–**प्रलापमात्रत्वात्।** एतदेवाह **तथाहीत्यादिना।** तथाहीति पूर्ववत्। **यदेव हि यदुत्पादने शक्तं तत एव तदुत्पादः, नान्यत इत्यत्र न सामर्थ्यप्रतिनियति**र्भवत्परिकल्पिता **तदतिरेकेण**–अधिकृतशक्त्यतिरेकेण, **अपि तु तत्सत्तामात्रम्**–अधिकृतकारणसत्तामात्रमेकान्तेनैकस्वभाव **तच्च**–तत्सत्तामात्र **सर्वासतामविशिष्टम्**एकस्वभावतया। **इति**–एव **कथं ततः**–तत्सत्तामात्रात् **तस्यैव**–विवक्षितस्य कार्यस्यासत **उत्पाद** इति सर्वासदविशिष्टतया तस्य न युक्तोऽयमित्यभिप्रायः। एतदनादृत्य आह–**तस्यैव**–तत्सत्तामात्रकस्य **तथास्वभावत्वात्**–[4]विवक्षितसज्जननस्वभावत्वात्। **इति चेत्,** एतदाशङ्क्याह–**असत्ते**त्यादि। असत्ता**मा**[5]**त्रगोचरं** वस्तुस्थित्या **इदं**–तथास्वभावत्व नाम **अस्य**–अधिकृतसत्तामात्रस्य **अकारणवत्सलत्वम्**अवधिरहितं तथास्वभावत्व **न** [6]**तदविशेषे**–असत्तामात्रविशेषे सति **विशेषप्रवृत्त्या**–असद्विशेषगोचरतया **इदं**–तथास्वभावत्वमकारणवत्सलाख्य**मपनेतुं न्याय्यम्।** अपनीयते च ततोऽसद्विशेष-

---

१ द्रष्टव्य १४२तम पृष्ठम्। २ 'प्रतिनियमस्तदति०' इति क–पाठ। ३ 'कारणवशान्निष्पन्न०' इति ङ–पाठ। ४ 'विवक्षितासज्जनन०' इति ङ–पाठ। ५ 'मात्रे गोचरं' इति ङ–पाठ। ६ 'तदविशेषे सत्ता०' इति ङ–पाठ।

( मूलम् )

**को विशेष इति चेत्, वयमप्येतदेव ब्रूम इत्यनुपालम्भ एषोऽस्मद्विधानाम् । तत्तथास्वभावत्वविभवप्रतिनियमाददोष इति चेत्, भवत्यदोषो यस्य कस्यचिदसतः तत्सम्पादनेन, नियमतत्सम्पादनं तु तद्विशेषाधायीति तद्विशेषत्वादेव न सर्वथा तदसत्त्वमिति परिचिन्त्यतामेतत् । एवं च निरवधिकसामर्थ्यदोषस्तदवस्थ एव । सति**

( स्वो० व्या० )

भावेनेति भावनीयम् । **असतः को विशेष इति चेत्** निरुपाख्यतया, न कश्चिदित्यर्थः । एतदाशङ्क्याह–**वयमप्येतदेव ब्रूम इति**–एवमु(?मनु)**पालम्भ एषोऽस्मद्विधानां**–सर्वासदविशिष्टजननैकस्वभावतः असद्विशेषभवनवादिपर्यनुयोगपराणाम् । **तत्तथास्वभावत्वविभवप्रतिनियमात्** तस्य–अधिकृतसत्तामात्रस्य तथास्वभावत्वविभवप्रतिनियमात्–कार्यविशेषकरणस्वभावत्वविभवप्रतिनियमा**ददोषः इति चेत्** अनन्तरोदितः । एतदाशङ्क्याह–**भवत्यदोषो यस्य कस्यचिदसतो** यदृच्छया **तत्सम्पादनेन, नियमतत्सम्पादनं तु**–नियमेनासत्त्वविशेषसम्पादनं पुनस्**तद्विशेषाधायि**–अधिकृतसत्तामात्रस्य तथास्वभावत्वविशेषाधायि । **इति**–एवं **तद्विशेषत्वादेव**–अधिकृतसत्तामात्रस्य तथास्वभावत्वविशेषादेव **न सर्वथा तदसत्त्वं**–भाविकार्यासत्त्वमवधिभावेनाधिकृतभावविशेषत्वा**दिति परिचिन्त्यता**मिति । **एवं च** कृत्वा **निरवधिकसामर्थ्यदोषस्तदवस्थ एव** य उक्तः

( विवरणम् )

(११-१२) **सर्वासदविशिष्टजननैकस्वभावतः असद्विशेषभवनवादिपर्यनुयोगपराणा**मिति । असद्विशेषस्य भवनम्–उत्पादं वदतीत्येवंशीलोऽसद्विशेषभवनवादी तत्पर्यनुयोगः परः–प्रकृष्टो येषां ते तथाविधाः । तेषां कुतो यदसद्विशेषभवनमित्याह–अविशिष्टः सन् जननोऽविशिष्टजननः सर्वासतामविशिष्टजनन एकः स्वभावो यस्य वस्तुनस्तत् तथा तस्मात् ॥

(१३) **कार्यविशेषक(?का)रणस्वभावत्वविभवप्रतिनियमा**दिति । कार्यविशेषस्य कारणं–प्रतिनियतकार्यहेतुः स्वभावो यस्य तत् तथा, तस्य भावः कार्यविशेषकारणस्वभावत्वम्, तदेव विभवः–विभूतिस्तस्मात् प्रतिनियमः–नैयत्यं तस्मात् ॥

१ 'तो सिद्विशेष०' इति ङ–पाठः । २ 'विशिष्टजननः सर्वाशतामविशिष्ट०' इति ख–पाठः ।

( मूलम् )

हि बीजादिसत्ताकालेऽङ्कुरादीनां तथाभाविनाऽपि रूपेण सर्वथाऽसत्त्वादङ्कुरादिप्रतिनियतशक्तीदं कारणमित्येवं सावधिकः सामर्थ्यनियमो नास्तीत्ययमर्थोऽस्माभिर्विवक्षितः, स चापरिहृत एव, सर्वथा प्रतियोग्यभावादिति ॥

स्यादेतत्—अङ्कुरादौ यत् सामर्थ्यमुदितं बीजादेस्तत् तदा विशेषतो व्यपदेष्टुमशक्यम्, अवध्यनिष्पत्तेः; तत्र तु तत् सिद्धमेव, यतोऽनन्तरमङ्कुराद्युत्पत्तिः, सति च तादृशि वस्तुनि तथाव्यपदेशनिवृत्तावपि न किञ्चिद् व्याहन्यते; न हि नामायत्ता वस्तूत्पत्तिः, तस्याप्रयोजकत्वादिति। एतदप्ययुक्तम्, तत्त्वतो विहितोत्तरत्वात्। तथाहि—

( स्वो० व्या० )

प्राक्। एतद्भावनायैवाह—सति हीत्यादि। सति यस्माद् बीजादिसत्ताकाले अङ्कुरादीनां—कार्याणां तथा—तत्प्रतिनियततया भाविनाऽपि रूपेण सर्वथाऽसत्त्वात् अङ्कुरादिप्रतिनियतशक्तीदं कारणं—बीजादि इत्येवं सावधिकः सामर्थ्यनियमो नास्तीत्ययमर्थोऽस्माभिर्विवक्षितः प्राक्। स च भवता अपरिहृत एव, सर्वथा प्रतियोग्यभावात्[1], तदभावे स्वभावप्रतिनियमाभावादित्यर्थः ॥

स्यादेतत्—अङ्कुरादौ—कार्ये यत् सामर्थ्यमुदितं बीजादेः—कारणस्य तत् तदा—कारणकाले विशेषतो व्यपदेष्टुमशक्यम्। कुत इत्याह—अवध्यनिष्पत्तेः; तत्र तु—बीजादौ तत् सिद्धमेव सामर्थ्यम्। कथमित्याह—यतोऽनन्तरमङ्कुराद्युत्पत्तिः सति च तादृशि[2] वस्तुनि वस्तुस्थित्या तथाव्यपदेशनिवृत्तावप्यवध्यभावेन न किञ्चिद् व्याहन्यते, तात्त्विकहेतुभावसिद्धेः। न हि नामायत्ता वस्तूत्पत्तिः, तस्याप्रयोजकत्वात् नाम्न इति। एतदाशङ्क्याह—एतदप्ययुक्तं परोक्तम्। कुत इत्याह—तत्त्वतो विहितोत्तरत्वात्।

( विवरणम् )

(१७-१८) तदभावे स्वभावप्रतिनियमाभावादिति। तस्य—प्रतियोगिनः कार्यस्य शक्तिरूपतयाऽपि कारणेऽभावे सति स्वभावे प्रतिनियमस्य—प्रतिनियतस्यैव कार्यस्य कारणं—जनकमित्येवलक्षणस्याभावात् ॥

१ 'भावात् एतदभावे' इति ङ-पाठ.। २ 'तादृशवस्तुनि' इति ङ-पाठ।

(मूलम्)

न बीजादावुदितसामर्थ्यं[1] तदतिरेकेण, अपि तु तत्सत्तामात्रमिति तदेवावर्त्तते । न चाङ्कुरादौ सामर्थ्यमिति तदा परिज्ञानोपायः, सर्वासद्विविक्ततत्सत्तामात्रवेदनात् । न च तत्तत्स्वभावतया तदुपलम्भ एव, सर्वथाऽवध्यभावे तत्तत्स्वभावतासिद्धेः । न च स्वहेतुसामर्थ्यतस्तत्सिद्धिः, तत्राप्युक्तदोषानतिवृत्तेः । न च तत्रापि स्वहेतुसामर्थ्यमेव परिहारः, तुल्यदोषतयोपघातात् । न चानादिहेतुपरम्परा उपघातत्राणम्, अत एव हेतोः, प्रमाणानुपपत्तेश्च, तस्मान्न तत्तथाभावसङ्गतां तद्योग्यतां विहाय अपरस्तत्परिज्ञानो-

(स्वो० व्या०)

एतदेव योजयति **तथाहीत्यादिना** । तथाहि **न बीजादौ**–कारणे **उदितसामर्थ्यं** अङ्कुरादिनिबन्धनं **तदतिरेकेण**–बीजाद्यतिरेकेण, **अपि तु तत्सत्तामात्रं**–बीजादिसत्तामात्रम् । **इति**–एवं **तदेवावर्त्तते**, प्रागुक्तमिति । **न चाङ्कुरादौ**–कार्ये **सामर्थ्यमिति**–एवं **तदा**–बीजकाले **परिज्ञानोपायः** । कुत इत्याह–**सर्वासद्विविक्ततत्सत्तामात्रवेदनात्**–त्रैलोक्यगतासद्विविक्तबीजमात्रवेदनात् । **न च तत्तत्स्वभावतया**–बीजादेरङ्कुरादिजननस्वभावतया **तदुपलम्भ एव**–अङ्कुराद्युपलम्भ एव, उपाय इति वर्तते । कुत इत्याह–**सर्वथाऽवध्यभावे तत्तत्स्वभावतासिद्धेः**[2]–बीजादेरङ्कुरादिजननस्वभावतासिद्धेः[3] । **न च स्वहेतुसामर्थ्यतस्तत्सिद्धिः**–तत्तत्स्वभावतासिद्धिः । कुत इत्याह–**तत्रापि**–स्वहेतुसामर्थ्ये **उक्तदोषानतिवृत्तेः** कारणात् । **न च तत्रापि**–अधिकृतहेतुसामर्थ्ये **स्वहेतुसामर्थ्यमेव परिहारः** अपरहेत्वपेक्षया । कुत इत्याह–**तुल्यदोषतया** कारणेन **उपघातात्** हेतोः । **न चानादिहेतुपरम्परा** प्रागुपन्यस्ता **उपघातत्राणम्** । कुत इत्याह–**अत एव हेतोः**, तुल्यदोषतयोपघातादित्यर्थः । उपचयमाह–**प्रमाणानुपपत्तेश्च**–अनादिहेतुपरम्पराग्राहकप्रमाणाभावात्, आदिपरिकल्पनादोषप्रमाणस्य च जातिरूपत्वादिति । **तस्मादित्यादि** । यस्मादेवं तस्मात् **न तत्तथाभाव-**

(विवरणम्)

(१८-१९) **तत्तत्स्वभावतासिद्धेरिति** । तस्य–बीजादेस्तत्स्वभावता–अङ्कुरादिजननस्वभावता तस्याः सिद्धिः(?द्धेः) ॥

यद्यप्यनादिहेतुपरम्पराग्राहकं प्रमाणं नास्ति तथाप्यादिपरिकल्पनायां दोषास्ते प्रमाणं भविष्यन्तीत्याशङ्क्याह–(२५-२६) **आदिपरिकल्पनादोषप्रमाणस्य च**

१ 'कार्यसामर्थ्यं०' इति क–पाठः । २–३ 'भावताऽसिद्धेः' इति क–पाठः ।

( मूलम् )

**पायः। न विशिष्टं सामर्थ्यं न [1]हेतुफलभावनियमः [2]सर्वथाऽसदुत्पद्यत इति प्राप्त्या न क्वचिद् व्यवस्थासिद्धिरिति ॥**

**स्यादेतन्न वै काचिदुत्पत्तिर्भावव्यतिरिक्ताऽस्ति यामाविशदसदुत्पद्यत इत्युच्यते, किन्तु कुतश्चिद् वस्तुनोऽनन्तरं कस्यचिद् वस्तुनो नियमवतः सत्ता सैव [3]तदात्मिकोत्पत्तिरभिधीयते। न त्वियं केनचित् सम्बद्धा। सा च प्राग् नासीदित्यसदुत्पद्यत इति व्यवह्रियते, न पुनरसतोऽवस्थान्तरावेशस्तदिति। अत्रोच्यते–यत्किञ्चिदेतत्,**

( स्वो० व्या० )

**सङ्गतां**–न कारणस्यैव कार्यभावसङ्गतां **तद्योग्यतां**–कार्ययोग्यतां **विहाय अपरः**–अन्य**स्तत्परिज्ञानोपायः**–अधिकृतसामर्थ्यपरिज्ञानोपायः। **न विशिष्टं सामर्थ्यं** तत्तथाभावसङ्गतां तद्योग्यतां विहायावध्यभावेन **न हेतुफलभावनियमः** [तत्तथाभावसङ्गतां तद्योग्यतां विहाय] **सर्वथाऽसदुत्पद्यते। इति**–एवं **प्राप्त्या न क्वचिद् व्यवस्थासिद्धि**र्विशिष्टसामर्थ्यादा**विति** ॥

**स्यादेतत्–न वै काचिदुत्पत्तिर्भावव्यतिरिक्ताऽस्ति**–विद्यते **याम्**–उत्पत्ति**माविशत्** सत् **असदुत्पद्यत** [4]**इत्युच्यते, किन्तु कुतश्चिद् वस्तुनो** विशिष्टाद**नन्तरं कस्यचिद् वस्तुनो नियमवतः**–अव्यभिचारिणः **सत्ता** भवति, **सैव**–सत्ता **तदात्मिका**–सत्तात्मिका **उत्पत्तिरभिधीयते। न त्वियम्**–उत्पत्तिः **केनचिद्** वस्तु**सम्बद्धा। सा च**–उत्पत्तिः **प्राग्**–अधिकृतक्षणान्ना**सीदिति** कृत्वा **असदुत्पद्यत इति**–एवं **व्यवह्रियते; न पुनरसतः अवस्थान्तरावेशस्तत्** सद**िति**। एतदाशङ्क्याह–**अत्रोच्यते। यत्किञ्चित्**–

( विवरणम् )

**जातिरूपत्वादिति**। आदिपरिकल्पनायां दोषाः–नित्यं सत्त्वमसत्त्वं चेत्या[5]दयस्त एव प्रमाणं तस्य पुनर्जातिरूपत्वात्। अयमभिप्रायः–अनादिहेतुपरम्पराग्राहकप्रमाणस्याभावे आदिपरिकल्पनादोषप्रमाणं प्रमाणाभासमेव बोध(?ध्य)स्य(?म्) ॥

१ 'हेतूत्पत्तिफलभावनियम' इति क–पाठ। २ 'सर्वथा सदु०' इति क–पाठ। ३ 'तदात्मकोत्पत्ति०' इति क–पाठ। ४ 'इत्युच्येत' इति ङ–पाठ। ५ 'दयस्त एतत् प्रमाण तत् प्रमाण तस्य' इति ख–पाठ।

(मूलम्)

अविचारितरमणीयत्वात् । तथाहि–नोत्पत्तिर्भावव्यतिरिक्ता । न चासौ गर्भवत् कारणान्निष्क्रामति, न[1] चाम्बरतलात् पतति, न चास्ति सर्वथा प्राक्, न चासत् सद् भवति, भवति च कस्यचिदनन्तरं–मरणसमय एवास्य रहितस्तदन्वयेन तत्सामर्थ्यप्रभवो[2] नियमवाँश्चेति को न्वस्वप्नायमान इत्थं भाषते, अबोधग्रहगृहीताच्चापरः अनुवक्तीत्यपकर्ण्यमेतत्। आह–एवमपि पारिशेष्या[3]नाश्रयणे हेतुफलभावोच्छेददोषोऽनिवारितप्रसरः, [4]हेत्वनिवृत्तिपक्षे तत्तादवस्थ्यात्,

(स्वो० व्या०)

असारमेतत्–अनन्तरोक्तम्, अविचारितरमणीयत्वात् हेतोः। एतदेवाह (तथाहीत्यादिना) नोत्पत्तिर्भावव्यतिरिक्ता। न चासौ–भावो गर्भवत् कारणान्निष्क्रामति, मातुरुदरादिति गम्यते, न चाम्बरतलात्–आकाशतलात् पतति सहसा, न चास्ति सर्वथा–सर्वैः प्रकारैः प्राग्, उत्पत्तेरिति प्रक्रमः, न[5] चासत् सद् भवति, अभावस्य भावत्वविरोधात्, भवति च कस्यचित्–वस्तुनोऽनन्तरं मरणसमय एवास्य–कस्यचित् रहितस्तदन्वयेन–तत्तद्भावापत्त्यभावतः तत्सामर्थ्यप्रभवः–अनन्तरातीतवस्तुशक्तिजन्मा नियमवाँश्च भावः स एव नापरः। इति को न्वस्वप्नायमानः सन् इत्थं भाषते? । अबोधग्रहगृहीताच्चापरः–अन्यः अनुवक्ति [6]'को न्वपरः?', न कश्चिदित्यर्थः । इत्यपकर्ण्यमेतत्। आह–एवमपि सति पारिशेष्यानाश्रयणे हेतुफलभावोच्छेददोषः। किमित्याह–अनिवारितप्रसरः । कथमित्याह–हेत्वनिवृत्तिपक्षे तत्तादव-

(विवरणम्)

(६) मरणसमय एवास्येति । विनाशसमये एव मृदादेर्घटादिरुत्पद्यत इत्यर्थः । एतच्च 'कस्यचिदनन्तरम्' (५-६) इत्यस्यैव सौत्रपदस्य व्याख्यानं कृतं सुखावबोधाय सूत्रकृता ॥

(२०) पारिशेष्यानाश्रयणे इति । हेतोरनिवृत्तिपक्षे साङ्ख्याभिमते तादवस्थ्याद्धेतोर्न घटते कार्यम् । निवृत्त्यनिवृत्तिपक्षस्तु जैनाभिमतो विरुद्ध इति पारिशिष्याद् बौद्धाभिमत एव वस्तुनोऽनन्तरं वस्तूत्पद्यत इति । अस्मिन् पक्षे कार्यकारणभावव्यवस्थितिरिति पारिशेष्यं तस्यानाश्रयणे सति ॥

१ 'न वाऽम्बर०' इति ग–पाठः । २ 'प्रभवनियम०' इति क–पाठः । ३ 'नाश्रयेण हेतुफल०' इति क–पाठः । ४ 'हेतुनिवृत्तिपक्षे' इति ग–पाठः । ५ 'नैवासत्' इति क–पाठः । ६ 'कोऽपरः इति ङ–पाठः । ७ 'इत्यसन्(?त्)पक्षे' इति ख–पाठः ।

(मूलम्)

अविचारितरमणीयत्वात् । तथाहि—नोत्पत्तिर्भावव्यतिरिक्ता । न चासौ गर्भवत् कारणान्निष्क्रामति, [1]न चाम्बरतलात् पतति, न चास्ति सर्वथा प्राक्, न चासत् सद् भवति, भवति च कस्यचिदनन्तरं—मरणसमय एवास्य रहितस्तदन्वयेन तत्सामर्थ्य[2]प्रभवो नियमवाँश्चेति को न्वस्वप्नायमान इत्थं भाषते, अबोधग्रहगृहीताच्चापरः अनुवक्तीत्यपकर्ण्यमेतत्। आह—एवमपि पारिशेष्या[3]नाश्रयणे हेतुफलभावोच्छेददोषोऽनिवारितप्रसरः, [4]हेत्वनिवृत्तिपक्षे तत्तादवस्थ्यात्,

(स्वो० व्या०)

असारमेतत्—अनन्तरोक्तम्, अविचारितरमणीयत्वात् हेतोः । एतदेवाह (तथाहीत्यादिना) नोत्पत्तिर्भावव्यतिरिक्ता । न चासौ—भावो गर्भवत् कारणान्निष्क्रामति, मातुरुदरादिति गम्यते, न चाम्बरतलात्—आकाशतलात् पतति सहसा, न चास्ति सर्वथा—सर्वैः प्रकारैः प्राग्, उत्पत्तेरिति प्रक्रमः, [5]न चासत् सद् भवति, अभावस्य भावत्वविरोधात्, भवति च कस्यचित्—वस्तुनोऽनन्तरं मरणसमय एवास्य—कस्यचित् रहितस्तदन्वयेन—तत्तद्भावापत्त्यभावतः तत्सामर्थ्यप्रभवः—अनन्तरातीतवस्तुशक्तिजन्मा नियमवाँश्च भावः स एव नापरः । इति को न्वस्वप्नायमानः सन् इत्थं भाषते? । अबोधग्रहगृहीताच्चापरः—अन्यः अनुवक्ति [6]को न्वपरः?, न कश्चिदित्यर्थः । इत्यपकर्ण्यमेतत् । आह—एवमपि सति पारिशेष्यानाश्रयणे हेतुफलभावोच्छेददोषः । किमित्याह—अनिवारितप्रसरः । कथमित्याह—हेत्वनिवृत्तिपक्षे तत्तादव-

(विवरणम्)

(६) मरणसमय एवास्येति । विनाशसमये एव मृदादेर्घटादिरुत्पद्यत इत्यर्थः । एतच्च 'कस्यचिदनन्तरम्' (५-६) इत्यस्यैव सौत्रपदस्य व्याख्यानं कृतं सुखावबोधाय सूत्रकृता ॥

(२०) पारिशेष्यानाश्रयणे इति । हेतोरनिवृत्तिपक्षे साङ्ख्याभिमते तादवस्थ्याद्धेतोर्न घटते कार्यम् । निवृत्त्यनिवृत्तिपक्षस्तु जैनाभिमतो विरुद्ध इति पारिशिष्याद् बौद्धाभिमत एव वस्तुनोऽनन्तरं वस्तूत्पद्यत इति । अस्मिन् पक्षे कार्यकारणभावव्यवस्थितिरिति पारिशेष्यं तस्यानाश्रयणे सति ॥

१ 'न वाऽम्बर०' इति ग-पाठः । २ 'प्रभवनियम०' इति क-पाठः । ३ 'नाश्रयेण हेतुफल०' इति क-पाठः । ४ 'हेतुनिवृत्तिपक्षे' इति ग-पाठः । ५ 'नैवासत्' इति क-पाठः । ६ 'कोऽपरः इति ङ-पाठः । ७ 'इत्यसन्(?त्)पक्षे' इति ख-पाठः ।

( मूलम् )

निवृत्त्यनिवृत्तिपक्षस्य च विरुद्धत्वा[1]दिति, न निवृत्त्यनिवृत्तिपक्षे विरोधासिद्धेः, तस्यैव तथाभवनात् ॥

स्यादेतत्–तथाभवनमित्यन्यथाभवनमेतच्च शब्दार्थाननुगतं तदेवान्यथा भवतीति, (तद्) यदि तदेव कथमन्यथा भवति, अन्यथा चेद् भवति कथं तदेवेति ?। उच्यते–कथञ्चिदन्यथाभवनाददोषः, तदतादवस्थ्योपलब्धेः, मृदाद्यात्मककपालादिवेदनात् उभयनिश्चय-[2]सिद्धेः अन्यतरस्यापि भ्रान्तत्वायोगात्, इतरत्राप्यनाश्वासापत्तेः तज्जातीयव्यभिचारदर्शनात् सतः स[3]र्वथाऽसत्त्वानापत्तेः, कादाचित्कतया तदुत्पत्त्यादिप्रसङ्गात्, असतोऽपि सत्ताऽयोगात् स्वभाव-[4]वैकल्येन तद्भावं[5]नियमासिद्धेरिति । न चैतन्न शब्दार्थानुगतमपि,

---

( स्वो० व्या० )

स्थ्यात्–हेतुतादवस्थ्येन निवृत्त्यनिवृत्तिपक्षस्य च, प्रक्रमाद्धेतुगतस्य, विरुद्धत्वादिति। एतदाशङ्क्याह–नेत्यादि। न–नैतदेव निवृत्त्यनिवृत्तिपक्षेऽधिकृते। किमित्याह–विरोधासिद्धेः। असिद्धिश्च तस्यैव–हेतोस्तथा–कार्यतया भवनात्॥

स्यादेतत्–तथाभवनमिति–एवमन्यथाभवनम् एतच्च–अन्यथाभवनं शब्दार्थाननुगतम् । कथमित्याह–तदेवान्यथा भवति । अयमर्थोऽत्र–तद् यदि तत् कथमन्यथा भवति, अन्यथा चेद् भवति कथं तदेवेति विरोधात् । एतदाशङ्क्याह–उच्यते–कथञ्चिदन्यथाभवनाददोषः । कथमित्याह–तदतादवस्थ्योपलब्धेः तस्य–हेतोः अतादवस्थ्योपलब्धेः । उपलब्धिश्च मृदाद्यात्मककपालादिवेदनात् । एतच्चानुभवसिद्धं उभयनिश्चयसिद्धेः मृदादि कपालादि चोभयमन्यतरस्यापि–मृदादेः भ्रान्तताऽयोगात् । अयोगश्चेतरत्रापि कपालादौ अनाश्वासापत्तेः। आपत्तिश्च तज्जातीयव्यभिचारदर्शनात् तथा सतः सर्वथा–एकान्तेन असत्त्वानापत्तेः। अनापत्तिश्च कादाचित्कतया कारणेन तदुत्पत्त्यादिप्रसङ्गात्–असत उत्पादनाशप्रसङ्गात्, तथा असतोऽपि सर्वथेति वर्तते सत्ताऽयोगात् । अयोगश्च स्वभाववैकल्येन असतः तद्भावनियमासिद्धेः–सद्भावविशेषनियमासिद्धेरिति । न चैतत्–कथञ्चिदन्यथाभवन

---

१ समीक्ष्यता १४०तम पृष्ठम् । २ 'सिद्धि अन्यतर०' इति ग–पाठ । ३ 'सर्वथानापत्ते इति ग–पाठ । ४ 'वैकल्पेन' इति ग–पाठ । ५ 'नियमासिद्धिरिति' इति क–पाठ ।

(मूलम्)

**निवृत्त्यनिवृत्तिपक्षस्य च विरुद्धत्वा[1]दिति, न निवृत्त्यनिवृत्तिपक्षे विरोधासिद्धेः, तस्यैव तथाभवनात् ॥**

**स्यादेतत्–तथाभवनमित्यन्यथाभवनमेतच्च शब्दार्थाननुगतं तदेवान्यथा भवतीति, (तद्) यदि तदेव कथमन्यथा भवति, अन्यथा चेद् भवति कथं तदेवेति ?। उच्यते–कथञ्चिदन्यथाभवनाददोषः, तदतादवस्थ्योपलब्धेः, मृदाद्यात्मककपालादिवेदनात् उभयनिश्चय[2]सिद्धेः अन्यतरस्यापि भ्रान्तत्वायोगात्, इतरत्राप्यनाश्वासापत्तेः तज्जातीयव्यभिचारदर्शनात् सतः सर्वथा[3]ऽसत्त्वानापत्तेः, कादाचित्कतया तदुत्पत्त्यादिप्रसङ्गात्, असतोऽपि सत्ताऽयोगात् स्वभाव[4]वैकल्येन तद्भावं[5]नियमासिद्धेरिति । न चैतन्न शब्दार्थानुगतमपि,**

(स्वो० व्या०)

स्थ्यात्–हेतुतादवस्थ्येन **निवृत्त्यनिवृत्तिपक्षस्य च,** प्रक्रमाद्धेतुगतस्य, **विरुद्धत्वादिति।** एतदाशङ्क्याह–नेत्यादि। न–नैतदेव **निवृत्त्यनिवृत्तिपक्षे**ऽधिकृते। किमित्याह–**विरोधासिद्धेः।** असिद्धिश्च **तस्यैव**–हेतोस्तथा–कार्यतया **भवनात्॥**

**स्यादेतत्–तथाभवनमिति**–एवम**न्यथाभवनम्** एतच्च–अन्यथाभवनं **शब्दार्थाननुगतम्।** कथमित्याह–**तदेवान्यथा भवति।** अयमर्थोऽत्र–**तद् यदि तत् कथमन्यथा भवति, अन्यथा चेद् भवति कथं तदेवेति** विरोधात्। एतदाशङ्क्याह–**उच्यते–कथञ्चिदन्यथाभवनाददोषः।** कथमित्याह–**तदतादवस्थ्योपलब्धेः** तस्य–हेतोः अतादवस्थ्योपलब्धेः। उपलब्धिश्च **मृदाद्यात्मककपालादिवेदनात्।** एतच्चानुभवसिद्धं **उभयनिश्चयसिद्धेः** मृदादि कपालादि चोभयम**न्यतरस्यापि**–मृदादेः **भ्रान्तताऽयोगात्।** अयोगश्चेतरत्रापि कपालादौ **अनाश्वासापत्तेः।** आपत्तिश्च **तज्जातीयव्यभिचारदर्शनात्** तथा **सतः सर्वथा**–एकान्तेन **असत्त्वानापत्तेः।** अनापत्तिश्च **कादाचित्कतया** कारणेन **तदुत्पत्त्यादिप्रसङ्गात्**–असत उत्पादनाशप्रसङ्गात्, तथा **असतोऽपि** सर्वथेति वर्तते **सत्ताऽयोगात्।** अयोगश्च **स्वभाववैकल्येन** असतः **तद्भावनियमासिद्धेः**–सद्भावविशेषनियमासिद्धेरिति । **न चैतत्**–कथञ्चिदन्यथाभवन

१ समीक्ष्यतां १४०तम पृष्ठम्। २ 'सिद्धि अन्यतर०' इति ग–पाठ। ३ 'सर्वथानापत्ते' इति ग–पाठ। ४ 'वैकल्पेन' इति ग–पाठ। ५ 'नियमासिद्धिरिति' इति क–पाठ।

(मूलम्)

**कथञ्चिदन्यथाभवनस्य तदैवान्यथैवेत्येकान्तापोहेन प्रवृत्तेः, वस्तुन एव तत्स्वभावत्वात्, प्रतीत्यनुग्रहसिद्धेरुभयनिमित्तभावात्, अस्य च तदेवान्यथा भवतीत्यनेनैवाक्षेपोऽन्यथैतच्छब्दार्थायोगात्। इति पक्षान्तरोपपत्त्या पारिशेष्यानाश्रयणेऽपि न हेतुफलभावोच्छेददोष इत्यलं प्रसङ्गेन ॥**

**न च कारणमप्यनेकमेक[1]स्वभावस्य कार्यस्य जनकम्। यदि स्यान्नेदानीं भिन्नस्वभावेभ्यः सहकारिभ्यः कार्योत्पत्तौ कारणभेदो भेदकः स्यात्, [2]ततश्चाभेदोऽपि [3]नाभेदको भवेत्, कारणभेदेऽप्यभेदात्। यदि भेदाद् भेद एव स्यात्, एवमभेदादभेदो युक्तः, अव्यभिचारनियमात्। इह तु नैवमित्यहेतुकौ विश्वस्य भेदाभेदौ स्याताम्। तद्-**

(स्वो० व्या०)

अन्यभवनाक्षिप्तं **न शब्दार्थानुगतमपि,** किन्तु शब्दार्थानुगतमेव, **कथञ्चिदन्यथाभवनस्य तदैवान्यथैवेति**–एवं एकान्तापोहेन **प्रवृत्तेः**। कथमित्याह–**वस्तुन एव तत्स्वभावत्वात्**–निवृत्त्यनिवृत्त्यात्मकत्वेन अनेकान्तस्वभावत्वात्। तत्स्वभावत्वं च **प्रतीत्यनुग्रहसिद्धेरुभयनिमित्तभावात्।** तदन्यच्चेत्युभयम्। **अस्य च**–उभयस्य **तदेवान्यथा भवतीति। अनेनैवाक्षेपः अन्यथा**–तदनाक्षेपे **एतच्छब्दार्थायोगात्। इति**–एवं **पक्षान्तरोपपत्त्या** कारणेन **पारिशेष्यानाश्रयणेऽपि** परोक्ते **न हेतुफलभावोच्छेददोषः** पक्षान्तरेणाप्युक्तनीत्या तदनुच्छेदसिद्धिरि**त्यलं प्रसङ्गेन** ॥

विकल्पान्तरमधिकृत्याह–**न च कारणमप्यनेकं**–रूपादि **एकस्वभावस्य कार्यस्य जनकं**–ज्ञानादेः। **यदि स्याद**नेकमेकस्व[4]भावस्य सत् **नेदानीं भिन्नस्वभावेभ्यः सहकारिभ्यः**–रूपादिभ्यः **कार्योत्पत्तौ**–विज्ञानादिभावेऽपि। किमित्याह–**कारणभेदो भेदकः स्यात्,** अनेकेभ्य एकोत्पत्तिरिति भावः। **ततश्च**–एवं च सति **अभेदोऽपि** कारणगतो **नाभेदको भवेत्** कार्ये। कथमित्याह–**कारणभेदेऽपि** उक्तव**दभेदात्** कार्यस्य। एतदेव भावयति–**यदि भेदात्**–कारणगतात् **भेद एव स्यात्** कार्यस्य, **एवमभेदात्**–कारणगतात् **अभेदो युक्तः** कार्ये। कुत इत्याह–**अव्यभिचारनियमा**द्धेतोः। **इह तु**–प्रक्रमे **नैवमनेकस्मादेकभावाङ्गीकरणेन इत्यहेतुकौ विश्वस्य**–जगतः **भेदाभेदौ स्यातां**

१ 'नेकस्वभावस्य' इति ग–पाठः। २ 'ततश्च भेदोऽपि' इति क–पाठः। ३ 'न भेदको' इति ग–पाठः। ४ 'भावतस्य तन्नेदानीं' इति ङ–पाठः।

( मूलम् )

**कथञ्चिदन्यथाभवनस्य तदैवान्यथैवेत्येकान्तापोहेन प्रवृत्तेः, वस्तुन एव तत्स्वभावत्वात्, प्रतीत्यनुग्रहसिद्धेरुभयनिमित्तभावात्, अस्य च तदेवान्यथा भवतीत्यनेनैवाक्षेपोऽन्यथैतच्छब्दार्थायोगात्। इति पक्षान्तरोपपत्त्या पारिशेष्यानाश्रयणेऽपि न हेतुफलभावोच्छेददोष इत्यलं प्रसङ्गेन ॥**

**न च कारणमप्यनेकमेकस्वभावस्य[1] कार्यस्य जनकम्। यदि स्यान्नेदानीं भिन्नस्वभावेभ्यः सहकारिभ्यः कार्योत्पत्तौ कारणभेदो भेदकः स्यात्, ततश्चाभेदोऽपि[2] नाभेदको[3] भवेत्, कारणभेदेऽप्यभेदात्। यदि भेदाद् भेद एव स्यात्, एवमभेदादभेदो युक्तः, अव्यभिचारनियमात्। इह तु नैवमित्यहेतुकौ विश्वस्य भेदाभेदौ स्याताम्। तद्-**

( स्वो० व्या० )

अन्यभवनाक्षिप्तं **न शब्दार्थानुगतमपि,** किन्तु शब्दार्थानुगतमेव, **कथञ्चिदन्यथाभवनस्य तदैवान्यथैवेति**–एवं एकान्तापोहेन **प्रवृत्तेः**। कथमित्याह–**वस्तुन एव तत्स्वभावत्वात्**–निवृत्त्यनिवृत्त्यात्मकत्वेन अनेकान्तस्वभावत्वात्। तत्स्वभावत्वं च **प्रतीत्यनुग्रहसिद्धेरुभयनिमित्तभावात्।** तदन्यच्चेत्युभयम्। **अस्य च**–उभयस्य **तदेवान्यथा भवतीति। अनेनैवाक्षेपः अन्यथा**–तदनाक्षेपे **एतच्छब्दार्थायोगात्। इति**–एवं **पक्षान्तरोपपत्त्या** कारणेन **पारिशेष्यानाश्रयणेऽपि** परोक्ते **न हेतुफलभावोच्छेददोषः** पक्षान्तरेणाप्युक्तनीत्या तदनुच्छेदसिद्धिरित्यलं **प्रसङ्गेन** ॥

विकल्पान्तरमधिकृत्याह–**न च कारणमप्यनेकं**–रूपादि **एकस्वभावस्य कार्यस्य जनकं**–ज्ञानादेः। **यदि स्यादनेकमेकस्वभावस्य[4]** सत् **नेदानीं भिन्नस्वभावेभ्यः सहकारिभ्यः**–रूपादिभ्यः **कार्योत्पत्तौ**–विज्ञानादिभावेऽपि। किमित्याह–**कारणभेदो भेदकः स्यात्,** अनेकेभ्य एकोत्पत्तिरिति भावः। **ततश्च**–एवं च सति **अभेदोऽपि** कारणगतो **नाभेदको भवेत्** कार्ये। कथमित्याह–**कारणभेदेऽपि** उक्तवद**भेदात्** कार्यस्य। एतदेव भावयति–**यदि भेदात्**–कारणगतात् **भेद एव स्यात्** कार्यस्य, **एवमभेदात्**–कारणगतात् **अभेदो युक्तः** कार्ये। कुत इत्याह–**अव्यभिचारनियमाद्धे**तोः। **इह तु**–प्रक्रमे **नैवमनेकस्मादेकभावाङ्गीकरणेन इत्यहेतुकौ विश्वस्य**–जगतः **भेदाभेदौ स्यातां**

१ 'नेकस्वभावस्य' इति ग–पाठः। २ 'ततश्च भेदोऽपि' इति क–पाठः। ३ 'न भेदको' इति ग–पाठः। ४ 'भावतस्य तन्नेदानीं' इति ङ–पाठः।

(मूलम्)

**व्यतिरिक्तश्च न कश्चिद् भावः। इति सर्वे भावा अपरतन्त्रोत्पत्तयः स्युरिति ॥**

**स्यान्मतम्–भिन्नस्वभावेभ्यो[1] भिन्नस्वभावमेव सञ्जायते, कारण-व्यापारविरचितानामसङ्कीर्णत्वात् कार्यस्वभावविशेषाणाम्, यथा विषयेन्द्रियमनस्कारबलभाविनो[2] ज्ञानस्य विषयात् तदाभता नेन्द्रियान्न मनस्कारात्, इन्द्रियाद् विषयग्रहणप्रतिनियमो नान्यतस्तस्यैव [3]मनस्काराद् बोधरूपता, न परतः। न च कारणव्यापार[4]विषये नानात्वेऽपि [5]कार्ये स्वभावभेदः, निर्विभक्तरूपस्यैवोपल[6]म्भात्। एतदप्ययुक्तम्, सन्न्यायविरोधात्। कथं हि नामैकस्वभावं कार्यं विशेषाश्च तदव्यतिरिक्ता एव [7]चित्रा इति चिन्त्यम्। नानात्वैकत्वयोः परस्पर-**

(स्वो० व्या०)

उक्तवदुभयत्र नियमाभावात्। **तद्व्यतिरिक्तश्च**–भेदाभेदव्यतिरिक्तश्च **न कश्चिद् भावो** नाम। **इति**–एव **सर्वे भावा अपरतन्त्रोत्पत्तयः**–कारणनिरपेक्षजन्मानः **स्युरि**त्यनिष्ट चैतत् ॥

**स्यान्मतम्–भिन्नस्वभावेभ्यो भिन्नस्वभावमेव जायते,** कारणेभ्यः कार्यमिति प्रक्रमः। कुत इत्याह–**कारणव्यापारविरचितानामसङ्कीर्णत्वात्** हेतोः। केषामित्याह–**कार्यस्वभावविशेषाणा**मिति। एतदेव भावयति त(?य)थेत्यादिना। यथा **विषयेन्द्रियमनस्कारबलभाविनो ज्ञानस्य** बलं–सामर्थ्यं[8] **विषयात् तदाभता**–तदाकारता, [9]**नेन्द्रियान्न मनस्कारात्** तदाभता, **इन्द्रियाद् विषयग्रहणप्रतिनियमो** रूपाद्यपेक्षया, **नान्यतः**–विषयादेः **तस्यैव**–विज्ञानस्य **मनस्कारात्** समनन्तराद् **बोधरूपता, न परतः**–इन्द्रियादेः। **न च कारणव्यापारविषये नानात्वेऽपि** सति **कार्ये स्वभावभेदः**। कुत इत्याह–**निर्विभक्तरूपस्यैवोपलम्भात्** कार्यस्येति। एतदाशङ्क्याह–**एतदप्ययुक्तम्**। कुत इत्याह–**सन्न्यायविरोधात्**। एनमेवाह **कथं** हीत्यादिना। कथं हि **नामैकस्वभावं कार्यं विशेषाश्च तदव्यतिरिक्ता एव**–एकस्वभावकार्याव्यतिरिक्ता एव **चित्रा इति चिन्त्यम्**। कथमित्याह–[10]**नानात्वैकत्वयोः**

१ 'भावेभ्योऽभिन्न०' इति ग–पाठ। २ 'भाविनो विज्ञानस्य' इति क–पाठ। ३ 'मनस्कारोद्बोध०' इति ग–पाठ। ४ 'विषयनानात्वे' इति ग पाठ। ५ 'कार्यस्वभाव०' इति ग–पाठ। ६ 'लम्भात्, तद०' इति ग–पाठ। ७ 'चित्रा इव इति' इति ग–पाठ। ८ 'भाविज्ञानस्य' इति ङ–पाठः। ९ 'नेन्द्रियामन०' इति ङ–पाठ। १० 'नानात्वैकयो' इति ङ–पाठ।

( मूलम् )

व्याहतेः विषयनिर्भासितादयश्च विज्ञानाव्यतिरेकिणो यथा विषयादिभिः क्रियन्ते, तद्वत् तद्व्य[1]तिरिक्तबोधरू[2]पकारिभिर्मनस्कारादिभिरपि। इति सर्वसर्वजन्यत्वे तद्व्यवस्थाऽनुपपत्तिः। तदनुपपत्तिश्च न विषयात् तदाकारत्वसम्भवो बोधरूपाभेदात्। न चासम्भवः, तदाकारत्वात्। [3]तथा न मनस्कारो बोधरूपजनकः, विषयाकाराव्यतिरेकात्। न चाजनकः, बोधरूपानन्यत्वादिति। इत्थमिन्द्रियादिष्वपि द्रष्टव्यमिति मिथो विरोधसम्भवेतरापत्तिदोषतस्तदनुपपत्तिः॥

( स्वो० व्या० )

**परस्परव्याहतेः** कारणात् **विषयनिर्भासितादयश्च**-धर्मा **विज्ञानाव्यतिरेकिणः** सन्तस्तदेकतया परमार्थेन **यथा विषयादिभिः**-कारणभेदैः [4]**क्रियन्ते, तद्वत्**-इत्थमेव **तदव्यतिरिक्तबोधरूपकारिभिः**-विज्ञानाव्यतिरिक्तबोधरूपकरणशीलैः **मनस्कारादिभिरपि** । **इति**-एवं **सर्वसर्वजन्यत्वे** सर्वेषां-विषयनिर्भासितादीनां सर्वजन्यत्वे-अशेषमनस्कारादिजन्यत्वे सति निरंशैकविज्ञानाव्यतिरेकेण **तद्व्यवस्थाऽनुपपत्तिः**-विषयनिर्भासितादिव्यवस्थाऽनुपपत्तिः। **तदनुपपत्तिश्च**-विषयनिर्भासिताद्यनुपपत्तिश्च मूलत एव। एनामेवाह-(न) **विषयात्**-नीलादेः **तदाकारत्वसम्भवः**-नीलाद्याकारत्वसम्भवः, विज्ञानस्येति प्रक्रमः । कुत इत्याह-**बोधरूपाभेदा( दा )**कारत्वस्य । **न चासम्भवः** । कुत इत्याह-**तदाकारत्वात्**-नीलादिविषयाकारत्वात्। **तथा न मनस्कारो बोधरूपजनकः**। कुत इत्याह-**विषयाकाराव्यतिरेकात्** बोधरूपस्य। **न चाजनकः**। कुत इत्याह-**बोधरूपानन्यत्वाद्** विषयाकारस्य **इति**। **इत्थम्**-एव**मिन्द्रियादिष्वपि**-कारणभेदेषु **द्रष्टव्यं** विषयग्रहणप्रतिनियमाद्यधिकृत्य । **इति**-एवं **मिथः**-परस्परं **विरोधसम्भवश्चेतरापत्तिश्चात एव दोषः**। ततः किमित्याह-**तदनुपपत्तिः**-विषयानिर्भासिताद्यनुपपत्तिः ॥

( विवरणम् )

(२४) **विरोधसम्भवश्चेतरापत्तिश्चे**ति । न विषयात् तदाकारत्व[5]सम्भवो बोधरूपाभेदादिति विरोधः तस्य सम्भवस्तदाकारत्वादिति । चत्वारि(?) बोधत इतरः(?) तस्यापत्तिः ॥

---

१ 'व्यतिरिक्ताबोध०' इति क-पाठः। २ 'रूपोपकारि०' इति ग-पाठः। ३ 'तथा मनस्कारो' इति ग-पाठः। ४ 'क्रियन्ते तदित्व(त्थ?)मेव तद०' इति ङ-पाठः। ५ 'सम्भवाबोध०' इति ख-पाठः।

( मूलम् )

**अथ मा भूदयं दोष इति विशेषाः कार्यतो व्यतिरिक्ता एव इष्यन्ते। एवमपि कारणव्यापारस्य तेष्वेवोपयुक्तत्वात् तत् कार्यमहेतुकमनुषज्यत इति यत्किञ्चिदेतत् ॥**

**एतेन[1]ानेकमनेकस्वभावस्येत्येतदपि[2] प्रत्युक्तम्, एकस्यानेकस्वभावत्वविरोधात्। न[3] चैकमेकस्वभावस्य कारणं कार्यस्य जनकम्, विश्वस्यान्धबधिरादिभावप्रसङ्गात्, चक्षुरादीनां सजातीयक्षणोत्पादकत्वे विज्ञानाजननात्, विज्ञानजनकत्वे वा सजातीयक्षणाप्रतिसन्धानादिति। न चानेकरूपस्य, तदेकस्वभावतया केषाञ्चिदहेतुकत्वापत्तेः, तथाविधैकस्वभावता[4]ऽभ्युपगमे अतिप्रसङ्गात्, सामग्र्याः क्रमेण**

---

( स्वो० व्या० )

**अथ मा भूदेष दोषः**—अनन्तरोदित इति **विशेषाः**—विषयनिर्भासितादयः **कार्यतः**, इह प्रक्रमे विज्ञानात्, **व्यतिरिक्ता एवेष्यन्ते। एवमपि** इष्यमाणे **कारणव्यापारस्य** विषयादिसम्बन्धिनः **तेष्वेव**—विशेषेषूप**युक्तत्वात्** कारणात् **तत् कार्य**—विज्ञानाख्य**महेतुकमनुषज्यत इति** कृत्वा **यत्किञ्चित्**—असार**मेतत्**—अनन्तरोदितमिति ॥

**एतेनेत्यादि**। एतेन—अनन्तरोदितेन **अनेकं** कारण**मनेकस्वभावस्य** कार्यस्य जनकमित्येतदपि **प्रत्युक्तम्**। कुत इत्याह—**एकस्य** कार्यस्य **अनेकस्वभावत्वविरोधा**दिति। **न चैकं**—रूपादि **एकस्वभावस्य**—रूपादेरेव **कारणं कार्यस्य जनकम्**। कुत इत्याह—**विश्वस्य**—जगतः **अन्धबधिरादिभावप्रसङ्गात्**। प्रसङ्गः **चक्षुरादीनां** कारणानां **सजातीयक्षणोत्पादकत्वे** सति एकस्यैकस्वभावकार्यकारणतया **विज्ञानाजननात्, विज्ञानजनकत्वे वा** चक्षुरादीनां **सजातीयक्षणाप्रतिसन्धानात्** चक्षुराद्यजननात् एकस्यैकस्वभावकार्यकारणतया **इति** अन्धबधिरादिभावप्रसङ्गः। **न चानेकरूपस्य,** एकं कारणं कार्यस्य जनकमिति प्रक्रमः, **तदेकस्वभावतया** तस्य—कारणस्य एकस्वभावतया कारणेन **केषाञ्चित्**—कार्याणामनेककार्यमध्ये। किमित्याह—**अहेतुकत्वापत्तेः**, एकस्वभावस्य एकत्रैवोपयोगादिति गर्भः। **तथाविधैकस्वभावताऽभ्युपगमे**—अनेककार्यजननैकस्वभावताऽभ्युपगमेऽधिकृतकारणस्य किमित्याह—**अतिप्रसङ्गात्**, कार्यान्तराणामपि तत एवोत्पत्तेरित्यर्थः। तथाविधैकस्वभावतया एवमपि प्रवृत्त्यविरोधात्।

---

१ 'नानेकस्वभाव०' इति **ग**—पाठ। २ द्रष्टव्य १३७तम पृष्ठम्। ३ 'न वैकमेक०' इति **ग**—पाठ। ४ 'भावतयाऽभ्युपगमे' इति **ग**—पाठ। ५ 'कारणमित्याह' इति ङ—पाठ।

( मूलम् )

कार्याणामुदयदर्शनाच्चेति ॥

स्यादेतत्–नामी कारणविकल्पाः सर्व एव नो बाधायै, केषाञ्चिदनिष्टेः, आद्यस्यैवाभ्युपगमात्। यत् पुनरुक्तम्–'अनेकस्मादेककार्योत्पत्तौ न कारणभेदो भेदकः स्यात्' इति सोऽप्रसङ्गः, तथेष्टेः। तथाहि–न भिन्नस्वभावात् कारणाद् भिन्नस्वभावमभिन्नस्वभावाच्चाभिन्नस्वभावं कार्यमुत्पद्यते। इति कारणभेदाभेदाभ्यां कार्यस्य भेदाभेदावुच्येते, किन्तु विलक्षणात् कारणकलापद्वयाद् [1]विलक्षणमेव कार्यं

( स्वो० व्या० )

उपचयमाह–सामग्र्याः–रूपादिलक्षणायाः सकाशात् क्रमेण–तथाविधप्रबन्धापेक्षया कार्याणां–विज्ञानादीनामुदयदर्शनाच्च–उत्पत्तिदर्शनाच्च न चानेकरूपस्य इति अधिकृतविकल्पोपन्यास एव क्रिया ॥

स्यादेतदित्यादि। अथैवं मन्यसे–नामी कारणविकल्पाः–अनन्तरोदिताः सर्व एव नः–अस्माकं बाधायै–बाधार्थम्। कथमित्याह–केषाञ्चिद् विकल्पानामनिष्टेः कारणात्, आद्यस्यैव–कारणविकल्पस्य अभ्युपगमात् कारणात्। यत् पुनरुक्तं तत्राद्यविकल्पे–अनेकस्मादेककार्योत्पत्तौ सत्यां न कारणभेदो भेदकः स्यादिति सोऽप्रसङ्गः। कथमित्याह–तथेष्टेः कारणात्। एतदेव भावयति तथाहीत्यादिना। तथाहीति पूर्ववत्। न भिन्नस्वभावात् कारणात् प्रत्येकरूपाद् भिन्नस्वभावम्, कार्यमिति गम्यते, अभिन्नस्वभावाच्च कारणादेव अभिन्नस्वभावं कार्यमुत्पद्यते। इति–एवं कारणभेदाभेदाभ्यां कार्यस्य भेदाभेदावुच्येते नेति, किन्तु विलक्षणात्–विसदृशात् कारण-

( विवरणम् )

(७–९) न भिन्नस्वभावात् कारणाद् भिन्नस्वभावम्, अभिन्नस्वभावाच्चाभिन्नस्वभावं कार्यमुत्पद्यते इति [2]कारणभेदाभेदाभ्यां कार्यस्य भेदाभेदावुच्येते इति। अयमस्य सूत्रवाक्यस्याशयः–रूपं चक्षुरालोको मनस्कारश्चेत्यमी प्रत्येकं भिन्नस्वभावाः सन्तोऽभिन्नस्वभावमेव ज्ञानाख्यं कार्यं जनयन्तीत्येवं कारण[3]भेदाद् भेदो नाभ्युपगम्यते; तथा मृल्लक्षणमभिन्नमेकं कारणमिति तत्कार्यैः सर्वैरेकाकारैः भाव्यम्, न तु घटशरावादितया भिन्नैरित्येवं कारणाभेदादभेदो नाङ्गीक्रियते कार्याणामिति। वृत्त्यक्षराणि तु एतद्व्याख्यानुसारेण सुगमानीति किं व्याख्याप्रयासेन ? ॥

१ 'विलक्षणं कार्यं' इति ग–पाठः। २ 'भेदभेदाभ्यां कार्यस्य' इति क–पाठः। ३ 'भेदभेदावुच्येते इति अथ नाभ्युप०' इति क–पाठः।

(मूलम्)

जायत इत्येतावतांऽशेन हेतुभेदाभेदाभ्यां फलस्य ताविति, तद्व्यतिक्रमे च नियमेन तदहेतुकत्वं प्रसजति[1]। यथोक्तम्–

"अग्निस्वभावः शक्रस्य मूर्द्धा यद्यग्निरेव सः।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत्?॥"[2]

---

(स्वो० व्या०)

कलापद्वयात्–सामग्रीद्वयात् विलक्षणमेव–विसदृशमेव कार्यं जायत इति कृत्वा एतावतांऽशेन हेतुभेदाभेदाभ्यां सामग्र्यपेक्षया फलस्य–कार्यस्य ताविति भेदाभेदावित्यर्थः। तद्[3]व्यतिक्रमे च हेतुभेदाभेदाभ्यां फलस्य ताविति न्यायातिक्रमे च किमित्याह–नियमेन–अवश्यन्तया तदहेतुकत्वं [4]प्रसजति–तस्य फलस्याहेतुकत्वमापद्यते, [5]हेतुधर्मान्वयव्यतिरेकाननुविधानादित्यर्थः। यथोक्तमिति ज्ञापकमाह। अग्निस्वभावः, धूमजननस्वभाव इत्यर्थः। शक्रस्य–इन्द्रस्य मूर्द्धा–शिर इत्यादि। 'आदि'शब्दार्थमाह–यद्यग्निरेव सः–धूमजननस्वभावः, धूमजननस्वभावस्यार्थस्याग्नित्वात् अथानग्निस्वभावोऽसौ[6] न धूमजननस्वभावः।

---

(विवरणम्)

(९) एतावतांऽशेन हेतुभेदाभेदाभ्यां सामग्र्यपेक्षयेति। अयमत्राभिप्रायो बुध्यते–बौद्धमते न किञ्चित् कार्येण सार्द्धमभिन्नम्, कारणानामत्यन्तभेदित्वात्, किन्तु यानि कार्याणि एका[का]कारसामग्रीतः समुपजायमानानि विलोक्यन्ते लोके न तान्यभिन्नानीति प्रतिपाद्यते व्यवहारार्थम्, यथा घट[7]शरावोष्ट्रिकोदञ्चनादीनि, यानि तु भिन्नाकारसामग्रीतः समुत्पद्यमानानि लक्ष्यन्ते तानि भिन्नानीति प्रतिपाद्यते, यथा घटपटज्ञानादीनि। एवं च कुतोऽपि सामग्र्याः किञ्चिदेव प्रतिनियतस्वभावं कार्यमुत्पद्यत इति सिद्धं भवति॥

(१४) 'आदि'शब्दार्थमाहेति। 'अग्निस्वभावः शक्रस्य मूर्द्धा' इत्यादीत्यत्र सूत्रे य 'आदि'शब्दस्तं वृत्तिकारः परिपूर्णश्लोककथनेन व्याचष्ट इत्यर्थः। परिपूर्णश्लोकपाठश्चैवम्—

"अग्निस्वभावः शक्रस्य मूर्द्धा यद्यग्निरेव सः।
[8]अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत्?॥"[9]

इति॥

---

१ 'प्रसज्यति' इति ग–पाठ। २ अनुष्टुप्। ३ 'व्यक्तिमेव हेतु०' इति क–पाठ। ४ 'प्रसज्यते' इति ङ–पाठ। ५ 'हेतुकर्मान्वय०' इति क–पाठ। ६ 'सौ धूमजननास्वभाव' इति ङ–पाठ। ७ 'शरावोष्ट्रिकाददनादीनि' इति च–पाठ। ८ 'यदनग्नि०' इति क–पाठ। ९ अनुष्टुप्।

( मूलम् )

**इत्यादि । यदा तु भिन्नस्वभावेभ्यो निर्भागैकस्वभावकार्यप्रतिनियतेभ्यो विजातीयानेकपदार्थव्यावृत्तमविभक्तैकस्वभावमेवैकमाविर्भवति कार्यं, तदा न कश्चिद् व्याघातः, तद्रूपकार्योत्पादननियतस्वभावाच्चानेक[1]स्मादेककार्योत्पत्तावहेतुकत्वप्रसङ्गोऽप्यनवकाश एव । [2]भवत्यहेतुकत्वप्रसङ्गो यद्येकनियतात् स्वहेतुप्रकृत्यनुविधायिनोऽनेकस्मादनेकतावदेकमनेकं चोपजायेत [3]हेतुधर्माननुकारादिति । अत्र**

( स्वो० व्या० )

तत इदमाह–**धूमस्तत्र कथं भवेत्**, शक्रमूर्द्धनीति । **यदा तु भिन्नस्वभावेभ्यः**–रूपादिभ्यः क्षित्यादिभ्यो वा । किंविशिष्टेभ्य इत्याह–**निर्भागैकस्वभावकार्यप्रतिनियतेभ्यः**–तत्स्वभावकार्यप्रतिनियतेभ्यस्तत्स्वभावतया तज्जननं प्रति एवम्भूतेभ्यः । किमित्याह–**विजातीयानेकपदार्थव्यावृत्तं** तत्स्वभावतया **अविभक्तैकस्वभावमेव** हे[4]तुभेदानां तत्रैव सामर्थ्यात् **एकमाविर्भवति** अभूतभवनेन **कार्यं, तदा न कश्चिद् व्याघातः**, हेतुफलभावं प्रति इति प्रक्रमः । एतदेव भावयति **तद्रूपे**त्यादिना । तद्रूपं च तत्–विवक्षितरूपं विज्ञानादि **कार्यं** च तस्य **उत्पादने नियतः स्वभावो** यस्यानेकस्य तदेकापेक्षया तत् तथा तस्माच्च **अनेकस्मात्**–रूपादेः **एककार्योत्पत्तौ** सत्यां **अहेतुकत्वप्रसङ्गोऽप्यनवकाश एव** तत्तज्जननस्वभावत[5]याऽन्वयाभावेन । **भवत्यहेतुकत्वप्रसङ्गो यद्येकनियताद्** विवक्षितकार्यापेक्षया । अनेकस्मात् किम्भूतात् ? **स्वहेतुप्रकृत्यनुविधा-**

( विवरणम् )

(७-८) **भवत्यहेतुकत्वप्रसङ्गो यद्ये[6]कनियतात् स्वहेतुप्रकृत्यनुविधायिनोऽनेकस्मादनेकतावदेकमनेकं चोपजायेते**ति । इदं सूत्रं तावद् व्याख्यायते–भवत्यहेतुकत्वप्रसङ्गः कार्यस्य, यद्ये[7]कनियतादेकत्र–विज्ञानादौ कार्ये [8]जनयितव्ये प्रतिनियतात् अनेकस्मात्–रूपालोकमनस्कारचक्षुःक्षणलक्षणात् कारणकदम्बकात् । कीदृशादित्याह–स्वहेतुप्रकृत्यनुविधायिनः–आत्मीयहेतुस्वरूपानुकारिणः [9]अन्वयेन जनकादित्यर्थः । अनेकतावत्–अनेककार्यस्वभाववदिति वैधर्म्यदृष्टान्तः । एकं–[10]विज्ञाना-

१ 'स्मादनेककार्यो०' इति क–पाठः । २ अतः परं "इति भवत्यहेतुकत्वप्रसङ्गोऽप्यनवकाश एव इति' इत्यधिको ग–पाठः । ३ 'हेतुकर्माननु०' इति क–पाठः । ४ 'भेदाभूतानां तत्रैव' इति क–पाठः । ५ 'तया भावेन' इति ङ–पाठः । ६ 'नियतात् तस्य हेतु०' इति ङ–पाठः । ७ 'नियतरै(?)कत्र' इति ङ–पाठः । ८ 'जनयतेत्यप्रति०' इति क–पाठः । ९ 'अन्वये जनका०' इति ङ–पाठः । १० 'विज्ञानाद्यन्यतर०' इति क–पाठः ।

( स्वो० व्या० )

**यिनः**—आत्महेतुस्वभावानुविधायिनः, अन्वयजनकादित्यर्थः। **अनेकस्मादनेकतावदिति** निदर्शनं व्यतिरेकि। **एकमनेकं** [1]**चोपजायेत,** [2]अनेकान्वयतः एकत्वानुपपत्तेः, एकनियतत्वेनानेकानुपपत्तेश्च। अत एवाह—न [3]चोपजायेत।

( विवरणम् )

दन्यतरकार्यापेक्षया प्रतिनियतं किञ्चित् अनेक वा रूपालोकमनस्कारचक्षुःसमुदयरूपमुप[4]जायते—निष्पद्यते। अयमभिप्रायः—यथाऽस्माभिरन्वयं विनैव अनेकस्मात्—रूपालोकमनस्कारचक्षुर्लक्षणात् कारणादनेकेषां कार्याणां रूपालोकमनस्कारचक्षुरुत्तरक्षणलक्षणानां भावोऽभ्युपगम्यते, एवं यदि जैनैरनेकस्मात् कारणादन्वयेनैव जनकादेकस्यानेकस्य वा कार्यस्योत्पाद इत्यभ्युपगम्यते तदा भवति कार्यस्याहेतुकत्वप्रसङ्गः। तथाहि—यदि [5]रूपालोकादयः कारणविशेषा ज्ञानलक्षणमेकं कार्यमात्मस्वरूपानुगमेन जनयन्ति तदा ज्ञानस्यैकता(हानिः) चतुःस्वभाव[6]प्रवेशस्तत्र। स्वरूपालोकादिभिः कारणै रूपालोकादीनि कार्याण्यनेकान्यन्वयेनैव जन्यन्ते तर्हि ज्ञानादीनि [7]कार्याणि प्रत्येकं चतुर्भिः रूपालोकादिभिरन्वयेन जन्यन्त इत्यायातम्। ततश्च [न] ज्ञानादावेव कर्त्तव्ये तेषां स्वरूपानुगमेन व्यापृतानां कथमालोकादौ [8]कार्यान्तरे व्यापारः परिकल्प्यमानः साधीयान् स्यादिति? ॥

अथ वृत्त्यक्षराण्यनुश्रियन्ते—(३-४) **अनेकतावदिति निदर्शनं व्यतिरेकीति**। अन्वयमन्तरेण हि अनेकस्मादनेककार्यप्रसवपक्षोऽन्वयपक्षापेक्षया व्यतिरेकीति ॥

(४-५) **अनेकान्वयत एकत्वानुपपत्तेरिति**। यदि हि रूपालोकमनस्कारचक्षुषा[9]मनेकेषां कार्ये ज्ञानलक्षणेऽनुगमः स्यात् तदा कथं तस्यैकत्वं स्यात्?। अनेकेषां तत्र प्रवेशादिति अनेकस्मादेकोत्पादे दूषणम् ॥

अथानेकस्मादनेकोत्पादे प्राह—(५) **एकनियतत्वेनानेकानुपपत्तेश्चेति**। एकत्र—ज्ञानाद्यन्यतरकार्ये नियतत्वं—जनकतया प्रतिनियतत्वमने(?मे)कनियतत्वं तेनाने(?नै)कनियतत्वेन कारणानामनेकस्य कार्यस्यानुपपत्तेश्च—अघटनात्। यदि हि समग्राण्यपि

१ 'चोपजायते' इति ङ-पाठ। २ 'अनेक(का)न्वय एक०' इति ङ-पाठ। ३ 'चोपजायते' इति ङ-पाठ। ४ 'जायेत-निष्पद्येत' इति क-पाठ। ५ 'रूपालोकादीनि कार्याण्यनेकान्यन्वयेनैव जन्यन्ते तर्हि ज्ञानादीनि स्वरूपानुगमेन जनयन्ति' इति ख-पाठ। ६ 'प्रदेशात् तत्रास्व०' इति ख-पाठ। ७ 'कार्याण(?) प्रत्येकं' इति ख-पाठ। ८ 'कार्यान्तरव्यापार' इति ङ-पाठ। ९ 'मनेकेषा तत्र प्रवेशादिति अनुगम' स्यात्' इति ख-पाठः।

( मूलम् )

**उच्यते–यत्किञ्चिदेतत्, न्यायानुपपत्तेः । तत्र यत् तावदुक्तम्[1]– 'विलक्षणात् कारणकलापद्वयाद् विलक्षणमेव कार्यं जायते' इत्यादि, अत्र न कारणकलापस्तत्कारणातिरिक्तस्तानि च भिन्नस्वभावानि कथं निर्भागैककार्यं प्रति नियतानि तद्भावे च (? वा) कथं न व्याघातः, सर्वेषां तज्जननस्वभावत्वे नैकोऽपि न तज्जनकः तमन्तरेण तत्सर्वत्वायोगात्, निर्भागं च तदित्थं कथमनेकेभ्यो**

( स्वो० व्या० )

कुत इत्याह–**हेतुधर्माननुकारात्** । अननुकारश्चानेकान्वयेनैकस्मिन्, एकनियतत्वेन चानेकस्मिन्निति भावनीय**मिति**। एवं पूर्वपक्षमाशङ्क्याह–**अत्रोच्यते**। किमित्याह–**यत्किञ्चिदेतत्**–असारमनन्तरोदितम् । कुत इत्याह–**न्यायानुपपत्तेः**। एनामेव दर्शयति **तत्रे**त्यादिना । तत्र **यत् तावदुक्तं**[2] परेणादावेव । किं तदित्याह–'**विलक्षणात् कारणकलापद्वयाद् विलक्षणमेव कार्यं जायते' इत्यादि** । **अत्र**–उक्ते **न कारणकलापः** सामग्र्याख्यः **तत्कारणातिरिक्तः**–वैशेषिकाणामिवावयवी **तानि च**–कारणानि **भिन्नस्वभावानि**–रूपक्षित्यादीनि **कथं निर्भागैककार्यं प्रति नियतानि**, स्वभावभेदादेवेत्यर्थः । **तद्भावे वा**–निर्भागैककार्यभावे वा **कथं न व्याघातः** ? व्याघात एव । कथमित्याह–**सर्वेषां**–कारणानां **तज्जननस्वभावत्वे**–निर्भागैककार्यजननस्वभावत्वे **नैकोऽपि**–कारणभेदो **न तज्जनकः**–न विवक्षितकार्याजनकः, किन्तु जनक एव । कुत इत्याह–**तमन्तरेण** एकं कारणभेदं **तत्सर्वत्वायोगात्** तेषां–कारणभेदानां सर्वत्वायोगात् **निर्भागं च तत्**–कार्यमेकान्तैकस्वभावं **इत्थं कथ-**

( विवरणम् )

तानि ज्ञानलक्षणे कार्ये जनकतयाऽन्वयेन व्यापृतानि[3] तदा कथं तेभ्यो रूपाद्यन्य[4]तरकार्योत्पत्तिः स्यादिति ? ॥

(१०) **अनेकान्वयेनैकस्मिन्निति** । एकस्मिन्–ज्ञानलक्षणे कार्येऽनेकेषां–कारणानामन्वयेन अनेकस्मादेको[5]त्पत्तावननुकारो वर्तते । एकनियतत्वे चानेकस्मिन् कार्येऽन्वये नानुकारः अनेकस्मादनेकोत्पत्तिपक्षे ॥

१–२ १५४तमे पृष्ठे १५५तमे च । । ३ 'व्यावृत्तानि' इति क–पाठः । ४ 'रूपादन्य०' इति ख–पाठः । ५ 'अनेकस्मादेकोत्पत्तिपक्षे एकनियतत्वेनानेकस्मिन्निति एकनियतत्वे च ज्ञानक्षणैककार्यनियतत्वे च कारणानां अनेकस्मिन् कार्येऽन्वयेनानुकारः' इति ख–पाठः ।

(मूलम्)

**जन्मासादयेत्, एकतोऽपि तस्य सर्वात्मनोत्पत्ते[1]स्तदपरैस्तदकरणात्। सर्व[2]भूतिस्वभावत्वात् तस्यायमदोष इति चेत् किमिदं तत्प्रत्येकतातोऽन्यत् तत्सर्वत्वं नाम? ते च सर्वे जनका नैकोऽप्यजनक इत्युक्तदोषानतिवृत्तिः। यत एव सर्वे जनका अत एव नानतिवृत्तिरिति चेत्, यस्तर्ह्येकेन कार्यस्य स्वभावो जन्यते, स एवापरेणापीत्येतत् प्राप्तम्। अस्त्येतत् सिद्धसाध्य[3]तेति चेत्, माहेश्वरजायाजारकारणिकनिवेदितपृष्टभौतसिद्धसाध्यताकल्पेयम्**

(स्वो० व्या०)

**मनेकेभ्यः**–कारणभेदेभ्यो **जन्मासादयेत्?** नैवेत्यर्थः। एतदेव भावयति **एकतोऽपी**त्यादिना। एकतोऽपि–एकस्मादपि कारणभेदात् **तस्य**–अधिकृतकार्यस्य **सर्वात्मनोत्पत्ते**र्निर्भागैकरूपतया **तदपरैः**–कारणभेदैः **तदकरणात्**, अधिकृतकार्याकरणादित्यर्थः। **सर्वे**त्यादि। **सर्वभूतिस्वभावत्वात्** सर्वेभ्यः–कारणभेदेभ्यः उत्पत्तिस्वभावत्वात् कारणात् **तस्य**–अधिकृतकार्यस्य **अयमदोष इति चेत्**–अनन्तरोदितः। एतदाशङ्क्याह–**किमिदमि**त्यादि। किमिदं **तत्प्रत्येकतातः**–कारणभेदप्रत्येकतातो**ऽन्यत्**–अर्थान्तरं **तत्सर्वत्वं नाम**–अधिकृतकारणभेदसर्वत्वं नामेति?। **ते च सर्वे जनकाः**–कारणभेदा **नैकोऽप्यजनकः**। **इति**–एवं **उक्तदोषानतिवृत्तिः**, 'निर्भागं कथमनेकेभ्यो जन्मासादयेत्' इत्यादि। **यत एवे**त्यादि। यत एव **सर्वे जनकाः**–कारणभेदा **अत एव** हेतोः **न अनतिवृत्तिः** किन्त्वतिवृत्तिरेव, उक्तदोषस्येति प्रक्रमः। **इति चेत्**, एतदाशङ्क्याह–**यस्तर्हि एकेन**–कारणभेदेन **कार्यस्य स्वभावो जन्यते स एवापरेणापि इत्येतत् प्राप्तम्**। **अस्त्येतत्**–इत्थमेवेदं **सिद्धसाध्यता**। **इति चेत्**, एतदाशङ्क्याह–**माहेश्वरे**त्यादि। **माहेश्वरजायायाः**–पत्न्याः **जारः कारणिकनिवेदितपृष्टश्चासौ भौतश्च** तस्य **सिद्धसाध्यता** तत्कल्पेयं परोपन्यस्ता सिद्धसाध्यता

(विवरणम्)

(९) **माहेश्वरजायाजारकारणिकनिवेदितपृष्टभौतसिद्धसाध्यताकल्पेयमि**ति। अत्र वाक्ये एवं समासः कार्यः–माहेश्वरजायायां जारो माहेश्वरजायाजारः कारणिकैर्निवेदितः कारणिकनिवेदितः, पृष्टश्चासौ तैरेव कारणिकैर्भौतश्च पृष्टभौतः,

१ 'त्मनोपपत्ते०' इति क-पाठ। २ 'स्वभूतिस्व०' इति क-पाठ। ३ 'साध्येती(?)ति चेत्' इति ङ-पाठ.।

(मूलम्)

**उपहासस्थानमार्याणामित्यनुद्घोष्यैव तैः । तथाहि–य एकेन जन्यते स एवापरेणापि, न खलु स तस्य स्वभावस्तदपरत्वानापत्तेः, स्वभावान्तरस्य च तदपरस्वभावजन्यजनकत्वविरोधः, उभयतत्त्व[1]हानेः, तद्वैलक्षण्याद्धि तस्य[2] स्वभावान्तरत्वं तज्जन्यजनकत्वे च**

(स्वो० व्या०)

**उपहासस्थानमार्याणामिति** कृत्वा **अनुद्घोष्यैव तैः**–आर्यैः । एवं वक्रोक्तिमात्रमभिधायैतद्भावार्थमाह **तथाही**त्यादिना । तथाहीत्युपप्रदर्शने । **यः**–कार्यस्वभाव **एकेन जन्यते,** कारणभेदेनेति प्रक्रमः, **स एवापरेणापि** इति परमतम् । एतच्चासदित्याह–**न खलु**–नैव **सः**–आद्यकारणभेदस्वभावः **तस्य**–अपरस्य कारणभेदस्य **स्वभावः** । कथं नेत्याह–**तदपरत्वानापत्तेः,** आद्यकारणभेदात् [3]अन्यत्वानापत्तेः स्वभावाभेदेन । **स्वभावान्तरस्य च**–कारणभेदान्तरगतस्य **तदपरस्वभावजन्यजनकत्वविरोधः**–आद्यकारणभेदस्वभावजन्यजनकत्वविरोधः, [4]कारणभेदान्तरस्वभावस्येत्यर्थः । कथमित्याह–**उभयतत्त्वहानेः**–कार्यकारणभेदान्तरगतस्वभावहानेः । एतदेवाह **तद्वैलक्षण्याद्धी**त्यादिना । तद्वैलक्षण्यात्–आद्यकारणभेदस्वभाववैलक्षण्याद् यस्मात् **तस्य**–कारणभेदान्तरगतस्य **स्वभावान्तरत्वं** भिन्नत्वं **तज्जन्य-**

(विवरणम्)

ततो माहेश्वरजायाजारश्चासौ कारणिकनिवेदितश्चासौ पृष्टभीतश्च तस्य सिद्धसाध्यता स्वयं विहिता कार्यभ्युपगमरूपा तत्कल्पेयं–प्रस्तुता सिद्धसाध्यता ॥

(१३) **स्वभावाभेदेने**ति । यदि हि य एव कार्यस्वभाव आद्येन कारणेन जन्यते स एवापरेणापीत्यभ्युपगम्यते तदा कारणयोः स्वभावस्याभेदादैक्यमेव भवेदिति ॥

(१४) **आद्यकारणभेदस्वभावजन्यजनकत्वविरोध** इति । आद्यश्चासौ कारणभेदस्तस्य सम्बन्धी स्वभावस्तेन जन्यो यः कार्यस्वभावः तज्जनकत्वविरोधः कारणभेदान्तरगतस्वभावान्तरस्य । कार्यकारणभेदान्तरगतस्वभावान्तरस्य ॥

(१५) **कार्यकारणभेदान्तरगतस्वभावहाने**रिति । प्रथमकारणभेदस्वभावहानेरिति । प्रथमकारणभेदस्वभावमपहाय अन्यकारणभेदान्तरस्वभावः कोऽपि नास्ति यः प्रथमकारणभेदस्वभावजनिते कार्ये व्यापिपृयात्; तथा प्रथमकारणभेदस्वभावजनितं कार्यं[5] स्वभावमपहाय अन्यः कश्चित् तस्य स्वभावविशेषो नास्ति योऽन्येन कारणस्वभावभेदेन जन्यते, तस्य परिपूर्णप्रथमकारणस्वभावतयोत्पत्तेरिति ॥

१ 'उभयत्वहानेः' इति ग–पाठः । २ 'तस्य भावान्तरत्वं' इति ग–पाठः । ३ 'अन्यत्वापत्तेः' इति ङ–पाठः । ४ 'कारणान्तरभेदा०' इति ङ–पाठः । ५ 'स्वभाव(म)पहायान्यः कश्चित्ते(त् ते)न जन्यो' इति ख–पाठः ।

( मूलम् )

**तद्वन्न[1] पुष्कलं वैलक्षण्यमन्यजन्यविविक्ततया [2]वेतरस्य तज्जन्यता अन्यजन्यत्वे अपि तु तदसिद्धेरतिप्रसङ्गादिति नोभयो रूपनियमः । एकाजनकत्वे च सर्वाजनकत्वमित्यहेतुकतद्भावापत्त्या न न्यायानुसारि विकल्पितमिति भावनीयम् ॥**

**एतेन "न ब्रूमोऽन्यस्य तज्जनकं रूपं नास्तीति, किन्तु यत् तदेकस्य जनकं तदन्यस्य नेति; अन्योऽपि स्वरूपेणैव जनको न पररूपेणेति, अतद्रूपत्वात्; तद्यथास्वं भिन्नाश्च जनकाश्च स्वभावेन,**

---

( स्वो० व्या० )

**जनकत्वे च**–आद्यकारणभेदस्वभावजन्यजनकत्वे च तस्य स्वभावान्तरस्य **तद्वत्**–आद्यकारणभेदस्वभाववत् **न पुष्कलं [3]वैलक्षण्यं** कारणभेदान्तरस्वभावस्य तथा **अन्यजन्यविविक्त[4]तया वेतरस्य**–कार्यस्वभावस्य **तज्जन्यता**–आद्यकारणभेदस्वभावजन्यता **अन्यजन्यत्वे अपि तु**–कारणभेदान्तरस्वभावजन्यत्वेऽपि तु **तदसिद्धेः**–इतरस्य तज्जन्यताऽसिद्धेः । असिद्धिश्च **अतिप्रसङ्गात्**–अनिष्टस्यापि तज्जन्यतापत्तेः । **इति**–एवं **नोभयोरपि**–इष्टजन्यजनकयोः **रूपनियमः**, स्वभावनियम इत्यर्थः । **एकाजनकत्वे च** उक्तदोषभयादिष्यमाणे **सर्वाजनकत्वं** तद्वदन्येषामप्यजनकत्वात् तत्स्वभावत्वाभ्युपगमात् । **इति**–एव**महेतुकतद्भावापत्त्या**–विवक्षितकार्यभावापत्त्या **न न्यायानुसारि विकल्पितमिति भावनीयमेतत्** ॥

**एतेनेत्यादि** । एतेन–अनन्तरोदितेन न ब्रूम इत्यादि यावत् कोऽत्र न्याय इत्यादि सर्वं प्रतिक्षिप्तमिति सम्बन्धः । **न ब्रूमोऽन्यस्य**–कारणभेदस्य **तज्जनकं**–विवक्षितनिर्भागैककार्यजनकं **रूपं नास्तीति, किन्तु यत् तदेकस्य जनकं** कारणभेदस्य **तदन्यस्य**–कारणभेदस्यैव **नेति** । किमुक्तं भवति ? । **अन्योऽपि स्वरूपेणैव जनकः, न पररूपेण,** कारणभेदान्तररूपेणेति । कुत इत्याह–**अतद्रूपत्वात्**–

---

( विवरणम् )

(१३) **अन्यजन्यविविक्ततया [5]वेति** । अन्येषां–प्रथमकारणव्यतिरिक्तानां कारणविशेषाणां यानि जन्यानि–कार्यान्तराणि तान्यन्यजन्यानि तेभ्यो विविक्तता–भेदस्तया वा ॥

(२२) **यत् तदेकस्य जनकं कारणभेदस्येति** । यत् तदेकस्य–कारणभेदस्य सम्बन्धि जनक रूपम् ॥

---

१ 'तन्न पुष्कल' इति ग–पाठ । २ 'चेतरस्य' इति ग–पाठ । ३ 'वैलक्षण' इति ङ–पाठ । ४ 'तया चेतरस्य' इति क–पाठ. । ५ 'चेति' इति ङ–पाठ. ।

( मूलम् )

**एकस्माद्धि जनकाद् व्यावर्त्तमानस्तद्रूपो न स्यान्नातत्कार्यः, तेनैव तत् कार्यं कर्त्तव्यमिति कोऽत्र न्यायः"[1] इत्यादि सर्वं प्रतिक्षिप्तम्, उक्तवदतद्रूपस्य तत्कार्यत्वविरोधात्। तेनैव तत् कार्यं कर्त्तव्यमिति निरंशत्वे सति ततो भावस्यैव न्याय्यत्वात् कृतकरणेऽतिप्रसङ्गात्। तथाहि–तद्भिन्नः स एव करोति, नान्ये। को ह्यत्र भेदाविशेषे विशेष**

( स्वो० व्या० )

विवक्षितकारणभेदस्य तदन्यारूपत्वादिति । **तद्यथास्वं**–यथाऽऽत्मीयं **भिन्नाश्च** ते कारणभेदाः–रूप-बीजादयः **जनकाश्च स्वभावेन**–स्वसत्तया । इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**एकस्माद्धी**त्यादि । एकस्माद् यस्मात् **जनकाद् व्यावर्त्तमानः** कारणभेदः विवक्षितसामग्र्यन्तर्गतः । किमित्याह–**तद्रूपो न स्यात्**–आद्यकारणभेदरूपो न स्यात्–न भवेत् **नातत्कार्यः,** किन्तु तत्कार्य एव, तत्–विवक्षितं निर्भागैकरूपमनेकोद्भवं कार्यमस्येति तत्कार्यस्तस्य प्रतिषेधो न तत्कार्यः अतत्कार्यस्तदयं नातत्कार्यो भवेत्। एतदेव द्रढयन्नाह[2]–**तेनैव**–चाद्येन कारणभेदेन **तत् कार्यं कर्त्तव्यमिति कोऽत्र** नियमः?। अनेकोद्भवस्वभावं न तत एवं(?व) भवतीत्यभिप्रायः । **इत्यादि सर्वं**–**वार्त्तिको**क्तम्। किमित्याह–**प्रतिक्षिप्तम्** । कुत इत्याह–**उक्तवत्**–यथोक्तम्। तथाहि–'य एकेन जन्यते स एवापरेणापि' इत्यादि[3] तथा **अतद्रूपस्य**–कारणभेदस्य **तत्कार्यत्वविरोधात्**–आद्यकारणभेदकार्यत्वविरोधात् चर्चितमेतदिति। [4]**तेनैव** च–आद्येन कारणभेदेन **तत् कार्यं**–विवक्षितं निर्भागैकरूपं **कर्त्तव्यमिति** नियम एष परनीत्या । कथमित्याह–**निरंशत्वे सति** कार्यस्य निर्भागैकरूपतया **ततः**–आद्यात् कारणभेदाद् **भावस्यैव**–कार्यभावस्य **न्याय्यत्वात्** कारणात् आद्यकारणभेदेनैवासौ कृत इति **कृतकरणेऽतिप्रसङ्गात्** कार्यभावस्य । एतदेव भावयति **तथाही**त्यादिना । तथाहीति पूर्ववत् । (**तद्भिन्नः**)

( विवरणम् )

(९) **तदन्यारूपत्वादि**ति । न विद्यते रूपं–स्वभावो यस्यासावरूपस्तदन्येन–उक्तव्यतिरिक्तेन कारणभेदान्तरेणेत्यर्थः, अरूपः–अस्वभावस्तस्य भावः–तत्त्वं तस्मात् । अनेकोद्भवनस्वभावं न तत एव भवतीत्यभिप्रायः । अनेकेभ्यः कारणेभ्य उत्पत्तिस्वभावं कार्यं एकस्मादेव कारणान्न भवतीत्यर्थः ॥

(१९) **अतद्रूपस्य कारणभेदस्ये**ति । आद्यकारणाभावस्य ॥

१ वार्तिके । २ 'द्दढयन्' इति क–पाठः । ३ द्रष्टव्यं १६०तमं पृष्ठम् । ४ 'तेनैव वोद्येत(?) कारण०' इति ङ–पाठः ।

( मूलम् )

इति वाच्यम् । स्यादेतत्–भेदाविशेषेऽपि कुतश्चिदात्मातिशयात् कश्चिज्जनकः, नान्ये। स हि तस्यैव स्वभावः, नान्येषाम्, तथाविधहेत्वभावादिति । एतदप्यसत्, तदन्वयोपलब्धिमन्तरेण तावतां तत्स्वभावत्वनियमे तत्समाषकव्यतिरेकेण प्रतिपादनोपायाभावात् ॥

किञ्चै[1]व[2]मप्यनेकैककारणे न कारणभेदो भेदकः स्यादित्यनिवृत्तः प्रसङ्गः । स्यादेतत्–कः पुनरत्र प्रसङ्गार्थः ? । यदि न विशेषकः स्यादित्ययमर्थः, तदप्ययुक्तम्, विजातीयानेकव्यावृत्तिमतः कार्यस्वभावस्योत्पादनात् । अथ न खण्डशो जनकः स्यादित्ययमर्थः,

---

( स्वो० व्या० )

तस्मात्–आद्यकारणभेदाद् भिन्नः सन् **स एव करोति** तदपरः कारणभेदः तत्सामग्र्यन्तर्गतः, **नान्ये**–परसामग्र्यन्तर्भूताः । **को ह्यत्र भेदाविशेषे** सति **विशेष इति वाच्यमे**तदित्यतिप्रसङ्गः । **स्यादेत**दित्यादि । स्यादेतत्–अथैवं मन्यसे–**भेदाविशेषेऽपि** सति **कुतश्चिदात्मातिशयात्**–आत्मधर्मात् **कश्चित्**–कारणभेदो **जनकः** तत्सामग्र्यन्तर्गत एव, **नान्ये**–तदपरसामग्र्यन्तःपातिनः । किमित्येतदेवमित्याह–**स हि तस्यैव स्वभावो** विवक्षितकारणभेदस्य, **नान्येषां**–तदपरसामग्र्यन्तःपातिनाम् । कुत इत्याह–**तथाविधहेत्वभावात्**, हेत्वायत्तश्च कारणभेदस्य तत्स्वभाव **इति । एतदप्यसत्** परोदितम् । कथमित्याह–**तदन्वयोपलब्धिमन्तरेण** तेषां–कारणभेदानां विशिष्टसामग्र्यन्तोऽन्वयोपलब्धिमन्तरेण निरन्वयनश्वरतया **तावतां तत्स्वभावत्वनियमे** सति । किमित्याह–**तत्समाषकव्यतिरेकेण** तत्समाषकः–शपथविशेषः तमन्तरेण **प्रतिपादनोपायाभावात्**, निरन्वयानन्तरभावित्वमात्रस्य तदन्याविशेषादित्यर्थः ॥

अभ्युच्चयमाह **किञ्चे**त्यादिना । किञ्च **एवमपि**–उक्तनीत्या **अनेकेषामेककारणे** सति । किमित्याह–**न कारणभेदो भेदकः स्यात्** । **इति**–एव**मनिवृत्तः प्रसङ्ग** उक्तदोषलक्षणः । **स्यादेत**दित्यादि । अथैवं मन्यसे–**कः पुनरत्र**–न कारणभेदो भेदकः स्यादित्युक्तौ **प्रसङ्गार्थः ? । यदि न विशेषकः स्यात्** कारणभेद **इत्ययमर्थः** । एतदधिकृत्याह–**तद(प्य)युक्तम्** । कथमित्याह–**विजातीयानेकव्यावृत्तिमतः कार्यस्वभावस्य** अधिकृतस्य–**उत्पादनात्** कारणभेदानाम् ।

---

१ 'वमप्य तर्हि तद्भिन्न स एव करोति नैकैककरणेन न कारणभेदो' इति **क**–पाठ प्रक्षेपमिश्रो भाति । २ 'मप्यनेकै करणे न कारणभेदो' इति **ग**–पाठ ।

(मूलम्)

**तथापि निरंशत्वाद् वस्तुरूपस्य भागश उत्पादनं नेष्टमेवेत्यप्रसङ्ग एव । एतदप्ययुक्तम्, उक्तदोषानतिवृत्तेः, अनेकस्मादेकोत्पादायोगाच्च । तथाहि—भिन्नेभ्यस्तुल्यसामर्थ्येभ्योऽतुल्याभिन्नभावे कथमविरोध इति चिन्त्यम् । स्यादेतत्—किमत्र चिन्त्यते ? एकस्मिन्नधिकरणे भेदाभेदयोर्विरोधात् । इह तु कारणं भिन्नं कार्यं चाभिन्नमिति को विरोधः ? । अपि च हेतोः फलात्मापत्त्या कार्यकारणभावव्यवस्थायां स्यादनेकस्मादेकोत्पत्त्ययोगो यथा परमते । तत्र ह्येको हेतुः फलात्मतां प्रतिपन्न इत्यपरस्य कार्यात्मन्यवकाशासम्भवादानर्थ-**

(स्वो० व्या०)

**अथ न खण्डशो जनकः**—खण्डं खण्डं प्रति जनकः कारणभेदः **स्यादित्ययमर्थः, तथापि**—अत्राप्यर्थे **निरंशत्वाद् वस्तुरूपस्य भागश उत्पादनं नेष्टमेव,** निर्भागैककार्यकारणस्वभावेभ्योऽनेकेभ्यस्तथाविधैकोत्पत्तेः । **इति**—**एवमप्रसङ्ग एव** उक्तदोषलक्षणः । एतदाशङ्क्याह—**एतदप्ययुक्तम्**—अनन्तरोदितम् । कुत इत्याह—**उक्तदोषानतिवृत्तेः** कारणात् । अभ्युच्चयमाह—**अनेकस्मादित्यादि** । अनेकस्मात् कारणात् स्वमतभेदापेक्षया **एकोत्पादायोगाच्च** । एतदेव भावयति **तथाहीत्यादिना** । तथाहीति पूर्ववत् । **भिन्नेभ्यस्तुल्यसामर्थ्येभ्यः**, कारणभेदेभ्य इति प्रक्रमः, **अतुल्याभिन्नभावे** सति कार्यस्य **कथमविरोध इति चिन्त्यम्** । **स्यादेतत्—किमत्र चिन्त्यते ? एकस्मिन्नधिकरणे**—आधारे **भेदाभेदयोर्विरोधात्** । **इह तु कारणं भिन्नम**नेकसमग्रभेदं **कार्यं चाभिन्नं**—निर्भागैकरूप**मिति को विरोधः ? । अपि च हेतोः फलात्मापत्त्या** तत्तथाभावेन **कार्यकारणभावव्यवस्थायां** सत्यां **स्यादनेकस्मात्** कारणात् **एकोत्पत्त्ययोगो यथा परमते**—त्वाममधिकृत्य । एतदेव भावयति **तत्र हीत्यादिना** । तत्र यस्मात् **एको हेतुः फलात्मतां**[1] **प्रतिपन्न इति** कृत्वा **अपरस्य**—हेतोः **कार्यात्मनि अवकाशासम्भवात्** कारणात् **आनर्थक्यम् । यदा पुनः**

(विवरणम्)

(२०-२१) **एकस्मिन्नधिकरणे आधारे भेदाभेदयोर्विरोधादिति** । एकमेव कार्यं कथं भिन्नमभिन्नं च भवतीत्यर्थः ॥

(२१) **अनेकसमग्रभेदमिति** । रूपालोकाद्यनेकसमग्रभेदस्वभावं कारणमित्यर्थः ॥

---

१ 'फलात्मनां' इति क-पाठः ।

(मूलम्)

**क्यम् । यदा पुनः कारणानि स्वस्मिन्नेव स्वभावे व्यवस्थितानि कार्यमुत्पादयन्ति तदा कोऽयोगः ? । न च हेतोः फलात्मापत्तिः प्रतीतिसिद्धाऽपि, बीजादेर्विसदृशाङ्कुरादिवेदनादिति । अत्रोच्यते– सोऽयमषण्ढत्वलक्षणोऽपत्यजन्मविरोधी दोषः । तथाहि–हेतोः फलात्मापत्त्या तत्स्वभावत्वपुंस्त्वे सति तत्तथाभवनेनाभवत् कार्यापत्यं स्वस्वभावानवस्थित्यपुंस्त्वयुक्ताच्छुक्राद्यभावे असत् सद् भवतीत्यपि सुभाषितमेतत् । न च सर्वेषां तदेकजननस्वभावत्वे तदपरोदयो न्याय्यः, तत्रैव [1]सामर्थ्यनिरोधात् । अस्ति चायं**

(स्वो० व्या०)

**कारणानि स्वस्मिन्नेव स्वभावे व्यवस्थितानि** तत्स्वभावतया **कार्यमुत्पादयन्ति तदा कोऽयोगः ?** । न कश्चित् । **न च हेतोः फलात्मापत्तिः प्रतीतिसिद्धाऽपि** लोके । कथमित्याह–**बीजादेर्विसदृशाङ्कुरादिवेदनादिति** । अत्र–परो[2]पन्यस्ते **उच्यते–सोऽयमषण्ढत्वलक्षणोऽपत्यजन्मविरोधी दोषः** । अदोष एव दोष इत्यर्थः । एतदेव भावयति **तथाही**त्यादिना । तथाहीति पूर्ववत् । **हेतोः फलात्मा[3]पत्त्या** हेतुभूतया **तत्स्वभावत्वपुंस्त्वे सति** अन्वय[4]सिद्धे हेतोस्**तत्तथाभवनेन**–हेतोः फलभवनेन **अभवत् कार्यापत्यं** दैवयोगतः **स्वस्वभावानवस्थिति**रेव तुच्छा **अपुंस्त्वं [5]तद्युक्ता** निरन्वयनाशेन हेतोरिति वर्तते **शुक्राद्यभावे**-तत्स्वभावत्वक्षयेण **असत् सद् भवति**-अभाव एव भावतां प्रतिपद्यत इत्यपि **सुभाषितमेतत्**, सबीजं न भवत्यबीजं तु भवतीति योऽर्थः । **न चे**त्यादि । न च **सर्वेषां**–हेतुभेदानां **तदेकजननस्वभावत्वे**, विवक्षितनिर्भागैककार्यजननस्वभावत्वं इति भावः, **तदपरोदयः**–कार्यान्तरोत्पादो **न्याय्यः** । कथमित्याह– **तत्रैव**–विवक्षितकार्ये **सामर्थ्यनिरोधात्**, अन्ययोगव्यवच्छेदनिरोधादित्यर्थः ।

(विवरणम्)

(२४) **अन्ययोगव्यवच्छेदनिरोधादित्यर्थ** इति । अन्ययोगस्य–कार्यान्तरजननसम्बन्धलक्षणस्य व्यवच्छेदः–अभावोऽन्ययोगव्यवच्छेदेन वि(?नि)रोधात् कार्यान्तरजननसामर्थ्यस्य ॥

१ 'सामर्थ्यविरोधात्' इति क–पाठ । २ 'पन्यास्त' इति ङ–पाठ । ३ 'त्मापत्त्या हेतुभूतया०' इति क–पाठ । ४ 'सिद्धि हेतो०' इति ङ–पाठ । ५ 'तद्युक्तवच्चिर०' इति क–पाठ ।

## ( मूलम् )

**तदैव( क ? )स्वसन्तताव[1]पि चक्षुरा[2]द्युत्पत्तेः। न च रूपं येन स्वभावेन सभागक्षणं जनयति तेनैव [3]विसभागक्षणमालोकादि, एकस्यानेकजनकत्[4]वायोगात्, योगेऽपि तत्तुल्यतापत्तेः, अतुल्याश्च रूपालोकादयः, न च कारणाभेदे कार्यस्य भेद इति युक्तम्, अभ्युपगमप्रकोपात्, इष्टश्चायम्, तत एव सर्वतत्प्रसूतेः। न चोपादाननिमित्त[5]भेदतस्तत्र सामग्रीभेदः, तेषामेकस्वभावत्वात् तत्कल्पनाबीजाभावात्; अन्यथा तद्भिन्नस्वभावतापत्तिः। इति तद्‌भेदादपि फलभेदो दुःस्थित एव। सर्वेषां सर्वजननस्वभावत्वाद्दुःस्थित इति**

## ( स्वो० व्या० )

**अस्ति [6]चायं**–तदपरोदयः। कुत इत्याह–**तदैकस्वसन्तताव‍पि** हेतुभेदेभ्यः **चक्षुराद्युत्पत्तेः। न चे**त्यादि। न च **रूपं येन स्वभावेन सभागक्षणं**–रूपक्षणमेव **जनयति तेनैव विसभागक्षणमालोकादि**। 'आदि'शब्दात् चक्षुरादिग्रहः। कुतो नेत्याह–**एकस्य**–कारणभेदस्य **अनेकजनकत्वविरोधात्** एकस्वभावतया। **योगेऽपी**त्यादि। योगेऽप्यनेकजनकत्वस्य किमित्याह–**तत्तुल्यतापत्तेः**–अनेकतुल्यतापत्तेर्हेत्वभेदादित्यर्थः। **अतुल्याश्च रूपालोकादयो**ऽनेके। **न चे**त्यादि। न च **कारणाभेदे** सति तत्त्वतः **कार्यस्य भेद इति युक्तम्**। कुत इत्याह–**अभ्युपगमप्रकोपात्। इष्टश्चायं**–कारणाभेदे कार्यभेदः। कथमित्याह–**तत एव**–तेभ्य एव रूपालोकादिभ्यो विवक्षितनिर्भागैककार्यजननस्वभावेभ्यः **सर्वतत्प्रसूतेः** सर्वेषां तेषां–रूपालोकादीनां स्वसन्ततावुत्पत्तेः। **न चे**त्यादि। न च **उपादाननिमित्तभेदतो** रूपे रूपमुपादानमालोकादयो निमित्तं आलोकादिष्वप्यालोकादयः उपादानं रूपादयो निमित्तमित्येवं **तत्र**–समग्रेषु **सामग्रीभेदः**। कुतो नेत्याह–**तेषां**–हेतुभेदानां रूपादीना**मेकस्वभावत्वात्** अत एव **तत्कल्पनाबीजाभावात्**–उपादाननिमित्तकल्पनाबीजाभावात्। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा**–एवमनभ्युपगमे **तद्भिन्नस्वभावतापत्तिः** तेषां–हेतुभेदानां रूपादीनां भिन्नस्वभावतापत्तिः, न येनैव स्वभावेनोपादानं तेषां तेनैव निमित्ततेति अभिधानमात्रभेदापत्तेः। **इति**–एवं **तद्भेदादपि**–सामग्रीभेदादपि **फलभेदः**–रूपालोकादिर्**दुःस्थित एव। सर्वेषा**मित्यादि। सर्वेषां–हेतुभेदानां रूपादीनां **सर्वजनन-**

१ 'वपि च चक्षु०' इति **ग**–पाठः। २ 'राद्युपपत्तेः' इति **ग**–पाठः। ३ 'विभागक्षण०' इति **ग**–पाठः। ४ 'त्वामोगात्' इति **ग**–पाठः। ५ 'भेदात् तत्र' इति **ग**–पाठः। ६ 'चार्यं' इति **क**–पाठः।

( मूलम् )

**चेत्, न, तावद्भ्यस्तावदुत्पादे सर्वेषामेकस्वभावता। तथैकोपयोगित्वं कार्याणां निरंशता प्रकटो जातिभेदस्तदेकैकापेक्षया सामग्रीभेदश्चेति शोभनमदुःस्थितत्वम्। अभिन्नतावत्स्वभावजत्वे ह्यमीषां तदन्यतरवत् सर्वेषां तत्तुल्यतापत्तिः तत्स्वभाववैचित्र्यं वेत्यलङ्घनीया न्यायमुद्रा॥**

**स्यादेतद्धेतुस्वभावसङ्क्रान्तिपक्षे[1]ऽयं दोषः। तत्र हि तस्यैव तथाभवनमिति कार्यतुल्यता, अत एव च तत्स्वभाववैचित्र्यं वेत्यनिवारितमेतत्। यदा तु तत्प्रतीत्योत्पादतस्तद्भावस्तदा हेतूनां निमित्त-**

( स्वो० व्या० )

**स्वभावत्वात्**–अखिलरूपालोकादिजननस्वभावत्वात् **अदुःस्थित इति चेत्** फलभेदः। एतदाशङ्क्याह–**नेत्यादि**। **न तावद्भ्यः**–हेतुभेदेभ्यो रूपादिभ्यः **तावदुत्पादे**–अनेकरूपादिफलोत्पादे। किमित्याह–**सर्वेषां**–रूपालोकादीनां **एकस्वभावता** विवक्षितनिर्भागैककार्यापेक्षयाऽङ्गीकृता। **तथैकोपयोगित्वं** विवक्षितनिर्भागैककार्यापेक्षमङ्गीकृतमेव। तथा **कार्याणां निरंशता** निर्भागैकरूपतया अनेकप्रतीत्यभावेऽपि, तथा **प्रकटो जातिभेदः** कार्याणामेव रूपादित्वेन **तदेकैकापेक्षया** कार्याण्यधिकृत्य **सामग्रीभेदश्चेति शोभनमदुःस्थितत्वम्**, उक्तदोषेभ्यो नादुःस्थितत्वमित्यर्थः। सकलपिण्डार्थमाह–**अभिन्नतावत्स्वभावजत्वे**–एकस्वभावानेकरूपादिस्वभावजत्वे यस्मात् **अमीषां**–कार्याणां **तदन्यतरवत्**–रूपाद्यन्यतरवत् **सर्वेषाम्**–आलोकादीनां **तुल्यतापत्तिः** अभिन्नतावत्स्वभावजत्वादेव येभ्य एव स्वभावेभ्यो रूपमुत्पन्नं तेभ्य एवालोकादय इत्यपि कृत्वा **तत्स्वभाववैचित्र्यं वा** तेषामेव–हेतुभेदानां रूपादीनां स्वभाववैचित्र्यं वा। एतेन[2] 'तथाविधसर्वजननस्वभावाः' इत्यपि व्युदस्तम्, बलात् तद्वैचित्र्यापत्तेः। **इति**–एवम**लङ्घनीया न्यायमुद्रा**। एतल्लङ्घने न्यायभेद इति भावनीयम्[3]॥

**स्यादेतत्**–अथैव मन्यसे **हेतुस्वभावसङ्क्रान्तिपक्ष** एव कार्ये **अयं दोषः**–अनन्तरोदितः। **तत्र** यस्मात् हेतुसङ्क्रान्तिपक्षे **तस्यैव**–हेतोः **तथाभवनं** कार्यरूपतया **इति**–एवं **कार्यतुल्यता, अत एव**–तत्तथाभवनात् **तत्स्वभाववैचित्र्यं** [4]**वेति**–सर्वेषां सर्वजननस्वभाववैचित्र्य [5]वेति **अनिवारितमेतद्** भवत्येवेत्यर्थः।

१ 'पक्षे ह्यय' इति क–पाठ। २ 'एतेन न तथा०' इति क–पाठ। ३ 'भावनीय.' इति ङ–पाठ.। ४ 'चेति' इति ङ–पाठ.। ५ 'चेत्यनि०' इति ङ–पाठ।

( मूलम् )

मात्रत्वान्न कश्चिद् दोष इति । एतेन 'कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य भिन्ना एव विशेषाः' इत्येतदपि प्रत्युक्तमिति । अत्रोच्यते–तदिदं पिशाचभयात् पितृवनसमाश्रयणम् । नहि कथञ्चित् हेतुस्वभावसङ्क्रान्तिमन्तरेणासत्सद्भवनापत्त्या कार्यभाव एव युज्यत इत्युक्तप्रायम् । स उपलभ्यत इति चेत्, को वा किमाह ? कथं न युज्यत इति ? भवन्नीत्या वेदितम् । कश्चायं [1]तत्प्रतीत्योत्पादः ? तदनन्तरभावित्वम् । नेदं क्षणिकैकान्तवादिनोऽशेषतत्कालभाविभावसाधारणत्वेन तद्भावसिद्धये, नियमहेत्वभावात् । तथाहि–विवक्षितहेतुक्षणानन्तरं तत्कालभावि सर्वमेव भुवनोदरगतं क्षणजातमुत्पद्यते, ततस्तत्स्वरूपाद्यननुवेधतुल्यतायामयमेवास्य हेतु-

( स्वो० व्या० )

यदा तु–यदा पुनः तत्प्रतीत्योत्पादतः–तेभ्यः प्रतीत्योत्पादनेन तद्भावः तावत् कार्यभावस्तदा–तस्मिन् काले हेतूनां निमित्तमात्रत्वात् कारणात् न कश्चिद् दोष इति । एतेनेत्यादि । एतेन–अनन्तरोदितेन कारणानां रूपादीनां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य–विज्ञानादेः भिन्ना एव विशेषाः–रूपा तदाभासतेत्येवमादय इत्येतदपि प्रत्युक्तं–परिहृतमिति । अत्रोच्यते–तदिदमित्यादि । तदिदं–लोक[2]प्रवादनिबन्धनं पिशाचभयात् पितृवनसमाश्रयणम् । अत्राधिकृतदोषसम्भवः । एतदेवाह न हीत्यादिना । न यस्मात् कथञ्चित्–केनचित् प्रकारेण हेतुस्वभावसङ्क्रान्तिमन्तरेण असत्सद्भवनापत्त्या प्रमाणविरुद्धकार्यभाव एव युज्यत इत्युक्तप्रायं–प्रायेणोक्तम् । स उपलभ्यत इति चेत् कार्यभावः । एतदाशङ्क्याह–को वा किमाह ? । उपलभ्यत एव । कथं न युज्यत इति परः । भवन्नीत्या वेदितमिति ग्रन्थकारः । कश्चायं तत्प्रतीत्योत्पाद इति प्रश्नः । तदनन्तरभावित्वमिति [3]परवचनम् । नेदं–तदनन्तरभावित्वं क्षणिकैकान्तवादिनोऽशेषतत्कालभाविभावसाधारणत्वेन हेतुना तद्भावसिद्धये, प्रक्रमात् हेतुफलभावसिद्धये । कुत इत्याह–नियमहेत्वभावात् । एनमेव स्पष्टयन्नाह तथाहीत्यादिना । तथाहीत्युपप्रदर्शने । विवक्षितहेतुक्षणानन्तरं तत्कालभावि सर्वमेव भुवनोदरगतं क्षणजात-

१ 'तत्प्रीत्योत्पादः' इति ग–पाठः । २ 'प्रवाहनिबन्धनं' इति ङ–पाठः । ३ 'परवञ्चनम्' इति ङ–पाठः ।

(मूलम्)

रिदमेव चास्य फलमिति कुतोऽयं नियमः ?। विधूय मोहतिमिरमालोच्यतामेतदिति । किमत्रालोच्यम् ? तत्स्वभावत एव तन्नियमसिद्धेः सर्वस्य सुस्थितत्वात् । तथाहि–तयोरेव हेतु-फलयोः स स्वभावो येन स एव तस्यैव हेतुस्तदेव च तस्यैव फलमिति । अतोऽशेषतत्कालभाविभावसाधारणत्वेऽपि तदनन्तरभावित्वस्य, अपरत्र तत्स्वभावत्वाभावात् अस्यैव च नियमहेतुत्वात् [1]तद्भावसिद्धिरिति । तथाहि–तस्यैवासौ स्वभावो येन तदनन्तरं भवत् तदेव तत् कार्यमितरदेव च तत्कारणं नान्यदिति ॥ अत्रोच्यते–एतदपि यत्किञ्चित्, अन्वयापत्तेः, अन्यथा शब्दार्थायोगात् । तथाहि–स्वो भावः

(स्वो० व्या०)

**मुत्पद्यते,** अन्यथा सर्वं क्षणिकमिति प्रतिज्ञाव्याघातः । **ततः**–एवं व्यवस्थिते सति **तत्स्वरूपाद्यननुवेधतुल्यतायां** सत्याम**यमेवास्य हेतुः** तथा **इदमेव चास्य फलमिति कुतोऽयं नियमः ?** । न कुतश्चिदित्यर्थः । **विधूय मोहतिमिरमालोच्यतामेतदिति** । आह–**किमत्रालोच्यम् ?** । **तत्स्वभावत एव**–हेतुफलस्वभावत एव **तन्नियमसिद्धेः**–हेतुफलभावनियमसिद्धेः **सर्वस्य सुस्थितत्वात्** किमत्रालोच्यमिति ? । एतदेव भावयति **तथाही**त्यादिना । तथाहीति पूर्ववत् । **तयोरेव हेतु-फलयोः**–विवक्षितयोः **स स्वभावो येन**–स्वभावेन **स एव**–विवक्षितः **तस्यैव**–विवक्षितस्य **हेतुः, तदेव च**–विवक्षितं **तस्यैव**–विवक्षितस्य हेतोः **फलमिति** । **अतः**–अस्मात् स्वभावात् **अशेषतत्कालभाविभावसाधारणत्वेऽपि** कस्येत्याह–**तदनन्तरभावित्वस्य** । **अपरत्र**–अविवक्षितहेत्वादौ **तत्स्वभावत्वाभावात्** कारणात् **अस्यैव**–तत्स्वभावत्वस्य **नियमहेतुत्वात्** कारणात् **तद्भावसिद्धिः**–हेतुफलभावसिद्धिरिति । एतदेव भावयति **तथाही**त्यादिना । तथाहीति पूर्ववत् । **तस्यैवासौ स्वभावः** कारणस्य **येन**–स्वभावेन **तदनन्तरं भवत्**–कारणानन्तरं भवत् **तदेव**–विशिष्टं **तत् कार्यमितरदेव** च विवक्षितं **तत्कारणं**–विवक्षितकार्यकारणं **नान्यत्** तदनन्तरभावित्वे सत्यपि **इति** । एतदाशङ्क्याह–**अत्रोच्यते–एतदपि यत्किञ्चित्**–असारम् । कुत इत्याह–**अन्वयापत्तेः, अन्यथा**–अन्वयापत्तिमन्तरेण **शब्दार्थायोगात्** ।

१ 'तदभावसिद्धेरिति' इति ग–पाठः ।

(मूलम्)

स्वभाव इत्यात्मीया सत्ता, तस्यैव हेतोरियमात्मीया सत्ता यत् तदनन्तरं भवत् तदेव तत् कार्यमिति तस्यैव तथाभवनेऽन्वय[1]सिद्धिः, अतत्स्वभावत्वे च तदनन्तरं न तद्भावः, भावे वाऽतिप्रसङ्ग इति कुतो हेतुफलभावनियमः ?। नन्वलमनेन वाक्छलेन । तस्यायं स्वभावः स्वधर्मो [2]यदपगच्छति तस्मिन् तदनन्तरं तदेव भवति। स्यादेतत्-एवं यदि तदाऽन्यन्न भवेत्, भवति च। किं तेन भवता ?। न तत् तत इति चेत्, इतरस्य ततो भावे को हेतुः ?। तत्स्वभाव एवेति चेत्, न असौ तत्स्वरूपाद्यनुवेधवैकल्ये तदनन्तरभावि-

(स्वो० व्या०)

एतदेवाह तथाहीत्यादिना। तथाहीति पूर्ववत्। स्वो भावः स्वभाव इति। किमुक्तं भवति? आत्मीया सत्ता। अयं भावार्थः-तस्यैव हेतोरियमात्मीया सत्ता यत् तदनन्तरं भवत्-विवक्षितहेत्वनन्तरं तदेव-विवक्षितमेव तत् कार्यम्। इति-एवं तस्यैव-हेतोस्तथा-[3]कार्यभावेन भवनेऽन्वयसिद्धिः। विपक्षे बाधामाह अतत्स्वभावत्वे चेत्यादिना । अतत्स्वभावत्वे च हेतोः तदनन्तरं-विवक्षितहेत्वनन्तरं न तद्भावः-न विवक्षितकार्यभावः, भावे वा तस्य अतिप्रसङ्गः अतत्स्वभावत्वाविशेषे तदपरभावापत्त्या। इति-एवं कुतो हेतुफलभावनियमः ?। नैवेत्यर्थः । नन्वलमनेन वाक्छलेन । तस्यायं स्वभाव इति कोऽर्थः ?। स्वधर्मः । किम्भूत इत्याह-यदपगच्छति तस्मिन् तदनन्तरं तदेव भवति-विवक्षितं कार्यमिति। एतदाशङ्क्याह-स्यादेतत्-एवं परोदितं यदि तदा-तदनन्तरकाले अन्यन्न भवेद् भवति च। ततश्चाव[4]धारणार्थायोगः। किं तेन-अन्येन भवता ?। न तत्-अन्यत् तत इति चेत्-विवक्षितात् कारणात्। एतदाशङ्क्याह-इतरस्य-तत्फलाभिमतस्य ततः-विवक्षिताद्धेतोर्भावे को हेतुः ?। तत्स्वभाव एवेति चेत्-विवक्षितस्वभाव एवेति चेत् हेतुः। एतदाशङ्क्याह-न असौ-तत्स्वभावः तत्स्वरूपाद्यनुवेधवैकल्ये-हेतुस्वरूपाद्यनुवेधविकलभावे, 'आदि'शब्दाद् गुणपरिग्रहः, तदनन्तरभावित्व-

(विवरणम्)

(२७) हेतुस्वरूपाद्यनुवेधविकलभाव इति । हेतोः-मृदादेः स्वरूपं-मृत्त्वादि तस्यानुवेधः-घटादौ [5]कार्येऽनुवृत्तिस्तस्य विकलभावे, विकलत्व इत्यर्थः ॥

(२७) 'आदि'शब्दाद् गुणपरिग्रह इति । अत्र सौरभादिगुणो गृह्यते तत्-

१ 'सिद्धेः' इति क-पाठः। २ 'यदापि गच्छति' इति क-पाठः। ३ 'कार्याभावेन' इति ङ-पाठः। ४ 'धारणावर्थायोगः' इति क-पाठः। ५ 'कार्यानुवृत्ति०' इति क-पाठः।

( मूलम् )

**त्वमन्तरेण गम्यते, तच्चाशेषतत्कालभाविभावसाधारणमेवेति परित्यज्यतामसदभिनिवेशः । तेऽन्यदाऽन्यतोऽपि भवन्ति तत् तु तत एवेति विशिष्टतत्स्वभावत्वावगतेरदोष इति चेत्, न, विवक्षितानामन्यदाऽभावेन अन्यतो भावासिद्धेः, सामान्येन तु तस्यापि [1]सिद्धेः । एवमपि तदेव तज्जननस्वभावमितरदेव च तज्जन्यस्वभावमित्यभ्युपगमे न्यायबाधा, एवम्भूतस्य वाङ्मात्रेण स्वभावान्तरस्याप्यभिधातुं शक्यत्वात् । तथाहि–एवमपि [2]वक्तुं पार्यत एव मृत्पिण्ड एव पटजननस्वभावः, पट एव च तज्जन्यस्वभावः, इत्येवं तन्तव**

( स्वो० व्या० )

**मन्तरेण गम्यते** एतावन्मात्रनिबन्धन एवेत्यभिप्रायः । **तच्च**–तदनन्तरभावित्वम् । **अशेषतत्कालभाविभावसाधारणमेवेति** कृत्वा **परित्यज्यतामसदभिनिवेशः** । **ते**–अशेषतत्कालभाविनो भावा **अन्यदा**–अन्यस्मिन् काले**ऽन्यतोऽपि भवन्ति** प्रबन्धापेक्षया **तत्** पुनः–विवक्षितं कार्यं **तत एव**–विवक्षितात् [3]कारणात् । **इति**–एवं **विशिष्टतत्स्वभावत्वावगतेः** कारणा**ददोष इति चेद**नन्तरोदितः । एतदेवाशङ्क्याह–**नेत्यादि** । न–नैतदेवं **विवक्षितानाम्**–अशेषतत्कालभाविनां भावाना**मन्यदाऽभावेन** हेतुना **अन्यतः**–हेत्वन्तराद् **भावासिद्धेः** । विशिष्टा हि ते तदैव भवन्ति, नान्यदेति भावनीयम् । **सामान्येन तु तस्यापि**–विवक्षितस्य कार्यस्य [4]**सिद्धेः** अन्यदेति । **एवमपि**–तत्त्वनीतौ **तदेव**–विवक्षितं कारणं **तज्जननस्वभावं**–विवक्षितकार्यजननस्वभावं इ[तरे]**तरदेव च**–विवक्षितं कार्यं **तज्जन्यस्वभावं**–विशिष्टकारणजन्यस्वभाव**मित्यभ्युपगमे** । किमित्याह–**न्यायबाधा** । कथमित्याह–**एवम्भूतस्य** परमार्थतो निबन्धनस्य **वाङ्मात्रेण** हेतुना **स्वभावान्तरस्याप्यभिधातुं शक्यत्वात्** । एतदेवाह **तथाहीत्या**दिना । तथाहीति पूर्ववत् । **एवमपि**–वक्ष्यमाणनीत्या **वक्तुं** [5]**पार्यत** एव, न जिह्वान्तरे [6]डोङ्गरो भवति यदुत **मृत्पिण्ड एव पटजननस्वभावः, पट एव च तज्जन्य-**

( विवरणम् )

पिण्डादिभावमात्रापत्त्येति । यदि हि तद्देशा[7]भिन्ने घटे मृदोऽनुगमः स्यात्, तदा असावपि मृत्पिण्डादिपाच्यस्वरूपमात्र एव स्यादित्यर्थः ॥

१ 'सिद्ध.' इति ग–पाठ । २ 'वक्तु शक्यत एव अमृत्पिण्ड०' इति क–पाठ । ३ 'करणात्' इति क–पाठ । ४ 'सिद्धि.' इति ङ–पाठ । ५ 'पर्यायत एव' इति क–पाठ. । ६ 'डोन्तरो' इति ङ–पाठ । ७ 'भिन्नघटे' इति च–पाठ ।

(मूलम्)

एव घटजननस्वभावाः, घट एव च तज्जन्यस्वभावः, इति हेतुफलभावापत्त्या न्यायबाधेति । [1]तद्देशाभेदेनेत्थं तत्तत्स्वभावत्वकल्पना विरुध्यत इति चेत्, न, तथातत्तत्स्वभाववैचित्र्यतस्तत्[2]कालभेदेन च वो विरोधासिद्धेः, तत्र तत्सत्ताऽननुगमात् तदनुगमे तदुपादानत्वापत्तेः । कथं [3]विरोधासिद्धिरिति चेत्, तत्स्वभावस्याचिन्त्यशक्तित्वात् पर्यनुयोगायोगात्; अतिप्रसङ्गात् । [4]इति तस्यैव तथाभावमन्तरेण देशाभेदेऽपि समानत्वाच्च । तत्रैव तद्रूपानुकारो

(स्वो० व्या०)

स्वभावः–मृत्पिण्डजन्यस्वभावः, इत्येवं **तन्तव एव घटजननस्वभावाः, घट एव च तज्जन्यस्वभावः**–तन्तुजन्यस्वभावः । **इति**–एवं **हेतुफलभावापत्त्या न्यायबाधेति** भावितम् । **तद्देशे**त्यादि । तयोः–मृत्पिण्डादि-पटाद्योः **देशभेदेन** हेतुना [5]**इत्थम्**–एवमुक्तनीत्या **तत्तत्स्वभावत्वकल्पना** [6]**विरुध्यते । इति चेत्**, एतदाशङ्क्याह–**ने**त्यादि । न–नैतदेवं **तथा**–तेन प्रकारेण देशभेदलक्षणेन [7]**तत्तत्स्वभाववैचित्र्यतः**–मृत्पिण्डादिपटादिस्वभाववैचित्र्येण **तत्कालभेदेन च** तयोः–मृत्पिण्ड-घटाद्योः कालभेदेन च **वः**–युष्माकं **विरोधासिद्धेः** मृत्पिण्डो युष्माकं भिन्नक्षणघटजननस्वभाव एव । एवं घटमधिकृत्य भिन्नदेशपटजननस्वभावत्वेऽप्यस्याविरोध एवेति भावनीयम् । **तत्रे**त्यादि । तत्र–तद्देशभिन्ने पटादौ **तत्सत्ताऽननुगमात्**–मृत्पिण्डादिसत्ताऽननुगमात् **अनुगमे तदनुपादानत्वापत्तेः** मृत्पिण्डादिभावमात्रापत्त्या । **कथं विरोधासिद्धिरिति चेत्**, विरोधसिद्धिरेवेत्यर्थः । एतदाशङ्क्याह–**तत्स्वभावस्य**–मृत्पिण्डादिस्वभावस्य **अचिन्त्यशक्तित्वात्** कारणात् विरोधासिद्धिः । [8]तथा **पर्यनुयोगायोगात्** स्वभावस्य तथा **अतिप्रसङ्गात्** मृत्पिण्डादपि घटे तत्सत्तानुगम एवेति भावनीयम् । **इति**–एवं **तस्यैव**–हेतोः **तथाभावमन्तरेण**–कार्यभावं विना **देशाभेदेऽपि** सति **समानत्वाच्चे**ति भावनीयम् । **तत्रैव**–[9]मृत्पिण्डाद् घटादौ **तद्रूपानुकारो दृश्यते**–मृद्रूपानुकारः,

(विवरणम्)

(२५) **समानत्वाच्चेति** । हेत्वन्वयाभावे सति मृत्पिण्डघटयोर्मृत्पिण्डयोर्वा समान एव कार्यकारणभाव इत्यर्थः ॥

१ 'तद्देशे भेदेनेत्थं' इति ग–पाठः । २ 'भेदेनैव वा विरोधा०' इति ग–पाठोऽशुद्धः । ३ 'विरोधादिसिद्धि०' इति ग–पाठः । ४ 'इति' इति पाठो नास्ति ग–प्रतौ । ५ 'इत्येवमुक्त०' इति ङ–पाठः । ६ 'निरुध्यते' इति ङ–पाठः । ७ 'तत्स्व०' इति ङ–पाठः । ८ 'तत् तथा' इति क–पाठः । ९ 'मृत्पिडते(?) घटादौ' इति ङ–पाठः ।

(मूलम्)

**दृश्यते नेतरत्रेति चेत्, [1]अस्त्येतत्; किन्त्वसौ न तत्स्वरूपाद्यनु-[2]वेधमन्तरेण। ततः किमिति चेत्, अनिवारितोऽन्वयः॥**

**एतेन बीजादेर्विसदृशाङ्कुरादिवेदनं प्रत्युक्तम्, तस्यैव तथाभवनात्, अन्यथा तदनुपपत्तेः तथाभाविहे[3]त्वभावात्, तुच्छप्रागभावे तदभवनमात्रतया प्रध्वंसाभाववत् तदनुपपत्तेरिति भेदकहेतुभावतः कथञ्चित् तद्रूपानु[4]कारसिद्धेरिति॥**

(स्वो० व्या०)

**नेतरत्रेति चेत्**-पटादौ। एतदाशङ्क्याह-**अस्त्येतदि**त्यादि। अस्त्येतद् यदुक्तं परेण, **किन्त्वसौ**-तद्रूपानुकारो **न तत्स्वरूपाद्यनुवेधमन्तरेण**-न मृत्स्वरूपगुणानुवेधं विना। **ततः किम्?। इति चेत्**, एतदाशङ्क्याह-**अनिवारितः अन्वयः**, तत्स्वरूपाद्यनुवेधस्यैवान्वयत्वात्॥

**एतेने**त्यादि। एतेन-अनन्तरोदितेन **बीजादेः** सकाशाद् **विसदृशाङ्कुरादिवेदनं प्रत्युक्तम्**। कथमित्याह-**तस्यैव**-बीजादेस्**तथाभवनात्**-अङ्कुरादिरूपेण भवनात्, सन्तत्या प्रभावगुणफलान्वयोपलम्भादिति भावः। इत्थ चैतदङ्गीकर्त्तव्यमित्याह-**अन्यथा**-तस्यैव तथाभवनमन्तरेण **तदनुपपत्तेः**-अङ्कुराद्यनुपपत्तेः। अनुपपत्तिश्च **तथाभाविहेत्वभावात्** तथा-अङ्कुरादिप्रकारेण भवितुं शीलमस्येति तथाभावी, तथाभावी चासौ हेतुश्च तस्याभावात्, **तुच्छप्रागभावे** सति विवक्षितकार्यस्य **तदभवनमात्रतया**-विवक्षितकार्याभवनमात्रतया तत्त्वतः प्रागभावस्य **प्रध्वंसाभाववदि**ति निदर्शनम्। सोऽपि तदभवनमात्रमेवेत्यर्थः। **तदनुपपत्तेः**-कार्यानुपपत्तेः। न हि प्रध्वंसाभावः का[5]र्यं भवतीति भावनीयम्। नैव प्रागभावोऽपि भवति च कार्य**मिति**-अतो **भेदकहेतुभावतः** कारणाच्चित्रक्षित्युदकादेः **कथञ्चित्**-केनचित् प्रकारेण प्रभावगुणफलान्वयलक्षणेन **तद्रूपानुकारसिद्धेः**-बीजादिरूपानुकारसिद्धेः अङ्कुरादौ बीजादेर्विसदृशाङ्कुरादिवेदन प्रत्युक्त**मिति**॥

(विवरणम्)

(१६) **सन्तत्या प्रभावगुणफलान्वयोपलम्भादिति**। सन्तत्या-[6]प्रवाहेण प्रभावगुणयोः कारणसत्कयोः फले-कार्येऽन्वयस्योपलम्भादिति भाव इति परमार्थः॥

(२१) **सोऽपि तदभवनमात्रमेवेति**। सोऽपि-प्रागभावः, न केवलं प्रध्वंसाभाव इत्यर्थः, तदभवनमात्रमेव-कार्यस्याभवनमात्रमेव तुच्छम्। ततो यथा प्रध्वंसाभावस्तुच्छत्वान्न कार्यीभवत्येवं प्रागभावोऽपि मा भवतु, तुच्छत्वस्याविशिष्टत्वात्॥

१ 'अस्त्वेतत्' इति क-पाठ। २ 'बन्धमन्तरेण' इति क-पाठ। ३ 'हेतुभावात्' इति ग-पाठ। ४ 'कारिसिद्धे०' इति ग-पाठ.। ५ 'कार्यीभवति' इति ङ-पाठ। ६ 'प्रवाहेण रूपयो फले' इति क-पाठ।

(मूलम्)

यच्चोक्तम्[1]–'एतेन कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य भिन्ना एव विशेषा इत्येतदपि प्रत्युक्तमिति' एतदप्ययुक्तम्, कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य तदविरोधात्, तदेकानेकस्वभावत्वात्, तथोपलब्धेः, धर्मकीर्तिनाऽप्यभ्युपगतत्वात्, हेतुबिन्दौ "भिन्नस्वभावेभ्यश्चक्षुरादिभ्यः सहकारिभ्य एककार्योत्पत्तौ न कारणभेदात् कार्यभेदः स्यादित्याशङ्क्य न यथास्वं स्वभावभेदेन तद्विशेषोपयोगतस्तदुपयोगकार्यस्वभावविशेषासङ्करात्" इत्यादेः स्वयमेवाभिधानात् ॥

स्यादेतत्–अभिहितमिदम्, अन्यार्थं त्वभिहितम्। कस्तर्ह्यस्यार्थः? स हि 'न कारणभेदो भेदकः स्यादिति' चोद्यं 'तत्रैव सामर्थ्यान्नापरा-

(स्वो० व्या०)

यच्चोक्तमित्यादि। यच्चोक्तं पूर्वपक्षे[2]–'एतेन कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य भिन्ना एव विशेषा इत्येतदपि प्रत्युक्तमिति' एतदपि अयुक्तं प्रत्युक्तम्। कथमित्याह–कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य तदविरोधात्–भिन्नविशेषार(?) विरोधात्। अविरोधश्च तदेकानेकस्वभावत्वात् तस्य–कार्यस्यैकानेकस्वभावत्वात्, एकानेकस्वभावत्वं च [3]तस्य तथोपलब्धेः–एकानेकस्वभावतयोपलब्धेर्विज्ञानं नीलं कुशलमित्यादिसंवेदनात् तदुपलब्धिर्भावनीया। इहैव हेत्वन्तरमाह–धर्मकीर्त्तिनाऽप्यभ्युपगतत्वात् कारणानां तेभ्यः कार्ये तदविरोधस्य। एतदेवाह हेतुबिन्दौ ग्रन्थे–भिन्नस्वभावेभ्यश्चक्षुरादिभ्यः सहकारिभ्य एककार्योत्पत्तौ सत्यां, विज्ञानोत्पत्तावित्यर्थः, न कारणभेदात् कार्यभेदः स्यात् अनेकेभ्य एकस्वभावेन इत्याशङ्क्य न यथास्वं स्वभावभेदेन–न चैतदेवं यथास्वं–यथाऽऽत्मीयं स्वभावभेदेन तद्विशेषोपयोगतः–[5]कारणविशेषोपयोगात् तदुपयोगकार्यस्वभावविशेषासङ्करात्–कारणविशेषोपयोगात् कार्ये स्वभावविशेषासङ्करात् इत्यादेर्ग्रन्थात् स्वयमेवाभिधानात् धर्मकीर्त्तिनेति ॥

स्यादेतत्–अभिहितमिदम्, अन्यार्थं त्वभिहितमिति। एतदाशङ्क्याह–कस्तर्ह्यस्यार्थोऽभिहितस्य? । स हि–धर्मकीर्त्तिः 'न कारणभेदो भेदकः

(विवरणम्)

(२०-२१) तेभ्यः कार्ये तदविरोधस्येति। तेभ्यः–भिन्नेभ्यः कारणस्वभावेभ्यः कार्ये–आधारभूते तदविरोधस्य–विशेषाविरोधस्य ॥

१–२ १६८तमे पृष्ठे। ३ 'तस्य' इत्यधिको ग–पाठः। ४ 'अस्य' इति ङ–पाठः। ५ 'करणविशेषोपयोगेन तदुप०' इति ङ–पाठः।

(मूलम्)

परजननम्' इत्यनेनैवानवकाशं मन्यते, एवं स्पष्टीकृतमप्यर्थतत्त्वं यो नाम स्वदर्शनानुरक्तमतिस्तत्र विश्वशक्तिवैकल्यं न प्रतिपद्यते धावति च चोद्यं कर्तुं स मुग्धबुद्धिरित्थमपि शक्यः तूष्णीमित्युपहासपरं कारणोपयोगकृतं कार्यस्वभाव[1]विशेषासङ्करमुक्तवान्। परमार्थतस्तु न भवन्त्येव कारणानां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य भिन्ना एव विशेषा इत्ययमर्थ इति। अत्रोच्यते-उपहासपरमित्येतत् सत्यम्, स मुग्धबुद्धिरित्थमपि शक्यः तूष्णीमित्येतदप्येवम्, तस्य विशिष्टबोधाभावात्। यस्तु [2]सन्न्यायकुशलः कुशाग्रीयबुद्धिः स कथमधिकृतचोद्यं तत्रैव [3]सामर्थ्यादित्यादिनाऽनवकाशं मन्येत? तत्रैव सामर्थ्ये [4]तत्समानजातीयापरापराजननवन्न तदन्यपरापरजननमपि। इति किं न पश्यत्यसौ येन तथा मन्यत इत्युक्तप्रायं चात्र। तस्मान्न श्रौत-

(स्वो० व्या०)

स्यादिति' एतत् चोद्यं तत्रैव-विवक्षिते कार्ये सामर्थ्यात् [5]नापरापरजननमित्यनेनैव ग्रन्थेन अनवकाशं मन्यते। एवं स्पष्टीकृतमप्यर्थं यो नाम कश्चित् स्वदर्शनानुरक्तमतिः तत्र-कार्ये विश्वशक्तिवैकल्यं तत्कारणापेक्षया न प्रतिपद्यते साङ्ख्यादिः धावति च चोद्यं कर्तुं 'न कारणभेदो भेदकः स्यात्' इत्येवं स मुग्धबुद्धिः-चोद्यचञ्चुः इत्थमपि शक्यस्तूष्णीमिति-मूक इति उपहासपरं कारणोपयोगकृतं कार्यस्वभावविशेषासङ्करमुक्तवान् हेतुबिन्दौ; परमार्थतस्तु न भवन्त्येव कारणानां-चक्षुरादीनां भिन्नेभ्यः स्वभावेभ्यः कार्यस्य-विज्ञानादेः भिन्ना एव विशेषा इत्ययमर्थस्तस्येति। एतदाशङ्क्याह-अत्रोच्यते। उपहासपरमित्येतत् सत्यम्, अप्रमाणोपपन्नतयेत्यभिप्रायः। स मुग्धबुद्धिरित्थमपि शक्यस्तूष्णीमित्येतदपि एवमविप्रतिपत्तिरावयोः। कुत इत्याह-तस्य-मुग्धबुद्धेर्विशिष्टबोधाभावात्, यस्तु सन्न्यायकुशलः कश्चित् कुशाग्रीयबुद्धिः-तीक्ष्णबुद्धिर्भवानिव स कथमधिकृतचोद्यं-न कारणभेदात् कार्यभेदः स्यादिति तत्रैव-सामर्थ्यादित्यादिना अनवकाशं मन्येत?। कथं च न स्यादित्याह-तत्रैव सामर्थ्ये विवक्षितकार्ये तत्समानजातीयापरापराजननवदिति निदर्शनं न तदन्यपरापरजननमपि विज्ञानान्तरा-

१ 'विशेषात् सङ्कर०' इति क-पाठ। २ 'स न्याय०' इति क-पाठ। ३ 'सामर्थ्यादिना' इति क-पाठ.। ४ 'तत्समानजातीयापरापरजननमपीति' इति ग-पाठ। ५ 'परापरजनन०' इति ङ-पाठ.।

(मूलम्)

शब्दार्थातिरेकेण तन्मतात्याग इति तदत्यागिनो न युक्तमेवमादिप्रलपनम्। श्रौतशब्दार्थाङ्गीकरणे चोक्तवन्मदीयाभ्युपगमाश्रय इति यथा यथा विचार्यते तथा तथा न परमते कार्यकारणभावो युज्यते, योगेऽपि न तन्निश्चये कश्चिदुपायः ॥

स्यादेतत्–प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इत्युपायः। इह च प्रत्यक्षमेव प्रमाणं प्रत्यक्षानुपलम्भशब्दाभ्यामुच्यते। तथाहि–कार्यकारणाभिमतपदार्थाकारं प्रत्यक्षं तद्विविक्तवस्त्वाकारमनुपलम्भ इति। एतौ च प्रत्यक्षानुपलम्भौ परस्परसहायौ[1] साधनम्। कदाचिदनुपलम्भपुरस्सरं प्रत्यक्षम्, यथाऽऽह न्यायवादी–"येषा-

(स्वो० व्या०)

जननवन्न चक्षुरादिजननमपीत्यर्थः। इति–एवं किं न पश्यत्यसौ–कुशाग्रीयबुद्धिः येन तथा मन्यत इति उक्तप्रायं चात्र व्यतिकर इति नाधिकः प्रयासः। यस्मादेवं तस्मान्न श्रौतशब्दार्थातिरेकेण तन्मतात्यागः–धर्मकीर्त्तिमतात्यागः, किन्तु त्याग एव। इति–एवं तदत्यागिनः, प्रक्रमाद्धर्मकीर्त्तिमतात्यागिनः किमित्याह–न युक्तमेवादिप्रलपनं यथोक्तमसम्बद्धमिति[2]। श्रौतशब्दार्थाङ्गीकरणे च सति किमित्याह–उक्तवत्–यथोक्तं प्राक् तथा मदीयाभ्युपगमाश्रयः तदेकानेकस्वभावापत्त्या। इति–एवं यथा यथा विचार्यते सूक्ष्मेक्षिकया तथा तथा न परमते–क्षणिकैकान्तवादिमते कार्यकारणभावो युज्यते। निदर्शितमेतन्न्यक्षेण। योगेऽपीत्यादि। योगेऽपि कार्यकारणभावस्य न तन्निश्चये–न कार्यकारणभावनिश्चये कश्चिदुपायः परस्य ॥

स्यादेतदित्यादि। स्यादेतत्–अथैवं मन्यसे–प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इति अस्ति उपायः। अस्यैव[3] भावार्थमाह इह चेत्यादिना। इह च–प्रस्तुतोपाये प्रत्यक्षमेव प्रमाणं प्रत्यक्षानुपलम्भशब्दाभ्यां द्वाभ्यामुच्यते। एतद्भावनायाह–तथाहीत्यादि। तथाहीति पूर्ववत्। कार्यकारणाभिमतपदार्थाकारं प्रत्यक्षं प्रत्यक्षमुच्यते, तद्विविक्तवस्त्वाकारं–कार्यकारणाभिमतपदार्थविविक्तवस्त्वाकारं प्रत्यक्षमेव अनुपलम्भ इति। एतौ च प्रत्यक्षानुपलम्भौ परस्परसहायौ सन्तौ साधनम्, कार्यकारणभावस्येति प्रक्रमः। कथमित्याह–कदाचिदनुपलम्भपुरस्सरं प्रत्यक्षम्, यथाऽऽह न्यायवादी–धर्मकीर्त्तिः

१ 'सहायं कदा०' इति ग–पाठश्चिन्त्यः। २ 'सम्बन्धमिति' इति क–पाठः। ३ 'तस्यैव' इति ङ–पाठः।

(मूलम्)

मुपलम्भे तल्लक्षणमनुपलब्धमुपलभ्यते" इत्यादि ॥

एतेन चोपलब्धिलक्षणप्राप्तानुपलम्भेन तत्र तस्य स्वहेतोः सन्निधानात् प्रागपि सत्त्वमन्यतो देशादागमनं प्रागवस्थितकटकुड्यादिहेतुत्वं चापाकृतमिति। तथा कदाचित् प्रत्यक्षपुरस्सरोऽनुपलम्भः, यथोक्तम्—"तत्रैकाभावेऽपि नोपलभ्यते तत् तस्य कार्यम्" इति। एतदुक्तं भवति—येषां सन्निधानेन प्रवर्तमानं यद् दृष्टं तेषु मध्ये यदैकस्याप्यभावो भवति तदा नोपलभ्यते तत् तस्य कार्यम्, यथा धूमो हुतभुजः, घटादि मृदादीनाम्। इत्युपायभावान्नास्ति दोष इति।

(स्वो० व्या०)

येषामुपलम्भे मृत्पिण्डादिकारणानां तल्लक्षणम्—उपलब्धिलक्षणमेव घटादिकार्यं अनुपलब्धं सत् पूर्वमुपलभ्यत इत्यादि तत्[1] तस्य कार्यमित्यनुपलम्भपुरस्सरं प्रत्यक्षम् ॥

एतेन चोपलब्धिलक्षणप्राप्तानुपलम्भेनानन्तरोक्तेन तत्र—देशे तस्य—कार्यस्य स्वहेतुसन्निधानात् प्रागपि, हेत्वभावेऽपीत्यर्थः, सत्त्वमपाकृतमिति सम्बन्धः। तथा अन्यतो देशादागमनं कार्यस्य सत[2] एव। तथा प्रागवस्थितकटकुड्यादिहेतुत्वं चापाकृतमिति। यदि तेऽपि हेतवः स्युः स्वहेतुसन्निधानात् प्रागपि तेभ्य एवोत्पद्येत कार्यम्, न चोत्पद्यते, तस्मान्न हेतवस्ते इति। एवं कदाचिदनुपलम्भपुरस्सर प्रत्यक्षं साधनम्। तथा कदाचित् प्रत्यक्षपुरस्सरोऽनुपलम्भः साधनम्, यथोक्तं न्यायवादिनैव—"तत्रैकाभावेऽपि नोपलभ्यते तत्[3] तस्य कार्यम्" इति परग्रन्थः। एव व्याचिख्यासुराह—एतदुक्तं भवति। येषां सन्निधानेनाग्न्यादीनां प्रवर्त्तमानं यद् दृष्टं—धूमादि तेषु मध्ये यदैकस्याप्यभावो भवति अग्न्यादेरेव तदा नोपलभ्यते तत् तस्य—अनुपलभ्यमानस्य कार्यम्। निदर्शनमाह—यथा धूमो हुतभुजः—अग्नेस्तथा घटादि मृदादीनाम्। इति—एवमुपायभावात् कारणात्, तन्निश्चय इति वर्तते, नास्ति दोष

(विवरणम्)

(१२) उपलब्धिलक्षणमेवेति। लक्ष्यतेऽनेनेति लक्षणम्, उपलब्धिरेव लक्षणं—गमकं यस्य तत् तथा ॥

---

१ 'इत्यादिना तत्' इति क-पाठ। २ 'स्वत एव' इति ङ-पाठ। ३ 'तत्रास्य कार्यमेति पर०' इति क-पाठ।

( मूलम् )

**अत्र उच्यते यत्किञ्चिदेतत्, उपलम्भस्य दर्शनत्वात्, अनुपलम्भस्य चादर्शनत्वात्, दर्शनादर्शनयोश्च व्यभिचारतः परेण प्रतिक्षेपात्, तदतिरिक्तस्य चेहाप्यभावादिति ॥**

**स्यादेतत्–नाभावः, उपलब्धिलक्षणप्राप्तानुपलब्धस्य दर्शनाद् दृष्टस्य चादर्शनात्। न[1], उपलब्धिलक्षणप्राप्तस्य अनुपलम्भासिद्धेः। उपलब्धिलक्षणप्राप्तिर्ह्युपलम्भप्रत्ययान्तरसाकल्यम्। तेषामुपलम्भ-**

(स्वो० व्या०)

**इति**। एतदाशङ्क्याह–**अत्र उच्यते–यत्किञ्चिदेतत्**, असारमित्यर्थः। कुत इत्याह–**उपलम्भस्य दर्शनत्वात्** तथाऽ**नुपलम्भस्य चादर्शनत्वात्**, **दर्शनादर्शनयोश्च व्यभिचारतः** कारणात्, **परेण**–धर्मकीर्त्तिना **प्रतिक्षेपात्**, **तदतिरिक्तस्य च**–दर्शनादर्शनातिरिक्तस्य च **इहापि**–प्रत्यक्षानुपलम्भोपाये **अभावात्**, प्रत्यक्षानुपलम्भावपि दर्शनादर्शने[2] एव **इति** अर्थः ॥

**स्यादेत**दित्यादि। स्यादेतत्–अथैवं मन्यसे–**नाभावः**, प्रक्रमात् तदतिरिक्तस्य। कथमित्याह–**उपलब्धिलक्षणप्राप्तानुपलब्धस्य दर्शनाद् दृष्टस्य च**–उपलब्धिलक्षणप्राप्तस्यैव **अदर्शनात्** । एतदाशङ्क्याह–**न**–नैतदेवम्, **उपलब्धिलक्षणप्राप्तस्य** सतः **अनुपलम्भासिद्धेः**। एनामेवाह–**उपलब्धिलक्षणप्राप्ति**र्यस्मात् **उपलम्भप्रत्ययान्तरसाकल्यम्**–उपलम्भकारणान्तराणां सकलभावः। यदि नामैवं ततः किमित्याह–**तेषाम्**–उपलम्भप्रत्ययान्तराणां सकलाना-

(विवरणम्)

(१२) **दर्शनादर्शनयोश्च व्यभिचारत** इति। न ह्येकदा धूमोऽग्निसद्भावे दृष्टः, अन्यदा च[3] न दृष्टः इत्येतावतैव गम्यगमकभावो 'दासीगर्दभ'न्यायेन दर्शनादर्शनयोर्व्यभिचारात्, किन्तु कार्यकारणभावेन नियतस्वभावेन वा गम्यगमकभावः। यदुक्तम्–

"कार्यकारणभावाद् वा नियमाद् वा [4]नियामकात्।
अविनाभावनियमो दर्शनान्न न दर्शनाद् ॥"[5]

इति। मध्यवर्त्तिनो 'न'शब्दस्योभयत्र सम्बन्धाद् दर्शना(द्)दर्शनना(?)दिति दर्शनान्न दर्शनादिति मध्यवर्त्तिनो 'न'शब्दस्य उभयत्र सम्बन्धात् दर्शनादर्शन[6]भावेन नाविनाभावनियमस्तथा न दर्शनादर्शनमात्रेण नाविनाभावनियम इति ॥

१ 'नोऽपलब्धि०' इति ग–पाठोऽनादरणीयः। २ ' दर्शना एवे०' इति क–पाठः। ३ 'न च दृष्टः' इति च–पाठः। ४ 'नियमाकात्' इति ख–पाठः। ५ अनुष्टुप्। ६ 'मात्रेणाविना०' इति च–पाठः।

(मूलम्)

जननस्वभावत्वे कथं तदनुपलम्भः?। अतत्स्वभावत्वे वा तत्प्रत्ययान्तरत्वं कथम्?॥

स्यादेतत्–सहार्थेन तज्जननस्वभावानि, यथाऽऽह–"स्वभावविशेषश्च यः स्वभावः सत्स्वन्येषूपलम्भप्रत्ययेषु सन् प्रत्यक्ष एव [1]भवति"। एतदप्यसारम्, इत्थमप्युभयस्य उपलब्धिलक्षणप्राप्तिशब्देनाभिधानात् तद्भावे चानुपलम्भायोगात्। न तदा तद्भाव एव, अपि तु विद्यमानः प्रत्यक्षो भवतीति चेत्, कथं तानि तदुपलम्भप्रत्ययान्तराणि?। सह तेन तज्जननस्वभावत्वात् तथोच्यन्त इति चेत्, कथं न तदा तद्भावः, अभावे वा सह तेन तज्जननस्वभावानि?। तद्‌द्वयत्वेन

(स्वो० व्या०)

मुपलम्भजननस्वभावत्वे सति उपलम्भभावापत्त्या **कथं तदनुपलम्भः?**। नैवेत्यर्थः। **अतत्स्वभावत्वे वा**–उपलम्भाजननस्वभावत्वे वा तेषां **तत्प्रत्ययान्तरत्वम्**–उपलम्भप्रत्ययान्तरत्वं **कथम्?**। नैवेत्यर्थः॥

**स्यादेतद्**इत्यादि। स्यादेतत्–अथैवं मन्यसे–**सहार्थेन** अवलम्बनाख्येन **तज्जननस्वभावानि**–उपलम्भजननस्वभावानि, **यथाऽऽह** न्यायवादी–**स्वभावविशेषश्च**–पदार्थविशेषश्च। किमुक्तं भवतीत्याह–**यः स्वभावः**–पदार्थः **सत्स्वन्येषु उपलम्भप्रत्ययेषु**–चक्षुरादिषु **सन्**–विद्यमानः **प्रत्यक्ष एव भवति**। एतदाशङ्क्याह–**एतदप्यसारम्**। कुत इत्याह–**इत्थमपि**–एवमपि **उभयस्य**–उपलम्भप्रत्ययान्तरस्वभावविशेषोभयस्य **उपलब्धिलक्षणप्राप्तिशब्देन अभिधानात्**। [2]**तद्भावे च**–अधिकृतोभयभावे च किमित्याह–**अनुपलम्भायोगात्**। **ने**त्यादि। **न तदा**–तस्मिन् काले **तद्भाव एव**–स्वभावविशेषभाव एव, **अपि तु**–किन्तु **विद्यमानः प्रत्यक्षो भवति**। **इति चेत्**, एतदाशङ्क्याह–**कथं तानि**–अधिकृतप्रत्ययान्तराणि **तदुपलम्भप्रत्ययान्तराणि?** तद्भावेऽपि तज्जननविकलान्यपीति भावः। **सहे**त्यादि। सह **तेन**–स्वभावविशेषेण **तज्जननस्वभावत्वात्**–विवक्षितोपलम्भ[3]जननस्वभावत्वात् **तथोच्यन्ते**–उपलम्भप्रत्ययान्तरत्वेनोच्यन्ते। **इति चेत्**, एतदाशङ्क्याह–**कथं न तदा**–तस्मिँस्तत्साकल्यकाले **तद्भावः**–स्वभावविशेषभावः **अभावे वा** स्वभावविशेषस्य **सह तेन**–स्वभावविशेषेण **तज्जननस्वभावानि**–

१ 'भवति, तदप्यसारम्' इति ग–पाठ। २ 'एतद्भावे' इति ङ–पाठ.। ३ 'जनने स्व०' इति ङ–पाठ।

(मूलम्)

**योग्यताऽपेक्षयेति चेत्, कथमुपलम्भाभावे न[1] त्वेतदधिगतिः?। प्रबन्धमाश्रित्य तथोपलब्ध्येति चेत्, किं सा न गोसन्निधानासन्निधानोपलब्धानुपलब्धाश्वादिदर्शने इति सम्भवत्येव क्वचिदिति। एवं च यदि तत्राप्यश्वस्य प्रागसत्त्वमन्यतो देशादनागमनमन्याकारणत्वं च सन्तानस्य शक्यते निश्चेतुम्, [2]भवतु तत्रापि हेतुफलभाव इति। एतदसमीक्ष्यैवोक्तम्, तदोपलब्धस्य प्रागसत्त्वात्, अन्यदेशादनागतेः, अन्याकारणत्वस्याप्यत एव निश्चयात् उपायाविशेषात् अन्यत्राप्येवमेवावगतेः । अन्यदाऽन्यतोऽपि भावादनिश्चय इति**

---

(स्वो० व्या०)

विवक्षितोपलम्भजननस्वभावानि, उपलम्भप्रत्ययान्तराणीति प्रक्रमः कथम्? नैवेत्यर्थः। **तदित्यादि** । तस्य-स्वभावविशेषस्य **दृश्यत्वेन** हेतुना **योग्यताऽपेक्षया । इति चेत्**, एतदाशङ्क्याह-**कथमुपलम्भाभावे** सति **न त्वेतदधिगतिः**-तद्दृश्यत्वाधिगतिः? । **प्रबन्धेत्यादि**। प्रबन्ध**माश्रित्य**-क्षणप्रवाहं **तथोपलब्ध्या**-सामान्येनापरोपलब्ध्या। **इति चेत्**, एतदाशङ्क्याह-**किं सा**-तथोपलब्धिः प्रबन्धापेक्षया सामान्येनेत्यर्थः, **न गोः सन्निधानासन्निधानाभ्यां उपलब्धानुपलब्धश्चासौ अश्वादिश्चे**ति विग्रहः, तस्य **दर्शने** किं सा न **इति सम्भवत्येव क्वचिदिति** । एतदुक्तं भवति-गोसन्निधाने उपलब्धेऽश्वस्तदसन्निधानेनोपलभ्यते, न चासौ गोः कार्यं प्राप्नोति च भवन्नीत्येति । **एवं च** कृत्वा एतदप्यसमीक्ष्यैवोक्तमिति सम्बन्धः। किं तदित्याह-**यदीत्यादि** । यदि **तत्रापि**-देशे **अश्वस्य** गोः कार्यतया परिकल्पितस्य **प्राग्**-उपलम्भसमयात् पूर्व**मसत्त्वं** शक्यते, निश्चेतुमिति सम्बन्धः, तथाऽ**न्यतो देशादनागमनं** शक्यते निश्चेतुम्। एव**मन्याकारणत्वं च सन्तानस्य** अश्वसम्बन्धिनः **शक्यते निश्चेतुं** यदि, **भवतु तत्रापि हेतुफलभाव इति**। एतद**प्यसमीक्ष्यैव**-अनालोच्यैव **उक्तं** न्यायविदा **वार्त्तिके** । कथमित्याह-**तदोपलब्धस्य**, प्रक्रमादश्वस्य, **प्रागसत्त्वात्** निरन्वयासदुत्पादेन **अन्यदेशादनागतेः**, अत एव हेतोः **अन्याकारणत्वस्यापि, अत एव** द्वयात् **निश्चयात्**, निश्चयश्च **उपायाविशेषात्** प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इत्युपायस्तदविशेषात्। एतदेवाह-**अन्यत्रापि**-धूमानलादौ **एवमेवावगतेः** अन्याकारणत्वस्य। **अन्यदेत्यादि**। अन्यदा-अन्यस्मिन् कालेऽ**न्यतोऽपि भावाद**श्वस्य **अनिश्चयः**। **इति**

---

१ 'नन्वेतदधि०' इति **क**-पाठः। २ 'भवतु न तत्रापि' इति **ग**-पाठः।

(मूलम्)

**चेत्, न, तस्यान्यदा भावासिद्धेः। सन्तानापेक्षया सिद्धिरिति चेत्, क एतद् वेद इति निभाल्यतां स्वतन्त्रम्। विशिष्टबोधसन्तानजो विकल्प इति चेत्, कुतस्तस्यान्य[1]तरैकबोधजत्वे तथावैशिष्ट्यम्?। तथाविधहेतुभ्यस्तद्धेतुभावादिति चेत्, एतदपि प्रतिनियतार्थतया भवद्विज्ञानगोचरातीतमेव। किं तेन?। प्रतीतिरियमीदृशीति चेत्, अ[2]स्त्येषा तन्त्रत्यागिनी तु न युक्तोपन्यसितुम्। न ह्येषा तथाऽनुभवप्रतीयमानान्वया सर्वथा तद्ग्राहिबोधविकलाद् बोधमात्राद् भवितुमर्हति ॥**

**न चैकजातीया अपि न भिन्नहेतुजाः, वह्न्यरणिसूर्योपलादिभ्यः अनलाद्युदयदर्शनात्। न चैतेषां जातिभेदोऽपि, तुल्यतया प्रतीतेः।**

(स्वो० व्या०)

**चेत्**, एतदाशङ्क्याह–**न, तस्य**–अश्वविशेषस्य **अन्यदा भावासिद्धेः। सन्ताने**त्यादि। **सन्तानापेक्षया सिद्धिरिति चेत्**, अन्यदा अश्वविशेषस्य। एतदाशङ्क्याह–**क एतद् वेद**–जानाति **इति निभाल्यतां स्वतन्त्रम्**। क्षणनिरन्वयनश्वरैकवस्त्वालम्बनानि वि[3]ज्ञानानीति भवतः स्वतन्त्रम्। अस्मिन्नेवं व्यवस्थिते क एतद् वेद इति?। **विशिष्टे**त्यादि। विशिष्टश्चासौ **बोधसन्तान**श्च **त**ज्जो **विकल्पः। इति चेत्**, एतदाशङ्क्याह–**कुतस्तस्य**–अधिकृतविकल्पस्य **अन्यतरैकबोधजत्वे** सति **तथावैशिष्ट्यं** येनैतद् वेद?। **तथाविधे**त्यादि। तथाविधहेतुभ्यः परम्परया **तद्धेतुभावात्** तस्य–विकल्पस्य हेतुभावात्–तथाविधान्यतरबोधभावात्। **इति चेत्**, एतदाशङ्क्याह–**एतदपि**–अनन्तरोदित **प्रतिनियतार्थतया** कारणेन **भवद्विज्ञानगोचरातीतमेव। किं तेने**त्यादि। किं तेन–[4]मदीयविज्ञानागोचरेण?। **प्रतीतिरियं**–प्रस्तुताश्वादिगोचरा **ईदृशी। इति चेत्**, एतदाशङ्क्याह–**अस्त्येषा**–प्रतीतिः **तन्त्रत्यागिनी तु** त्वन्नीत्या, अतो **न युक्तोपन्यसितुम्। न ह्येषे**त्यादि। न यस्मादेषा **तथा**–तेन प्रकारेण पूर्वापरीभूतबोधलक्षणेन **अनुभवेन प्रतीयमानः अन्वयो** यस्याः सा तथाविधा **सर्वथा**–एकान्तेन **तद्ग्राहिबोधविकलात्**–प्रस्तुताश्वादिग्राहिबोधविकलात्। कुत इत्याह–**बोधमात्रात्**–तथाविधान्यतरबोधभावलक्षणात् **भवितुमर्हति** इति भावनीयमेतत् ॥

अभ्युच्चयमाह **न चैके**त्यादिना। **न चैकजातीया अपि** पदार्था **न भिन्नहेतुजाः**, किन्तु भिन्नहेतुजा अपि। कुत इत्याह–**वह्न्यरणिसूर्योपलादिभ्यो**

१ 'न्यतरैके बोध०' इति क–पाठ। २ 'असत्येषा तन्त्र०' इति ग–पाठ। ३ 'विज्ञानादीनि भवत' इति क–पाठ। ४ 'मदीयज्ञानगोचरेण' इति ङ–पाठ।

( मूलम् )

**न चैवं तत्रापि तथाभावे कश्चिद् विरोधः, [1]भवन्न्यायाविशेषात्। न चात्र लोकानुसारो विशेषक इति, अभ्युपगमविचारादिति ॥**

**किञ्च ज्ञानार्थयोः क्षणिकत्वादेकैकेनैकैकग्रहणे [2]सत्यपि एतत् कारणमिदं कार्यमिति कुतोऽवसायः ?। स्यादेतत्–तयोरेव [3]तथाग्रहणात्। तथाहि–कारणज्ञानं कारणं गृह्णात्येव। तच्च विशिष्टैककार्य-**

( स्वो० व्या० )

हेतुभ्यः **अनलाद्युदयदर्शनात्**। 'आदि'शब्दाद् [4]गोमयशालूकशालूकोदयग्रहः। **न चैतेषां**–वह्न्यादिजन्यानामनलादीनां **जातिभेदोऽपि**। कुत इत्याह–**तुल्यतया प्रतीतेः** एतेषामनलादीनाम्। **न चैवं तत्रापि**–गवाश्वादौ **तथाभावे** कस्यचिदश्वस्याश्वादुत्पत्तिः कस्यचिद् गोरित्येवंभावे **कश्चिद् विरोधः**। कथमित्याह–**भवन्न्यायाविशेषात्** अन्वयशून्यस्य तत्तत्स्वभावतामात्रस्य सर्वत्र वक्तुं शक्यत्वात्। ततश्च गोरप्यश्वजननस्वभावादश्वाविरोध इति परिचिन्तनीयमेतत्। इतराश्वस्य तु तत्र कटकुड्यसमानता गोर्जनकत्वं चेत्यलं प्रसङ्गेनेति भवन्न्यायाविशेषः। **न चात्र**–विचारे **लोकानुसारो विशेषक इति**। कुत इत्याह–**अभ्युपगमविचारादिति** ॥

**किञ्चे**त्यादि। अभ्युच्चयग्रन्थ एव **ज्ञानार्थयोः क्षणिकत्वात्** कारणात् **एकैकेन**–ज्ञानेन **एकैकग्रहणे सत्यपि** कारणकार्यापेक्षया **एतत् कारणमिदं कार्यमिति**–एवं **कुतोऽवसायः ?**। न कुतश्चिदपीत्यर्थः, विविक्तद्वयग्रहणेन सम्बन्धाग्रहणादिति गर्भः। **स्यादेतदि**त्यादि। अथैवं मन्यसे–**तयोरेव**–कारण-कार्ययोः **तथाग्रहणात्**–कारणकार्यतया ग्रहणात्, अवसाय इति प्रक्रमः।

( विवरणम् )

(९) **गोमयशालूकशालूकोदयग्रह** इति। गोमय-शालूकाभ्यां सकाशात् यः शालूकस्य–वृश्चिकस्योदयः–उत्पत्तिस्तस्य ग्रहः–स्वीकारः। तत्र कोऽपि गोमयात् [5]कैश्चिच्च वृश्चिकाद् वृश्चिक उत्पद्यत इत्यर्थः ॥

यदि हि गोक्षणात् सकाशादश्वक्षणः समजनि तदा प्राच्याश्वक्षणेन किं कृतमित्याह–(१४-१५) **इतराश्वस्य तु तत्र कटकुड्यसमानता गोर्जनकत्वं चे**ति। इतराश्वस्य तु–पाश्चात्यक्षणस्य [6]पुनस्तत्राग्रेतनेऽश्वक्षणे कटकुड्यसमानता, अकिञ्चित्करत्वमित्यर्थः। गोर्जनकत्वं च–अग्रेतनगोक्षणोत्पाद(क)त्वं च गोक्षणोऽश्वे व्यावृत्ते अश्वक्षणश्च गवीत्यर्थः ॥

१ 'भवेन्न्याया०' इति **ग**–पाठः। २ 'सत्यपि तत्' इति **ग**–पाठः। ३ 'तथाग्रहणेन' इति **ग**–पाठः। ४ 'गोमयादिशालूक०' इति **ङ**–पाठः। ५ 'कश्चित्वश्चित्ववृश्चिकात्' इति **ख**–पाठः; **च**– पाठस्तु 'कश्चित्ववृश्चिकात्'। ६ 'पुनस्तत्राग्रतनाश्व०' इति **क**–पाठः।

( मूलम् )

**जननस्वभावमिति तथैव गृह्णाति, अन्यथा तदग्रहणप्रसङ्गात्। एवं कार्यमपि विशिष्टकारणजन्यस्वभावमिति तथैव गृह्यते, तत्सामर्थ्यप्रभवश्च विकल्पस्तथैव प्रवर्त्तत इति न्याय्यस्तदवसाय इति। अत्र उच्यते–विशिष्टकार्यजननस्वभावग्रहणं विशिष्टकारणजन्यस्वभावग्रहणं चेतरेतरग्रहणात्मकं न वः स्वराद्धान्तनीत्योपपद्यत इत्युक्तप्रायम्। उपपत्तावपि सर्वत्र तथाग्रहणात् अविनाभावग्रहणमन्तरेणापि धूमादिग्रहणादेवानलादिगतिरनिवारणीया। समनन्तरवैकल्यात् नेति चेत्, न, क्वचित्[1] तत्तुल्यतायामप्यभावात्, समुद्र-**

( स्वो० व्या० )

एतदेव भावयति **तथाहीत्यादिना**। तथाहीति पूर्ववत्। **कारणज्ञानं कारणं गृह्णात्येव**। तच्च–कारण[2] **विशिष्टैककार्यजननस्वभावमिति** कृत्वा **तथैव गृह्णाति** यथा तद् व्यवस्थितम्, **अन्यथा** ग्रहणे **तदग्रहणप्रसङ्गात्** कारणात्। **एवं कार्यमपि विशिष्टकारणजन्यस्वभावमिति** कृत्वा **तथैव गृह्यते** यथा तद् व्यवस्थितं **तत्सामर्थ्यप्रभवश्च**–कारणादिज्ञानसामर्थ्यप्रभवश्च **विकल्पस्तथैव प्रवर्त्तते**। **इति**–एवं **न्याय्यस्तदवसायः**–कार्यकारणावसायः। **इति चेत्**, एतदाशङ्क्याह–**अत्रोच्यते** समाधिः। **विशिष्टकार्यजननस्वभावग्रहणं** कारणगतं तथा **विशिष्टकारणजन्यस्वभावग्रहणं च** कार्यगतम्। किमित्याह–**इतरेतरग्रहणात्मकं** वर्तते, इतरेतरोपाधित्वादितरेतरविशिष्टत्वं[3]स्य। किमित्याह–**न वो**–न युष्माकं **स्वराद्धान्तनीत्या**–स्वसिद्धान्तन्यायेन **उपपद्यते इत्युक्तप्रायं**–प्रायेणोक्तम्। **उपपत्तावपि** अस्य तत्तत्स्वभावतया इतरेतरविशिष्टग्रहणस्य। किमित्याह–**सर्वत्र तथाग्रहणात्** कारणात् **अविनाभावग्रहणमन्तरेणापि**। किमित्याह–**धूमादिग्रहणादेव**, 'आदि'शब्दाद् वालकादिग्रहः; **अनलादिगतिरनिवारणीया**। इहापि 'आदि'शब्दात् जलादिग्रहः। **समनन्तरे**त्यादि। समनन्तर**वैकल्यात्** कारणा**न्नेति चेत्** अविनाभावग्रहणमन्तरेणापि धूमादिग्रहणादेवानलादिगतिरिति। एतदाशङ्क्याह–**ने**त्यादि। नैतदेवम्, **क्वचित्**–न सर्वत्र **तत्तुल्यतायामपि**–समनन्तरतुल्यतायामपि **अभावात्** अविनाभावग्रहणमन्तरेणापि धूमादिग्रहणादेवानलादिगतिरिति। एतद्भावनायैवाह–**समुद्रे**त्यादि। समुद्र**दर्शना-**

१ 'क्वचित् तुल्य०' इति ग–पाठ। २ 'कारण गृह्णात्येव तच्च कारण विशिष्ट०' इति ङ–पाठ। ३ 'त्वस्य एतत् किमि०' इति ङ–पाठ।

(मूलम्)

दर्शनानन्तरं धूमग्राहिषु तत्तुल्यतोपपत्तेः, तत्राप्यगृहीताविनाभावस्यासम्भवादिति । तत्रापि तत्तुल्यतायास्तत्त्वतोऽसिद्धिरिति चेत्, किमत्र क्षुण्णमित्यालोच्य वाच्यम् । नैकस्य कारणकारणं तद्धेतुहेतुविषयमिति चेत् सम्भवत्यपि केवलानलग्राहिणः । तदपि न तथा[1] धूमज्ञानसमनन्तर इति चेत्, ननु[2] तथेति कोऽर्थः ? । तदनन्तरं तद्भावेनेति चेत्, किमिदं तदानन्तर्यम् ? । तदनन्तरसमये तद्भावः

(स्वो० व्या०)

नन्तरं यानपात्राद्यारूढानां धूमादिग्राहिषु प्रमातृषु तत्तुल्यतोपपत्तेः समन्तरतुल्योपपत्तेः । ततः किमित्याह—तत्रापीत्यादि । तत्रापि—यथोदितधूमग्राहिषु अगृहीताविनाभावस्य—'नालिकेर'द्वीपवासिनः प्रमातुः असम्भवाद् धूमादिग्रहणादेवानलादिगतेरिति । तत्रापीत्यादि । तत्रापि—यथोदितधूमग्राहिषु तत्तुल्यतायाः—समनन्तरतुल्यतायास्तत्त्वतः—परमार्थेन असिद्धिः । इति चेत्, एतदाशङ्क्याह—किमत्र क्षुण्णं येन तत्तुल्यताया असिद्धिः इत्यालोच्य वक्तव्यं स्वदर्शनस्थितिमित्यभिप्रायः । नैकस्येत्यादि । नैकस्य—समनन्तरस्य 'नालिकेर'द्वीपवासिप्रमातृसम्बन्धिनः कारणकारणं प्रदीर्घहेतुपरम्पराभावि तद्धेतुहेतुविषयं तस्य—सामान्येन धूमग्राहिसमनन्तरस्य हेतुः—धूमस्तस्यापि हेतुः—अग्निस्तद्विषयमग्निविषयम् । इति चेत्, एतदाशङ्क्याह—सम्भवतीत्यादि । सम्भवत्यपि कारणकारणं तद्धेतुहेतुविषयः[3] केवलानलग्राहिणः—'नालिकेर'द्वीपवासिनोऽपि । तदपीत्यादि । तदपि केवलानलग्राहिणः न तथा—तेन प्रकारेण धूमज्ञानसमनन्तरः । इति चेत्, एतदाशङ्क्याह—ननु तथेति कोऽर्थः प्रबन्धापेक्षया भवतीत्यभिप्रायः ? । तदनन्तरमित्यादि । तदनन्तरं—केवलानलग्रहणानन्तरं तद्भावेन—धूमग्रहणभावेन । इति चेत्,

(विवरणम्)

(१८) धूमग्राहिसमनन्तरस्येति । धूमग्राही चासौ समनन्तरश्च धूमग्राहिसमनन्तरस्तस्य । अयमभिप्रायः—योऽयं 'नालिकेर'द्वीपवासी प्रमाता तस्य न कदाचिदग्निगोचरं ज्ञानं पूर्वमजनि, इतरस्य तु प्रमातुः प्रदीर्घज्ञानक्षणपरम्परायां पावकप्रलोकनः[4] क्षणोऽजनीत्यसौ धूमदर्शनात् तं प्रतिपद्यत इति ॥

(२१) न तथा—तेन प्रकारेणेति । यथैतद्देशवासिनः प्रमातुः प्रदीर्घपरम्परायां[5] अग्निज्ञानमजनि न तथा 'नालिकेर'द्वीपवासिन इति ॥

१ 'तथाविधधूम०' इति ग-पाठः । २ 'न तु तथेति' इति ग-पाठः । ३ 'विषयं केवला०' इति ङ-पाठः । ४ 'प्रलोकानः क्षणो' इति च-पाठः । ५ 'परम्परायां पावकप्रलोकनः क्षणोऽजनि इत्यसौ धूमदर्शनात् तं प्रतिपद्य' इति च-पाठः । तदनन्तरं तत्र विवरणान्तरस्य पाठस्यांशः ।

( मूलम् )

**इति चेत्, तदभावे तद्भावः। इष्यत एवैतदिति चेत्, स इतरस्यापि तुल्यः। तदनन्तरं तद्भावेनातुल्य इति चेत्, तदभावभाविनः किमनेन?। सोऽनन्तरभावी तद्धेतुर्भवतीति चेत्, नासत् सद्भाविन इत्युक्तम्। स तस्य जनक इति चेत्, न किञ्चित् तल्लक्षणमस्य। ततस्तद्भाव एवेति चेत्, भूतेनापि किं तेन तदितर-**

---

( स्वो० व्या० )

एतदाशङ्क्याह-**किमिदं तदानन्तर्यं** तदुत्तरकालभावितयाऽस्त्येवैतदित्यभिप्रायः। **तदनन्तरे**त्यादि। तदनन्तर**समये**-केवलानलग्रहणानन्तरसमये **तद्भावः**-धूमग्रहणभावः। **इति चेत्**, एतदाशङ्क्याह-**तदभावे तद्भावः**, केवलानलग्रहणाभावे धूमग्रहणभाव इत्यर्थः। **इष्यत** इत्यादि। इष्यत **एवैतद्** यदुत तदभावे तद्भावः। **इति चेत्**, एतदाशङ्क्याह-**स** इत्यादि। स **इतरस्यापि तुल्यः** सः-तदभावे तद्भावः इतरस्यापि-केवलानलग्राहिधूमग्राहिणस्तुल्यस्तत्रापि केवलानलग्रहणाभाव एव तद्धूमग्रहणमिति कृत्वा। **तदनन्तरे**त्यादि। तदनन्तर **तद्भावेन**-केवलानलग्रहणानन्तरं धूमग्रहणभावेन अविनाभावग्रहणेऽ**तुल्यः** स इतरस्यापि तद्भावे तद्भावः। **इति चेत्**, एतदाशङ्क्याह-**तदभावभाविनः किमनेन**-केवलानलग्रहणाभावभाविनः धूमग्रहणस्य किमनेन?। तदनन्तर तद्भावेनाभावाविशेषादित्यभिप्रायः। **सोऽनन्तरभावी**त्यादि। सोऽनन्तरभावी केवलानलग्रहः **तद्धेतुर्भवति**-धूमग्रहणहेतुर्भवति। **इति चेत्**, एतदाशङ्क्याह-**नासत् सद्भाविन इत्युक्तम्**, असत् सद् भवति तच्छील[१]वेत्यसत्। सद्भावि कार्यं तस्य न हेतुः कश्चित् तत् तथा भावनेत्युक्तं प्राक्। **स तस्ये**त्यादि। सः-हेतुस्तस्य-कार्यस्य **जनकः**। **इति चेत्**, एतदाशङ्क्याह-**न किञ्चित् तल्लक्षणमस्य**-न किञ्चिज्जनकलक्षणमस्य-हेतोः। **तत** इत्यादि। ततः-हेतो**स्तद्भाव एव**-कार्यभाव एव। **इति चेत्**, एतदाशङ्क्याह-**भूतेनापी**त्यादि। भूतेनापि **किं तेन?**-तत इह प्रक्रमे धूमग्रहणेन केवलानलग्रहणात् किम्? न किञ्चिदित्याह-**तदि-**

---

( विवरणम् )

(९) **तदुत्तरकालभावितया अस्त्येवैतदित्यभिप्राय** इति। 'नालिकेर'-द्वीपवासिनो हि प्रमातुः प्रदीर्घं पूर्वं मुर्मुराद्यवस्थपावकदर्शनमभूत्, समुद्रोत्तरणानन्तरं च धूमज्ञानमुपादि इत्यस्यैवानन्तर्य्यनिरन्वयनश्वरवस्तुवादिमतेऽनन्तरचिरातीतत्वस्य विशेषाभावात्॥

---

१ 'चेत्यसत्' इति ङ-पाठ।

( मूलम् )

बोधवैकल्यात् धूममात्रग्रहणरूपत्वात् तदितरत्रापि तदुपपत्तेः। न चैवमपि तत्तत्स्वभावताऽवगमः, तथाऽप्रतीतेः[1], तदितरावगमाभावादिति तस्यैव तद्भावादावन्वयादिसिद्धिः। आह–अन्वयपक्षेऽपि केवलधूमादिग्रहणेऽनलादिगतिरनिवारणीया, पारम्पर्येण तत्राप्यन्वयोपपत्तेरिति। नानिवारणीया। न ह्यसावन्वयमात्रनिबन्धनैव, अपि तु आगमादिजविशिष्टक्षयोपशमनिबन्धनाऽपि, तमन्तरेणानन्तर्यत उभयदर्शिनोऽपि तदनुपपत्तेः, क्वचित् तथाऽदर्शनात्। न खलु समयादिनाऽनभिव्यक्तक्षयोपशमः पश्यन्नप्युत्तराधरभावेन

( स्वो० व्या० )

**तरबोधवैकल्यात्**–केवलानलग्रहणबोधवैकल्यात्, वैकल्यं च **धूममात्रग्रहणरूपत्वात्** अधिकृतबोधस्य **तदितरत्रापि**–यथोदितसमनन्तरजबोधमात्रेऽपि **तदुपपत्तेः**–धूममात्रग्रहणरूपत्वोपपत्तेः। **न चैवमपीत्यादि**। न चैवमपि न्यायतुल्यतायां **तस्य**–धूममात्रस्य 'नालिकेर'द्वीपवासिसम्बन्धिनः **तत्स्वभावतावगमः**–अग्निजन्यस्वभावतावगमः। कुत इत्याह–**तथाऽप्रतीतेः**–अग्निजन्यस्वभावत्वेनाप्रतीतेः। अप्रतीतिश्च **तदितरावगमाभावात्**–अग्न्यवगमाभावात् 'नालिकेर'द्वीपवासिनः। **इति**–एवं **तस्यैव तद्भावादौ**–केवलानलग्रहणस्यैव धूमग्रहणभावादौ। 'आदि'शब्दात् कथञ्चित् पर्यायव्यावृत्तिपरिग्रहः। किमित्याह–**अन्वयादिसिद्धिः**, अन्वयव्यतिरेकसिद्धिरित्यर्थः, सुवर्णद्रव्यवत् कटकस्यैव कुण्डलादित्वेन भवनात्। **आहेत्यादि**। आह परः–**अन्वयपक्षेऽपि** सति **केवलधूमादिग्रहणे**। किमित्याह–**अनलादिगतिरनिवारणीया**। कुत इत्याह–**पारम्पर्येण तत्रापि**–केवलानलग्राहि'नालिकेर'द्वीपवासिनि **अन्वयोपपत्तेरिति**। एतदाशङ्क्याह–**न अनिवारणीया** न, **न ह्यसौ**–न यस्मात् असौ अनलादिगतिः **अन्वयमात्रनिबन्धनैव; अपि तु**–किं तर्हि **आगमादिजश्चासौ**, 'आदिशब्दात् तपोविनयादिग्रहः; **विशिष्टक्षयोपशमश्च तन्निबन्धनाऽपि** अनलादिगतिः। कुत इत्याह–**तमन्तरेण**–विशिष्टक्षयोपशम(मन्तरेण) **आनन्तर्यतः**–आनन्तर्येण **उभयदर्शिनोऽपि**, प्रक्रमाद् धूमानलदर्शिनोऽपि **तदनुपपत्तेः**–अनलादिगत्यनुपपत्तेः। अनुपपत्तिश्च **क्वचित्**–प्रमातरि **तथाऽदर्शनात्**–उभयदर्शिनोऽप्यनलादिगत्यदर्शनात्[2]। एतदेवाह **न खल्वित्यादिना**। न खलु–नैव **समयादिना**–सङ्केत-तपो-विनयादिना **अनभिव्यक्तक्षयोपशमः**–प्रमाता **पश्यन्नप्युत्तरा-**

१ 'तथाप्रतीतेः' इति ग-पाठः। २ 'दर्शनेऽप्यनला०' इति ङ-पाठः।

( मूलम् )

धूमानलौ तदन्यभावाविव कश्चित् तयोर्हेतुहेतुमद्भावं प्रतिपद्यते, भूयो धूमदर्शनात् तदनवगतेरिति । क्षयोपशमसामर्थ्यादेव तथाऽन्यतरग्रहणतोऽपि तद्भावावगमे को दोषः ? न कश्चिदन्यः, अपि तु [1]नादलात् तदुत्पत्तिरित्यसकृन्निदर्शित एव । यदा हेतु-फलयोरणीयसाऽपि कालेन न व्यवधानं न च ध्वंसनाम्नो विनाशस्य हेतुत्वम्, तदानीं कथमदलात् तदुत्पत्तिः ? । तस्यैव तथाभावाभावतोऽसत् सद्भवनेनेत्यलमनेन पुनः पुनरभिहितेन । आलोच्यतां वस्तुतत्त्वमिति, अतः 'प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः'[2] इति वचनमात्रमेव ॥

इतश्चैतदेवम्, तयोर्निराकार-साकारयोः तद्ग्राहकत्वायोगात् ।

---

( स्वो० व्या० )

धरभावेन धूमानलौ लोकनीत्या तदन्यभावाविव–अप्रतिबद्धापरपदार्थाविव कश्चित्–प्रमाता तयोः–धूमानलयोः हेतुहेतुमद्भावं–कार्यकारणभावं प्रतिपद्यते । कथ न प्रतिपद्यत इत्याह–भूयः–पुनर्धूमदर्शनात् सकाशात् तदनवगतेः–अनलाद्यनवगतेः इति । आह–क्षयोपशमसामर्थ्यादेव सकाशात् तथा–निरन्वयनाशभावेन अन्यतरग्रहणतोऽपि धूमादिग्रहणमधिकृत्य तद्भावावगमे, प्रक्रमाज्जन्यजनकभावावगमे सति, को दोषः ? । एतदाशङ्क्याह–न कश्चिदन्यः–दोषः, अपि तु नादलात्–[3]नाकारणात् तदुत्पत्तिः–धूमाद्युत्पत्तिः इत्यसकृन्निदर्शित एव दोषः । आह–यदा हेतु-फलयोः–कार्य-कारणयोः अणीयसाऽपि कालेन, अत्यन्तलघुनाऽपीत्यर्थः, न व्यवधानम्, कि तर्हि ? हेतुसमनन्तरमेव फलम् । न च ध्वंसनाम्नो विनाशस्य प्रसज्यात्मकस्य हेतुत्वं फल प्रति । तदानीं कथमदलात् तदुत्पत्तिरिति ? । एतदाशङ्क्याह–तस्यैवेत्यादि । तस्यैव–हेतोः तथाभावाभावतः–फलरूपेण भावाभावात् कारणात् असत् सद्भवनेन हेतुना अदलेति । तथाहि–यदैव हेतुरेव न फलीभवति तदैवासत् सद् भवतीति स्थितमदलत्वमित्यलमनेन पुनः पुनरभिहितेन । आलोच्यतां वस्तुतत्त्वमिति । अतः 'प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः' इति वचनमात्रमेव परदर्शने, निरर्थकमित्यर्थः ॥

इतश्चैतदेवमधिकृतवचन वचनमात्रमेव, तयोः–प्रत्यक्षानुपलम्भयोः निरा-

---

१ 'नादला तदु०' इति क–पाठ । २ प्रेक्ष्यता १७६तम पृष्ठम् । ३ 'नाकारणातदु०' इति क–पाठ ।

(मूलम्)

**अयोगश्च विषयकृतनिर्भासविरहे अर्थप्रत्यासत्तिनिबन्धनाभावेनेदमस्य संवेदनमिति व्यवस्थाऽनुपपत्तेः, आकारस्य चानर्थकेष्वपि स्वप्नादिप्रत्ययेषु भाविनो वस्तुव्याप्त्यभावात्, [1]स्थूलचित्राकाराणां चैकत्र विज्ञाने भावतः सम्भवायुक्तेरिति ॥**

**स्यादेतत्–नेदमद्वयज्ञानवादिनः कथञ्चिद् बाधकम् । तस्य हि सर्व एव भावाश्चित्तमा[2]त्रसारशरीरा हेतुफलतां बिभ्रतीति मतम् । बुद्धयश्च स्वसंवित्प्रत्यक्षप्रमाणसिद्धसद्भावाः स्वरूपप्रतिपत्तये नापरं प्रकाशकं प्रतीक्षन्त इति या यथा सा तथैव संवेद्यते, कारणबुद्धिः**

---

(स्वो० व्या०)

**कार-साकारयोस्तद्ग्राहकत्वायोगात्**–कार्यकारणग्राहकत्वायोगात् । **अयोगश्च विषयकृतनिर्भासविरहे,** विषयाकारविरहे इत्यर्थः । **अर्थप्रत्यासत्तिनिबन्धनाभावेन** हेतुना **इदमस्य संवेदनमिति**–एवं **व्यवस्थाऽनुपपत्तेः** । अर्थाकारता ह्येवं व्यवस्थानिबन्धनमिति द्वितीयं विकल्पमधिकृत्याह–**आकारस्य च** ज्ञाने विषयरूपस्य **अनर्थकेष्वपि स्वप्नादिप्रत्ययेषु भाविनः**–सतः । किमित्याह–**वस्तुव्याप्त्यभावात्**–वस्तुना सह व्याप्त्यभावात् । उपचयमाह–**स्थूलचित्राकाराणां च एकत्र विज्ञाने** सूक्ष्मैकस्वभावे **भावतः**–परमार्थेन **सम्भवायुक्तेरिति** इतश्चैतदेवम् ॥

**स्यादेत**दित्यादि । अथैवं मन्यसे–**नेदम्**–अनन्तरोदित**मद्वयज्ञानवादिनः**–ग्राह्यग्राहकाकाररहितज्ञानवादिनः **कथञ्चिद् बाधकम्** इत्याह–**तस्ये**त्यादि । तस्य यस्मात्–अद्वयज्ञानवादिनः **सर्व एव भावाः**–धूम-धूमध्वजादयः **चित्तमात्रसारशरीराः,** अद्वयबोधरूपा एवेत्यर्थः । किमित्याह–**हेतुफलतां बिभ्रतीति**–एवं **मतम् । बुद्धयश्च** किंविशिष्टा वर्तन्ते ? **स्वसंवित्प्रत्यक्षप्रमाणसिद्धसद्भावाः** स्वसंविदेव प्रत्यक्षप्रमाणं तेन सिद्धसद्भावाः सत्यः **स्वरूपप्रतिपत्तये**–स्वरूपप्रतिपत्त्यर्थं **नापरं प्रकाशकं**–स्वव्यतिरिक्तं **प्रतीक्षन्त इति** कृत्वा **या यथा**–वस्तुस्थित्या बुद्धिः **सा तथैव संवेद्यते,** तद् यथा–**कारणबुद्धिः**

---

(विवरणम्)

(१७-१८) **स्थूलचित्राकाराणां चे**ति । घटाद्याकारा हि स्थूलास्तथैव प्रतीयमानत्वात् चित्राश्च–नानाप्रकारा अतः कथमेकस्मिन् ज्ञाने सूक्ष्मस्वभावे ते भवेयुरिति ? ॥

---

१ 'स्थूलविचित्रा०' इति ग-पाठः । २ 'मात्रस्य हेतु०' इति क-पाठः ।

( मूलम् )

**कारणात्मना कार्यबुद्धिश्च कार्यात्मनेति प्रत्यक्षानुपलम्भसाधनः तद्भाव इति गीयते। कोऽन्योऽद्वयज्ञानवादिन एवं ब्रूयात्?। अद्वया कारणाद्यात्मना च वेद्यत इति सुभाषितमेतत्। कीदृक् खल्वद्वयाया वेदनम्?। यदपि गगनतलवर्त्त्यालोकवत् प्रकाश्यप्रकाशकान्तरविरहेणाजडरूपतया जन्मैव तथोच्यते, तदपि तत्त्वतः कर्मकर्तृभावे वेदनायोगेन स्वत एव दुःस्थितमिति नार्थान्तरग्रहणसाध्यं हेतुफलव्यवहारोपकारं कर्तुमलमित्यनुपन्यसनीयमेव विद्वज्जनसमाजे। न च अद्वयमात्रतत्त्वाया भेदकमन्तरेण तथाविधविकल्पोदयो न्याय्यः[1]। न च सति भेदके भाषाद्रव्यादौ तन्मात्रतत्त्ववादः। न च सत्यपि विकल्पोदये क्षणभेदेन पूर्वापरालोचनम्। न चासत्येवा-**

( स्वो० व्या० )

**कारणात्मना** संवेद्यते सा तथैवेति कृत्वा **कार्यबुद्धिश्च कार्यात्मना इति**–एवं **प्रत्यक्षानुपलम्भसाधनः तद्भावः**–कार्यकारणभाव **इति गीयते**। एतदाशङ्क्याह–**कोऽन्योऽद्वयज्ञानवादिनः एवं ब्रूयात्?**। कथमिदमयुक्तमित्याह–**अद्वया**–ग्राह्यग्राहकविकला बुद्धिः **कारणाद्यात्मना च संवेद्यते इति सुभाषितमेतत्**। भावार्थमाह–**कीदृक् खल्वद्वयायाः**–बुद्धेर्वेदनम्?। यदैव वेद्यते तदैव ग्राह्यग्राहकभावोपपत्तेः[2], नाद्वयेत्यभिप्रायः। **यदपी**त्यादि। यदपि **गगनतलवर्त्त्यालोकवदि**ति निदर्शनं **प्रकाश्यप्रकाशकान्तरविरहेण**, उभयान्तरविरहेणेत्यर्थः, **अजडरूपतया**–बोधरूपतया **जन्मैव**–उत्पाद एव **तथोच्यते**–अद्वयरूपतयोच्यते परैः, **तदपि तत्त्वतः**–परमार्थेन **कर्मकर्तृभावे** सति तात्त्विके **वेदनायोगेन** हेतुना **स्वत एव दुःस्थितमिति** कृत्वा **नार्थान्तरग्रहणसाध्यं** तत्सापेक्षत्वेन **हेतुफलव्यवहारे उपकारं कर्तुमलमिति** कृत्वा **अनुपन्यसनीयमेव**। के(?क्वे)त्याह–**विद्वज्जनसमाजे**–पण्डितजनसमुदाये। उपचयमाह–**न चे**त्यादि। न च **अद्वयमात्रतत्त्वायाः**–बुद्धेः सकाशात् **भेदकमन्तरेण** भाषाद्रव्यादिकं **तथाविधविकल्पोदयः**–हेतुफलभावव्यवस्थाकारी विकल्पोत्पादो **न्याय्यः, अद्वयबोधमात्रात्**–अद्वयबोधमात्रोत्पत्तेः। **न चे**त्यादि। न च **सति भेदके भाषाद्रव्यादौ** च, 'आदि'शब्दात् मनोद्रव्यसंग्रहः **तन्मात्रतत्त्ववादः**–अद्वयबोधमात्रतत्त्ववादः तैथाधिक्योपपत्तेः[3]। **न चे**त्यादि। न च **सत्यपि विकल्पोदये**ऽनन्तरोदिते **क्षणभेदेन** हेतुना। किमित्याह–

१ अत्र पाठांशो लुप्त इति भाति। २ 'भावापत्ते' इति ङ–पाठ। ३ 'तदाधिक्योप०' इति ङ–पाठ।

( मूलम् )

स्मिँस्तथातत्त्वव्यवस्थोपपत्तिः । न चेदं तथाऽनुभूयमानबोधान्वयातिरेकेण । न चायमभ्युपगमप्रक्रमागत एव भवतामिति दुःस्थिते स्वतन्त्रभेदव्यवहारे कथं (न) प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इत्युच्यमानं कथं न ज्ञानमानिनो व्रीडाकरमिति परिचिन्त्यतामेतत् । [1]अतस्तथाऽनुभूयमानतयाऽपास्तभ्रान्ततापराधः परोक्त इति विहाय मत्सरं सौविहित्यकारीति निवेश्य मानसं बोधान्वयोऽभ्युपगन्तव्यस्तत्त्वालोचनमार्गो[2] वा परित्याज्य इत्यलं प्रसङ्गेन ॥

अङ्गीकृतश्चायं परेणापि परमार्थतः 'क्षणभेदेऽप्युपादानोपादेयभावेन' इत्याद्यभिदधता[3] । तथाहि-'य एव सन्तानः कर्त्ता स एवोप-

( स्वो० व्या० )

पूर्वापरालोचनमनुसन्धानात्मकत्वादस्य । न चेत्यादि । न चासत्येवास्मिन्-पूर्वापरालोचने तथातत्त्वव्यवस्थोपपत्तिः-पूर्वापरालोचनात्मिका । न चेदमित्यादि । न चेदं-पूर्वापरालोचनं तथाऽनुभूयमानबोधान्वयातिरेकेण तथाऽनुभूतेः । न चेत्यादि । न च अयं-तथाऽनुभूयमानो बोधान्वयः अभ्युपगमप्रक्रमागत एव भवतां-परेषाम् । इति-एवं दुःस्थिते स्वतन्त्रभेदव्यवहारे भेदकाभावेन न[4] कथं प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः? । इति-एवमुच्यमानं कथं न ज्ञानमानिनः-पुंसो व्रीडाकरं-लज्जाकरम् ? । लज्जाकरमेवेत्यर्थः । इति-एवं परिचिन्त्यतामेतत् भावनासारमिति । उपसंहारसारां स्थितिमभिधातुमाह-अत इत्यादि । अतः तथाऽनुभूयमानतया कारणेन अपास्तभ्रान्ततापराधः, [5]विक्षिप्तभ्रान्ततापराध इत्यर्थः, परोक्तः । इति-एवं विहाय मत्सरं-[6]चेतोदोषं सौविहित्यकारी-सुविहितभावकारी इति-एवं निवेश्य मानसम् । किमित्याह-बोधान्वयो यथोक्तोऽभ्युपगन्तव्यः । तत्त्वालोचनमार्गो वा परित्याज्यः, उपायाभावादित्यलं प्रसङ्गेन ॥

इहैवोपचयमाह-अङ्गीकृत इत्यादि । अङ्गीकृतश्चायम्-अन्वयः परेणापि-बौद्धेनापि परमार्थतः । कथमित्याह-क्षणभेदेऽपि उपादानोपादेयभावेन इत्याद्यभिदधता पूर्वपक्षग्रन्थे[7] । तथाहीत्यादि । तथाहीति पूर्ववत् । य एव सन्तानः कर्त्ता स एवोपभोक्ता इत्युक्तं प्राक्[8] अन्यैश्च-

"यस्मिन्नेव तु सन्ताने आहिता कर्मवासना ।
फलं तत्रैव संधत्ते[9] कर्पासे रक्तता यथा ॥"[10]

१ 'इतस्तथा' इति क-पाठः । २ 'मार्गोऽपरित्याज्य' इति ग-पाठः । ३ १३३तमे पृष्ठे । ४ 'भावने कथं' इति ङ-पाठः । ५ 'विवक्षितभ्रान्त०' इति क-पाठः । ६ 'चेतोद्वेषं' इति क-पाठः । ७ १३३तमे पृष्ठे । ८ १३३तमे पृष्ठे । ९ पाठान्तरार्थं द्रष्टव्यं १३४तमं पृष्ठम् । १० अनुष्टुप् ।

(मूलम्)

**भोक्ता' इत्युक्तम्[1]। न च हेतुफलभावतोऽन्यः सन्तानः। न च हेतुफलयोरेव कर्तृत्व-भोक्तृत्वे, प्रत्येकमुभयाभावात् अन्यकालेऽन्यानभ्युपगमात्, य एव स एवेति वाग्वैयर्थ्यप्रसङ्गात्, अतस्तस्यैव तथाभवनेन हेतोरेव कार्यभावे य एव स एवेत्युपपद्यते, नान्यथा सन्तत्यन्तरवत् नानात्वाबाधनादिति। तथेदं चोक्तम्[2]–'यः कुशले प्रवर्त्तते स यद्यपि तदैव सर्वथा विनश्यति तथापि निरुध्यमानः स्वानुरूपकार्योत्पादन समर्थ सामर्थ्य विज्ञानसन्ततावाधाय निरुध्यते' इत्यादि। [3]अत्रापि न हि तत् सामर्थ्यं कुशलादन्यदेव, स्वानुरूपकार्योत्पादन-**

(स्वो० व्या०)

इत्यभिधानात्। **न चे**त्यादि। [4]**न च हेतुफलभावतोऽन्यः**–अर्थान्तरभूतः **सन्तानः**, किन्तु हेतुफलभाव एव। **न चे**त्यादि। न च **हेतु-फलयोरेव कर्तृत्व-भोक्तृत्वे** भवतः। कथमित्याह–**प्रत्येकमुभयाभावात्**, न हेत्वादावेकस्मिन्नेव कर्तृत्व-भोक्तृत्वे। कथमित्याह–**अन्यकाले**–हेत्वादिकाले **अन्यानभ्युपगमात्**–फलाद्या(?द्य)नभ्युपगमात्। **य एव स एवेति** एकाधिकरणाभावेन **वाग्वैयर्थ्यप्रसङ्गात्, अतस्तस्यैव**–हेतोः **तथाभवनेन**–फलतया भवनेन **हेतोरेव कार्यभावे** सति **य एव स एवेत्युपपद्यते** एकाधिकरणभावेन, **नान्यथा सन्तत्यन्तरवत्** इति निदर्शनम्। **नानात्वाबाधनादिति**। नानात्वं च वैयधिकरण्यहेतुरिति भावनीयम्। **तथेदं चोक्तं** पूर्वपक्षे[5] एव–**यः कुशले प्रवर्त्तते** दानादौ **स यद्यपि तदैव सर्वथा विनश्यति तथापि निरुध्यमानः** सन् **स्वानुरूपकार्योत्पादनसमर्थम्**। [6]किं तदित्याह–**सामर्थ्य विज्ञानसन्ततावाधाय निरुध्यत इत्यादि। अत्रापि**–उक्ते **न हि तत् सामर्थ्य कुशलादन्यदेव**, किन्तु कुशलमेव तत्। **स्वानुरूपकार्योत्पादनसमर्थता वा ततः**–कुशलान्न

(विवरणम्)

(१९) **नानात्वाबाधनादिति**। नानात्वस्य–भेदस्याबाधनं नानात्वाबाधनं तस्मात्। यदि हि निरन्वयनश्वरत्वमभ्युपगम्यते सन्तानानां तथा यथा एकपुरुषापेक्षया पुरुषान्तरसन्तानस्य नानात्वम्, एवं स्वसन्ततावपि नानात्वमबाधितमेवेति पूर्वकृतानुष्ठानस्य फलाभावः [7]प्राप्नोतीति॥

१ १३३तमे पृष्ठे। २ १३४तमे पृष्ठे। ३ 'तत्रापि' इति क-पाठ। ४ 'न चाहेतु०' इति ङ-पाठ.। ५ १३४तमे पृष्ठे। ६ 'किमित्याद' इति ङ-पाठ.। ७ 'प्राप्नोति' इति ख-पाठ.।

## ( मूलम् )

**समर्थता वा ततः। विज्ञानसन्ततिरपि तदुत्तरं ज्ञानमेव, भूयसां तदानीमभावात्। ततश्च तत् कुशलमेवोत्तरविज्ञानमाधत्त इति तदेव तद्युक्तं तथा भवतीति। एवमुत्तरोत्तरभावेन युक्तमिष्टानिष्टफलजन्म, अन्यथोक्तवत् तदयोगादिति। एवं समुपरोधहेतुभ्यः पीडा प्रतिकलमवदायमानता चान्वयानुसारिण्येव, अन्यथा पीडाद्युत्कर्षासिद्धिः[1]। न ह्येकगुणतीव्रताभावे[2] तद्विगुणादितीव्रता भवति। अनुभवसिद्धा चेयं सह तारतम्येन एकगुणशुद्धियुक्ताद्[3] द्विगुणशुद्धियुक्तजन्मा इत्यपि व्यवस्थापनमेकगुणाक्षेपोभयविषयसंवेदननान्तरीयकमेव इति अन्वयसाधनमेव। अपि च किं बहुना जल्पितेन?। न विहाय**

## ( स्वो० व्या० )

ह्यन्यैव। तथा **विज्ञानसन्ततिरपि तदुत्तरम्**—अधिकृतकुशलादुत्तरं **ज्ञानमेव**। कथमेतदेवमित्याह—**भूयसां**—विज्ञानानां **तदानीमभावात्**, नैकोदकबिन्दुप्रभवं स्रोत इति भावनीयम्। **ततश्चे**त्यादि। ततश्च—एवं व्यवस्थिते **तत् कुशलमेव**—अधिकृतं **उत्तरविज्ञानं आधत्त इति**। किमुक्तं भवति? **तदेव**—विज्ञानं **तद्युक्तं**—कुशलयुक्तं **तथा भवति**—उत्तरविज्ञानरूपतया भवति इति। **एवम्**—उक्तनीत्या **उत्तरोत्तरभावेन** हेतुना। किमित्याह—**युक्तमिष्टानिष्टफलजन्म**—घटमानक इष्टानिष्टफलोत्पादः, **अन्यथा**—एवमनभ्युपगमे **उक्तवत् तदयोगात्** निरन्वयनश्वरतया फलायोगादिति। **एवमि**त्यादि। एवं **समुपरोधहेतुभ्यो** दण्डादिभ्यः **पीडा प्रतिकलं**—कलां कलां प्रति तथा **अवदायमानता च** प्रतिकलमेव। किमित्याह—**अन्वयानुसारिण्येव** उक्तनीत्या, **अन्यथा**—एवमनभ्युपगमे **पीडाद्युत्कर्षासिद्धिः**—पीडाया अवदायमानतायाश्चोत्कर्षासिद्धिः। एनामेव भावयति **न ह्येकगुणे**त्यादिना। न यस्मादेकगु**णतीव्रताभावे** सति पीडादेः **तद्द्विगुणादितीव्रता भवति**—पीडादेर्द्विगुणादितीव्रता भवति। **अनुभवसिद्धा चेयं**—तीव्रता **सह तारतम्येन** तथा **एकगुणशुद्धियुक्तात्**, क्षणादिति प्रक्रमः, **द्विगुणशुद्धियुक्तजन्मा इत्यपि**—एवम्भूतमपि **व्यवस्थापनं अन्वयसाधनमेवे**ति योगः। कथमित्याह—**एकगुणाक्षेपेण**—न तत्परित्यागेन **उभयविषयं** शुद्धिगुणापेक्षया यत् **संवेदनं** तत् **नान्तरीयकमेवेति** कृत्वा। **अपि चे**त्यादि। अपि च **किं बहुना जल्पितेन? न विहाय**—परित्यज्य

१ 'सिद्धेः' इति ग-पाठः। २ 'भावेन द्विगुणा०' इति ग-पाठः। ३ 'युक्ताच्च द्विगुण०' इति ग-पाठः।

(मूलम्)

**अन्वयमेकाधिकरणौ बन्ध-मोक्षावपि युज्येते । यदा च बद्ध एव न मुच्यते तदा व्यर्थैव बन्धमोक्षचिन्तेति । एतेन नाशहेत्वयोगार्थक्रियासामर्थ्यपरिणा[1]मान्तक्षयेक्षणादि क्षणभङ्गसाधनं निराकृतमेव, तथापि लेशतो निराकरणमार्गः प्रदर्श्यते ॥**

**तत्र यदुच्यते नाशहेतवो हि नश्वरेतरनाश्यापेक्षया तद्व्यतिरिक्तादिनाशापेक्षया च न युज्यन्त इत्येतज्जातिमात्रम्, तदुत्पाद-**

(स्वो० व्या०)

**अन्वयमेकाधिकरणौ**–एकाधारौ **बन्ध-मोक्षावपि युज्येते** । यदि नामैवं ततः किमित्याह–**यदा च बद्ध एव न मुच्यते** । **तदा** किमित्याह–**व्यर्थैव**–निरर्थिकैव **बन्धमोक्षचिन्तेति**[2] । न बद्धस्य मुक्तौ तत्त्वतो मुक्तिरिति परिभावनीयम् । **एतेन**–अनन्तरोदितेन कार्यकारणभावदूषणेन **नाशहेत्वयोगश्चार्थक्रियासामर्थ्यं** च **परिणामश्चान्तक्षयेक्षणादि** चेति द्वन्द्वः । एतत् किमित्याह–**क्षणभङ्गसाधनं निराकृतमेव** तत्त्वतः, **तथापि लेशतः**–सङ्क्षेपेण **निराकरणमार्गः प्रदर्श्यते** ॥

**तत्र यदुच्यते** क्षणभङ्गवादिभिः–**नाशहेतवो हि** घटादेर्मुद्गरादयः **नश्वरेतरनाश्यापेक्षया** नशनशीला-ऽनशनशीलनाश्यापेक्षया **तद्व्यतिरिक्तादिनाशापेक्षया च** नाश्यव्यतिरिक्ताव्यतिरिक्तनाशापेक्षया च **न युज्यन्ते**–न घटन्ते । तथाहि–नाशहेतवः किं नशनशीलस्यैव नाशं कुर्वन्ति किं वाऽनशनशीलस्य ? । यदि नशनशीलस्य कथं कुर्वन्ति तस्य तच्छीलतया तदव्यतिरिक्तत्वात् तस्य च स्वहेतोरेवोत्पत्तेः ? । न हि पृथिव्यादिकठिनतादयः तदव्यतिरिक्तास्तदन्यहेतुभिः क्रियन्ते । अथानशनशीलस्य व्याहतमेतत्, अतत्स्वभावस्य तत्कारणत्वविरोधात् । आकाशादेरपि तदुत्पत्तेः तथा चाभ्युपगमप्रकोपः । तथा किं सन्नाश[3] नाश्याद् व्यतिरिक्तं कुर्वन्ति, किं

(विवरणम्)

(२१) **तस्य तच्छीलतया तदव्यतिरिक्तत्वादिति** । तस्य–नशनशीलपदार्थस्य तच्छीलतया–नशनशीलतया तदव्यतिरिक्तत्वात्–नशनाव्यतिरिक्तत्वात् ॥

(२३) **अतत्स्वभावस्य तत्क(?का)रणत्वविरोधादिति** । अतत्स्वभावस्य [भावस्य]–अनशनस्वभावस्य [भावस्य] तत्करणत्वविरोधात्–नशनस्वभावकरणत्वविरोधात् । न ह्यग्निर्भास्वरस्वभावः सन्नभास्वरस्वभावः केनचित् क्रियते ॥

१ 'णामा(न्त)न्त्यक्षये०' इति ग–पाठ । २ 'चिन्तेत्यबद्धस्य' इति ङ–पाठ । ३ 'तन्नाश नाशाद् व्यति०' इति ङ–पाठ ।

( मूलम् )

**हेतुष्वपि समानत्वात्, तेषामपि सत्स्वभावेतरजन्यापेक्षया तद्व्यतिरिक्ताद्युत्पादापेक्षया [1]चायुज्यमानत्वात्। तथाहि–न सत्स्वभावस्योत्पादकाः, [2]तद्वैफल्यप्रसङ्गात् अनवस्थापत्तेश्च, नासत्स्वभावस्य, तत्प्रकृत्यन्यथाकरणात् अभ्युपगमविरोधाच्च । अनुत्पन्नस्यासत्त्वात् उत्पन्नस्य च सत्स्वभावत्वाद् व्यर्थो विकल्पयुगलकोपन्यासपरिश्रम इति चेत्, न, नष्टेतरविकल्पापेक्षयाऽस्य नाशेऽपि तुल्यत्वात्। एव-**

( स्वो० व्या० )

वाऽव्यतिरिक्तम् ?। यदि व्यतिरिक्तं तद्भावेऽपि नाश्यस्य न किञ्चिदिति किं तेन ?। अथाव्यतिरिक्तं स तत्स्वरूपवत् तद्धेतुभ्य एव जातः कथमन्ये कुर्वन्ति **इति ?**। एवमादि **एतज्जातिमात्रं**–साध्यधर्मसमां जातिमधिकृत्य कुत इत्याह–**उत्पादहेतुष्वपि** भवदभ्युपगतेषु **समानत्वात्** अधिकृतविकल्पानामिति । एतदेवाह **तेषामपी**त्यादिना । तेषामपि–उत्पादहेतूनां **सत्स्वभावेतरजन्यापेक्षया** सत्स्वभावात् स्वभावजन्यापेक्षया **तद्व्यतिरिक्ताद्युत्पादापेक्षया च**–जन्यव्यतिरिक्ताव्यतिरिक्तोत्पादापेक्षया च । किमित्याह–**अयुज्यमानत्वात्**–अघटमानत्वात् तेषामपि । एतदेव दर्शयति **तथाही**त्यादिना । तथाहीति पूर्ववत् । **न सत्स्वभावस्य,** जन्यस्येति प्रक्रमः, **उत्पादकाः**–उत्पादहेतवः । कुत इत्याह–**तद्वैफल्यप्रसङ्गात्**–हेतुवैफल्यप्रसङ्गात् तत्स्वभावतयेति **अनवस्थापत्तेश्च** सत्स्वभावतया भूय [3]उत्पाद्यत्वापत्तेः । तथा **नासत्स्वभावस्य**–जन्यस्योत्पादकाः । कुत इत्याह–**तत्प्रकृत्यन्यथाकरणात्**–असत्स्वभावप्रकृत्यन्यथाकरणात् **अभ्युपगमविरोधाच्च** । न ह्यसत्स्वभावजन्योत्पादकत्वमिष्यते परैः उत्पादहेतूनामिति। **अनुत्पन्नस्य** उत्पाद्यस्य **असत्त्वात् उत्पन्नस्य च सत्स्वभावत्वात्** कारणात् **व्यर्थः**–निरर्थको **विकल्पयुगलकोपन्यासपरिश्रमः । इति चेत्,**

( विवरणम् )

(१२) **[4]साध्यधर्मसमां जातिमधिकृत्ये**ति । साध्यधर्मः समो यस्यां सा तथा तामधिकृत्य–आश्रित्य । साध्यधर्मो ह्यत्र नाशहेतूनामभावः । अयं च बौद्धाभिमते उत्पादेऽपि समानः, उत्पादहेतूनामपि विचार्यमाणानामभावात्, उत्पद्य[5]मानाभावापत्तेरिवेत्यर्थः । यदि ह्युत्पादहेतुभिरुत्पद्यमानाद् भावादव्यतिरिक्त उत्पादः क्रियते तदा उत्पद्यमान एव भावस्तैः क्रियत इत्यायातम् । ततः सदैव तस्य भावस्योत्पद्यमानता स्यात्, न तूत्पन्नता ॥

१ 'वा युज्य०' इति ग–पाठः । २ 'तद्वैकल्यप्रसङ्गात्' इति ग–पाठः । ३ 'उत्पद्यत्वा०' इति क–पाठः । ४ 'समानधर्म०' इति च–पाठः । ५ 'मानापत्ते०' इति च–पाठः ।

( मूलम् )

**मुत्पद्यमानव्यतिरिक्तोत्पादजनकत्वे न तदुत्पादः, तस्येति संयोगायोगात्, तदव्यतिरिक्तोत्पादजनकत्वे तूत्पद्यमानजनकत्वतस्तदनुत्पादः, उत्पन्नाव्यतिरिक्तोत्पादायोगात् सत्स्वभावादिजन्योपादानहेतुग्राहकप्रमाणाभावतस्तद्व्यवहारनिषेधतो नाविषया विकल्पाः, [1]प्रमाणविवेकतः सज्ज्ञानशब्दव्यवहारनिषेधाविरोधाच्च ॥**

**किञ्च निर्हेतुकविनाशवादिनो हिंसासम्भव इति तद्विरतिदेशना-**

---

( स्वो॰ व्या॰ )

एतदाशङ्क्याह—**न**—नैतदेवम्, **नष्टेतरविकल्पापेक्षया अस्य**—अनन्तराभिहितस्य **नाशेऽपि तुल्यत्वात्** । तुल्यत्वं चानष्टस्य सत्त्वान्नष्टस्य वा सत्त्वेन व्यर्थो विकल्पोपन्यासपरिश्रम इत्यपि वक्तुं शक्यत्वात् । **एवमित्यादि** । एव**मुत्पद्यमानव्यतिरिक्तोत्पादजनकत्वे**ऽभ्युपगम्यमाने उत्पादहेतूनां किमित्याह—**न तदुत्पादः**—न तस्य विवक्षितस्योत्पादः । कुत इत्याह—**तस्येति**—विवक्षितस्योत्पाद्यस्य **सं(यो)गायोगात्**—सम्बन्धाभावाद् व्यतिरिक्तोत्पादस्य, **तदव्यतिरिक्तोत्पादजनकत्वे तु**—विवक्षितकार्याव्यतिरिक्तोत्पादजनकत्वे पुनः **उत्पद्यमानजनकत्वतः** कारणात् **तदनुत्पादः**—[2]उत्पद्यमानानुत्पादः उत्पद्यमानतापत्तिरेवेत्यर्थः । कुत इत्याह—**उत्पन्नाव्यतिरिक्तोत्पादायोगात्** । [3]अयोगश्चोत्पद्यमानाव्यतिरेकत इति भावना । **सत्स्वभावादी**त्यादि । सत्स्वभावादि च तज्जन्यं च तस्य **उपादानहेतवस्तद्ग्राहकप्रमाणाभा**[4]**वतः** कारणात् **तद्व्यवहारनिषेधतः**—सत्स्वभावादिजन्योपादानहेतुव्यवहारनिषेधतः कारणात् **न अविषया विकल्पाः** अनन्तरोपन्यस्ताः, किन्तु सविषया एव । इतश्चैतदेवं **प्रमाणविवेकतः**—प्रमाणाभावेन [5]**सज्ज्ञानशब्दव्यवहारनिषेधाविरोधाच्च** नाविकल्पा विषया इति भावनीयम् ॥

अभ्युच्चयमाह **किञ्चे**त्यादिना । किञ्च **निर्हेतुकविनाशवादिनः**—वादिनः

---

( विवरणम् )

न तु सत्स्वभावस्य जन्यस्य जनका उत्पादहेतव इत्याद्यो विकल्पा निर्विषया एव भविष्यन्तीत्याह—(१९) **सत्स्वभा**[6]**वादि चे**त्यादि । **बौद्धमते** सत्स्वभावादेर्जन्यस्य ये उपादानहेतवस्तद्ग्राहकं नास्त्येवेति नाविषया विकल्पा इत्यर्थः । **प्रमाणविवेकत** इत्यादिनाऽयमेवार्थः स्फुटीकृत इति ॥

---

१ 'विवेकतज्ज्ञान०' इति **ग**-पाठ । २ 'उत्पाद्यमाना०' इति ङ-पाठ । ३ 'अयोगश्चोत्पाद्यमानाद् व्यति०' इति ङ-पाठ । ४ 'भावत तद्व्यावहार०' इति ङ-पाठ । ५ 'सज्ञान०' इति ङ-पाठ । ६ 'भावादि वेत्यादि' इति **च**-पाठ ।

(मूलम्)

वैयर्थ्यमेव । सन्तानान्तरोत्पादक एव हिंसक इति चेत्, न, सन्तानस्य संवृत्तिसत्त्वेनोत्पादायोगात् । विजातीयक्षणोत्पादक एवेति चेत्, न, तस्यापि निराकृतत्वात् । तद्भावेऽप्युपादानजनकयोः हिंसकत्वापत्तिः । न चेयं न्याय्या, महासत्त्वोपादानजनकयोरहिंसकत्वेन कुशलयुक्तत्वाभ्युपगमात् । न च हन्मीति सङ्क्लेशाद्धिंसकत्वम्, [1]असङ्क्लिष्टात् सङ्क्लिष्टानुत्पत्तेः, तदुत्पादनिमित्तस्य निराकृतत्वादिति । अतः स्वहेतुभ्य एव नाशहेतुमवाप्य तथानाशस्वभाव [2]उत्पद्यते इति त्वयाऽप्यङ्गीकर्त्तव्यम्, अन्यथोक्तदोषानतिवृत्तिः ॥

यस्य तु कार्योत्पाद एव कथञ्चित् कारणनिवृत्तिस्वभावो नाशः

(स्वो० व्या०)

हिंसासम्भव इति कृत्वा तद्विरतिदेशनावैयर्थ्यमेव । सन्तानान्तरोत्पादक एव लुब्धकादिर्हिंसकः । इति चेत्, एतदाशङ्क्याह–नेत्यादि । न–नैतदेवं सन्तानस्य [3]संवृत्तिसत्त्वेन हेतुना उत्पादायोगात् । न हि [4]संवृत्ति सदुत्पद्यत इति विजातीयक्षणोत्पादक एवेति चेत् हिंसक इति । एतदाशङ्क्याह–नेत्यादि । न–नैतदेवं तस्यापि–विजातीयक्षणोत्पादकस्य निराकृतत्वादधः निमित्तोपादानभावनिषेधेन । अभ्युच्चयमाह तद्भावेऽपीत्यादिना । तद्भावे अपि–विजातीयक्षणोत्पादकहिंसकभावेऽपि किमित्याह–उपादानजनकयोरविशेषेण हिंसकत्वापत्तिः, द्वयोरपि विजातीयक्षणोत्पादकत्वाविशेषात् । न चेयम्–उपादानजनकयोः हिंसकत्वापत्तिः न्याय्या, महासत्त्वोपादानजनकयोः, बोधिसत्त्वादिजनकयोरित्यर्थः, अहिंसकत्वेन हेतुना कुशलयुक्तत्वाभ्युपगमात् । न हि बोधिसत्त्व उत्पद्यमान आत्मनो हिंसकः, अपि तु कुशलयुक्तोऽभ्युपगम्यते तत्पिता च । न चेत्यादि । न च हन्मीति–एवं सङ्क्लेशाद्धिंसकत्वम् । कुत इत्याह–असङ्क्लिष्टात् क्षणात् सङ्क्लिष्टानुत्पत्तेः । [5]अनुत्पत्तिश्च तदुत्पादनिमित्तस्य असङ्क्लिष्टात् सङ्क्लिष्टोत्पादनिमित्तस्य निराकृतत्वादध इति । अतः–अस्मात् कारणात् स्वहेतुभ्य एव सकाशान्नाशहेतुमवाप्य मुद्गरादिः तथा–विजातीय[6]क्षणोदयरूपप्रकारेण नाशस्वभाव उत्पद्यते । इति–एवं त्वयाऽप्यङ्गीकर्त्तव्यम्; अन्यथा–एवमनभ्युपगमे उक्तदोषानतिवृत्तिरिति भावनीयमेतत् ॥

स्वपक्षे दोषाभावमाह यस्य त्वित्यादिना । यस्य तु–वादिनः कार्योत्पाद

१ 'असङ्क्लिष्टानुत्पत्तेः' इति ग–पाठः । २ 'उत्पाद्यते' इति ग–पाठः । ३ 'संवृतिस०' इति ङ–पाठः । ४ 'संवृति सदु०' इति ङ–पाठः । ५ 'अनुपपत्तिश्च' इति ङ–पाठः । ६ 'क्षणोद्भवरूप०' इति ङ–पाठः ।

( मूलम् )

तस्योक्तदोषानुपपत्तिरेवेत्युक्तप्रायम् । तथा नित्यानित्यदेहभिन्नाभिन्नत्वे चास्य पीडाकर्तृत्वादिना तत्कर्मविपाकभावेऽपि तन्निमित्तत्वनियोगाद् दुष्टानुबन्धतोऽस्यैव हिंसेति सदुपदेशादेः क्लिष्टकर्मवियोगात् शुभभावानुबन्धतोऽस्या विरतिरपीति न कश्चिद् दोष इति ॥

अर्थक्रियासामर्थ्यमपि क्षणिकस्यानुपपन्नमेव, विकल्पायोगात् । अर्थक्रिया हि स एव भावो भावान्तरं वा । यदि स एव कथमस्यात्मनि सामर्थ्यम् ? । अन्यच्चेदं तदात्मा स्यात् स्थितिर्वा । यद्यात्मा न तत्र सामर्थ्यम्, अन्यतो भावात्; न स्थितौ, अनन्तरमेव नाशात् ॥

अथ भावान्तरं कथमन्यस्यान्यत्र सामर्थ्यम् ? । तथाहि-इदं ततो

( स्वो० व्या० )

एव कथञ्चित्-केनचित् प्रकारेण कारणनिवृत्तिस्वभावः-कारणनिवृत्तिस्वतत्त्वो नाशः तस्य-वादिन उक्तदोषानुपपत्तिरेवेत्युक्तप्रायं-प्रायेणोक्तम् । अभ्युच्चयमाह तथेत्यादिना । तथा नित्यानित्यदेहभिन्नाभिन्नत्वे चास्य-हिंसकस्य पीडाकर्तृत्वादिना कारणेन तत्कर्मविपाकभावेऽपि, हिंस्यकर्मविपाकभावेऽपीत्यर्थः, तन्निमित्तत्वनियोगात्-हिंसकस्य निमित्तत्वनियोगात् कारणाद् दुष्टानुबन्धतो हेतोः जन्मान्तरासेवितात् अस्यैव हिंसेति एवम्भूतस्यास्य सदुपदेशादेः सकाशात् 'आदि'शब्दात् तथाविधमुनिचर्यादर्शनपरिग्रहः [1]क्लिष्टकर्मवियोगात् कारणात् तथास्वाभाव्येन तथा शुभभावानुबन्धतः तथा तथा भव्यत्वसमाक्षिप्तात्[2] अस्याः-हिंसाया विरतिरपि । इति-एवं न कश्चिद् दोषः अस्मदभ्युपगम इति ॥

अर्थक्रियेत्यादि । अर्थक्रियासामर्थ्यमपि क्षणिकस्य-पदार्थस्य अनुपपन्नमेव । कुत इत्याह-विकल्पायोगात् । एनमेवाह अर्थक्रिया हीत्यादिना । अर्थक्रिया यस्मात् स एव भावो भावान्तरं वा भवेत् । किञ्चातः ? उभयथाऽपि दोष इत्याह-यदि स एव भावोऽर्थक्रिया, कथमस्य-भावस्य आत्मनि सामर्थ्यम् ? । अन्यच्चेत्यादि । अन्यच्च इदं-सामर्थ्यं तदात्मा स्याद् भावात्मैव स्थितिर्वा । यद्यात्मा सामर्थ्यम्, एतदाशङ्क्याह-न तत्र आत्मनि सामर्थ्यम्, अन्यतः-कारणान्तरात् भावादात्मन इति न स्थितौ सामर्थ्यम् । कुत इत्याह-अनन्तरमेव नाशात् स्थित्यभावेन । एवं यदि स एव भाव इत्येतदधिकृत्योक्तम् ॥

अधुना भावान्तरमधिकृत्याह-अथेत्यादि । अथ भावान्तरमर्थक्रिया । एतद्-

१ 'क्लिष्टाकर्म०' इति ङ-पाठः । २ 'समाक्षिप्तात् अस्या' इति ङ-पाठः ।

( मूलम् )

**व्यतिरिक्तमव्यतिरिक्तं वा । यदि व्यतिरिक्तं तस्येति [1]सञ्ज्ञायोगः, अव्यतिरेके न भावान्तरोपयोगिता । तदुत्तरभूतिरेवेयमिति चेत्, न, तस्याः खपुष्पवदसत्त्वेनामुष्य[2] भूतिरिति व्यवस्थाऽनुपपत्तेः, कर्तृभोक्तृद्वारेण चायोगात् । तथाहि-सा कर्तृभूतिः स्याद् भोक्तृभूतिर्वा । कर्तृभूतिरिति चेत्, न तर्हि भोक्तृभूतिरित्यभ्युपगमहानिः सर्वक्षणानां भोक्तृत्वाभ्युपगमात् । अथ भोक्तृभूतिः, न तर्हि कर्तृभूतिरित्यभ्युपगमहानिरेव, संसारिक्षणानां प्रायः कर्तृत्वाभ्युपगमात् ॥ उभयस्वभावत्वे तद्व्यतिरिक्तेतरादिदोषः । अनुभयस्वभावत्वे**

( स्वो० व्या० )

धिकृत्याह-**कथमन्यस्य**-भावस्य **अन्यत्र**-भावान्तरे **सामर्थ्यम्** ? । **तथाहि-इदं**-सामर्थ्यं **ततः**-विवक्षितभावाद् **व्यतिरिक्तमव्यतिरिक्तं वा** भवेत् । उभयथाऽपि दोषमाह-**यदि व्यतिरिक्तं** विवक्षितभावात् सामर्थ्यम्, अत्र दोषमाह-**तस्येति सञ्ज्ञायोगः**, तदन्वयव्यतिरेकाविशेषात् । **अव्यतिरेके** त्वभ्युपगम्यमाने किमित्याह-**न भावान्तरोपयोगिता** सामर्थ्यस्य, तद्वत् तन्निवृत्तेरिति भावः । **तदुत्तरभूतिरेव**-विवक्षितभावोत्तरभवनमेव **इयमिति चेत्** अर्थक्रिया । एतदाशङ्क्याह-**न, तस्याः**-तदुत्तरभूतेः **खपुष्पवत्** निरुपादानतया **असत्त्वेन** हेतुना । **अमुकस्य भूतिरिति**-एवं **व्यवस्थाऽनुपपत्तेः** । तथाहि-अत्रासत् सद् भवतीति व्यवस्था, न चेयं न्याय्या शक्तिप्रतिनियमाभावेनेति व्यवस्थाऽनुपपत्तिः[3] । उपचयमाह-**कर्तृभोक्तृद्वारेण चायोगात्**, भूतेरिति प्रक्रमः । **तथाहि-सा**-भूतिः **कर्तृभूतिः स्याद् भोक्तृभूतिर्वा । कर्तृभूतिरिति चेत्**-अधिकृता भूतिरित्येतदाशङ्क्याह-**न, तर्हि भोक्तृभूतिरिति**-एवम**भ्युपगमहानिरेव** । कथमित्याह-**सर्वक्षणानां भोक्तृत्वाभ्युपगमात् । अथ भोक्तृभूतिः**-अधिकृता भूतिरिति एतदाशङ्क्याह-**न तर्हि कर्तृभूतिरिति**-एव**मभ्युपगमहानिरेव** । कथमित्याह-**संसारिक्षणानां प्रायः** चरमक्षणं मुक्त्वा । किमित्याह-**कर्तृत्वाभ्युपगमात्** ॥

पक्षान्तरनिराचिकीर्षयाऽऽह-**उभयस्वभावत्वे**-कर्तृभोक्तृस्वभावत्वेऽभ्युपगम्य-

( विवरणम् )

(१५) **तदन्वयव्यतिरेकाविशेषादिति** । तस्य-विवक्षितस्वभावस्य सम्बन्धिनौ यौ अन्वय-व्यतिरेकौ तयोरविशेषात् सामर्थ्यस्य । यदि हि विवक्षितभावाद् व्यतिरिक्तमेव सामर्थ्यं तदा तद्भावे भावस्तदभावे चाभावः तस्य नास्त्येवेत्यर्थः ॥

१ 'संयोगायोगः' इति क-पाठः । २ 'अमुष्य' इति स्यात् । ३ 'पत्तेः उप०' इति ङ-पाठः ।

(मूलम्)

**अवस्तुतेत्यन्वयिन्येवार्थक्रियासिद्धिः तस्यैव, तथाऽभवनात्। क्रम-यौगपद्यसाध्यानां क्रमयौगपद्याभ्यामेव करणात्, तथास्वभावत्वादिति परिणामोऽपि क्षणक्षयिण्यसङ्गत एव, क्षणानामत्यन्तभेदात्, वृद्ध्यनुपपत्तेः सहकारिणोऽ[1]योगात् अणोर्महद्भावासिद्धेः, अतिप्रसङ्गात्, [2]हेतुधर्मान्वयानुपपत्तेः तेषां चोपलम्भात्, तथाप्रतीतेरिति।**

(स्वो० व्या०)

माने अधिकृतभूतेः। किमित्याह–**तद्व्यतिरिक्तेतरादिदोषः** तस्या भूतेस्तत्-स्वभावद्वय व्यतिरिक्तमव्यतिरिक्तं व्यतिरिक्ताव्यतिरिक्त वा स्यात्। व्यतिरिक्तत्वे तस्येति सङ्गायोगः। अव्यतिरिक्तत्वे तत्स्वभावैकत्वादि, व्यतिरिक्तत्वाव्यतिरिक्तत्वे विरोधः, वस्त्वविरोधेऽप्युपगमविरोध इति दोषः। दोषान्तरमाह–**अनुभयस्वभावत्वे** भूतेः। किमित्याह–**अवस्तुता,** न ह्यनुभयस्वभावं नाम वस्तु **इति–एवमन्वयिन्येव** वस्तुनि। किमित्याह–**अर्थक्रियासिद्धिः तस्यैव**–अन्वयिनो वस्तुनः। किमित्याह–**तथा**–अर्थक्रिया[3]रूपेण **अभवनात्** परिणाम-निमित्ताभ्यामिति। **क्रमे**त्यादि। क्रम**यौगपद्यसाध्याना**मर्थक्रियाणां **क्रम-यौगपद्याभ्यामेव करणात्।** करण च **तथास्वभावत्वादिति**–क्रम-यौगपद्याभ्यामेवार्थक्रियाकरण-स्वभावत्वादिति क्रमेण पारमितापूरणाद् बुद्धत्वं यौगपद्येन प्रदानकुशलचित्तप्रणि-धानादिविकल्पान्तरमधिकृत्याह–**परिणामोऽपि क्षणक्षयिणि** भावे। किमित्याह–**असङ्गत एव।** कुत इत्याह–**क्षणानामत्यन्तभेदात्** कारणात्। किमित्याह–**वृद्ध्य[4]नुपपत्तेः** तथाविधात् तथाविधभावेन तथा **सहकारिणो[5]ऽयोगात्** उक्तनीत्यैव **अणोः** सकाशात् **महद्भावासिद्धेः,** महतो भावो महद्भावः तदसिद्धे-रिति। असिद्धिश्च **अतिप्रसङ्गात्।** अतिप्रसङ्गश्च **हेतुधर्मान्वयानुपपत्तेः** निर-

(विवरणम्)

(१५) **परिणाम-निमित्ताभ्यामिति।** परिणामश्च प्रतिक्षणं मृदादेः स्वयमेवापरा-परावस्थाप्रतिपत्तिरूपम्, निमित्तं च कुलालचक्रचीवरादि, ताभ्यां कृत्वाऽन्वयिन्येनि एवार्थक्रियासिद्धिः ॥

(१८) **क्रमेण पारमितापूरणाद् बुद्धत्वमिति। बुद्धस्य** दानपारमिता क्रमेण पूर्यते, न हि यौगपद्येनासौ सर्व दातुं सह इति ॥

(१८-१९) **यौगपद्येन प्रदानकुशलचित्तप्रणिधानादी**ति। प्रदानं कुशलचित्त-प्रणिधान च यौगपद्येन भवतः। तथाहि–यस्मिन्नेव समयेऽसौ दत्ते तस्मिन्नेव कुशलं चित्तमाधत्ते इति ॥

१ 'कारिणो योगात्' इति क–पाठ। २ 'हेतुकर्मान्वया०' इति ग–पाठ। ३ 'रूपेण भवनात्' इति ङ–पाठ.। ४ 'वृत्त्यनुप०' इति क–पाठ। ५ 'कारिणा योगा०' इति ङ–पाठ।

(मूलम्)

**कथं तथाप्रतीतिरिति चेत् पिण्ड-घटयोर्मृत्त्वदर्शनात्, अन्वयरहितेऽपि [१]तदस्त्येवेति चेत्, क्वास्तीति सुविचार्य वक्तव्यम्, [२]तत्कार्ये घटान्तर इति चेत्, न तद्वत् तदहेतुकं तदिति चिन्त्यम्। तद्धेतुकत्वेऽपि [३]भेदोऽविशिष्ट इति चेत्, कथमविशेषे परिणामादिविशेषः?। अस्ति चायं नियमेन, अतस्तस्यैव तथाभवनात् तत्परिणामजात्युपपत्तेः अविगानेन दर्शनात् तथातद्व्यवहारसिद्धेः दर्शनस्याभ्रान्तत्वात्, अन्यथा तदनुपपत्तेः, तन्नियमवन्निमित्ताभावात् तत्तथाभावाभावे च [४]तदसिद्धिरिति। नासिद्धिः असतोऽपि**

(स्वो० व्या०)

न्वयनाशयोगतः **तेषां च**–हेतुधर्माणा**मुपलम्भात्**। कार्ये उपलम्भश्च **तथा**–हेतुधर्मान्वयत्वेन **प्रतीतेरिति**। **कथं तथाप्रतीतिः?**। **इति चेत्**, एतदाशङ्क्याह–**पिण्ड-घटयोर्मृत्त्वदर्शनात्**। **अन्वयरहितेऽपि** वस्तुनि **तत्**–मृत्त्वदर्शनम**स्त्येव**। **इति चेत्**, एतदाशङ्क्याह–**क्वास्तीति**–एवं **सुविचार्य वक्तव्यम्**। **तत्कार्ये**–विवक्षितपिण्डकार्ये **घटान्तरे**। **इति चेत्**, एतदाशङ्क्याह–**न, तद्वत्**–घटान्तरवत् **तदहेतुकं**–विवक्षितपिण्डाहेतुकं **तत्**–विवक्षितघटाख्यं कार्य**मिति चिन्त्यमे**तत्। **तद्धेतुकत्वेऽपि**–विवक्षितपिण्डहेतुकत्वेऽपि विवक्षितघटाख्यकार्यस्येति प्रक्रमः। किमित्याह–[५]**भेदोऽविशिष्ट इति चेत्** तयोः पिण्ड-घटयोरिति। एतदाशङ्क्याह–**कथमविशेषे**ऽधिकृतपिण्डघटयोर्भेदस्य **परिणामादिविशेषः?**। 'आदि'शब्दाद् [६]वर्णमसृणत्वादिग्रहः। **अस्ति चायं**–परिणामादिविशेषो **नियमेन**। **अतस्तस्यैव तथाभवनात्** कारणात्–अधिकृतमृत्पिण्डस्य विवक्षितघटत्वेन भवनात्। भवनं च **तत्परिणामजात्युपपत्तेः**, विवक्षितघट इति प्रक्रमः। उपपत्तिश्च **अविगानेन दर्शनात्** तत्परिणामजात्योः **तथातद्व्यवहारसिद्धेः**–अविगानदर्शनेन तत्परिणामजातिव्यवहारसिद्धेः। एवं **दर्शनस्याभ्रान्तत्वात्** तत्परिणामजातिगोचरस्य। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा तदनुपपत्तेः** तस्यैव तथाभवनमन्तरेण विवक्षितघटानुपपत्तेः। अनुपपत्तिश्च **तन्नियमवन्निमित्ताभावात्**–तत्परिणामजातिनियमवन्निमित्ताभावात्। सर्वोपसंहारार्थमाह–[७]**तत्तथाभावाभावे च** [८]**तदसिद्धिरिति** तस्यैव तथाभावाभावे च

१ 'तदास्त्येवेति' इति **ग**–पाठः। २ 'तदकार्ये' इति **ग**–पाठः। ३ 'भेदो विशिष्ट इति' इति **ग**–पाठः। ४ 'तदसिद्धेरिति' इति **ग**–पाठः। ५ 'भेदो विशिष्ट' इति **ङ**–पाठः। ६ 'वर्णमसृण०' इति **ङ**–पाठः। ७ 'सत् तथा०' इति **ङ**–पाठः। ८ 'तदसिद्धेरिति' इति **ङ**–पाठः।

( मूलम् )

**भावाभ्युपगमादिति चेत्, कस्यासत एव भावाभ्युपगमः ? । तत्तथाभवने संस्थानादेरिति चेत्, न हि तन्न तद्धर्म इति नासदेव, तस्यापि भावे कारणवत् तदा सिद्ध्यादिसङ्ग इति चेत्, तथास्वभावत्वेन अस्यायमदोषः । कथमिति न सम्यगवगच्छाम इति चेत्, तस्यैवासौ स्वभावो येनान्यदा तत्सिद्ध्यादीति[1] । न चैतावता सर्वथाऽसद्भवनम्, तदनुवेधासिद्धेः, तदपेक्षायोगात्, तत्तद्भावोपलब्धेः, तदतादवस्थ्यात्, अन्यथा तदसिद्धेः, वस्तुधर्मत्वात् निबन्धनोपपत्तेः**

( स्वो० व्या० )

परिणामासिद्धिरिति, "तद्भावः परिणामः"[2] इति न्यायात् । **नासिद्धिः** परिणामस्य **असतोऽपि** भवद्भिरपि **भावाभ्युपगमात् । इति चेत्**, एतदाशङ्क्याह—**कस्यासत एव** अस्माकं **भावाभ्युपगमः ?** । **तत्तथाभवने**—अधिकृतमृत्पिण्डस्य विवक्षितघटत्वेन भवने **संस्थानादेः**—ऊर्ध्वाद्यर्थक्रियाशक्त्यादेः । **इति चेत्**, एतदाशङ्क्याह—**न हि तत्**—सस्थानादि **न तद्धर्मः**—अधिकृतमृत्पिण्डधर्मः, किन्तु तद्धर्म एव । **इति**—एवं **नासदेव**—सस्थानाद्येकान्तेन **तस्यापि भावे** संस्थानादेः **कारणवत्**—अधिकृतमृत्पिण्डवत् **तदा**—मृत्पिण्डकाल एव **सिद्ध्यादिसङ्गः**—उपलब्ध्यर्थक्रियासङ्गः । **इति चेत्**, एतदाशङ्क्याह—**तथास्वभावत्वेन**—अन्यदा कारणस्वभावत्वेन **अस्य**—मृत्पिण्डस्य **अयमदोषः** तदा सिद्ध्यादिसङ्गलक्षणः । **कथं**—केन प्रकारेणेत्येतदेव[3] **न सम्यगवगच्छामः ? । इति चेत्**, एतदाशङ्क्याह—**तस्यैवासौ स्वभावो**ऽधिकृतमृत्पिण्डस्य **येन**—स्वभावेन **अन्यदा**—अनन्तरसमये **तत्सिद्ध्यादि**—सस्थानाद्युपलब्ध्यादि **इति** । इहैवोपचयमाह **न चे**त्यादिना । न **चैतावता**ऽन्यदा तत्सिद्ध्यादिभावेन **सर्वथा**—एकान्तेन **असद्भवनं** सस्थानादेः । कुत इत्याह—**तदनुवेधासिद्धेः**—असदनुवेधानुपलब्धेः संस्थानादौ तथा **तदपेक्षायोगात्**—अधिकृतमृत्पिण्डापेक्षायोगात्, सर्वथाऽसद्भवने न तथा **तत्तद्भावोपलब्धेः**—सस्थानादौ मृद्भावोपलब्धेः **तदतादवस्थ्यात्**—अधिकृत-

( विवरणम् )

(१४) **ऊर्ध्वाद्यर्थक्रियाशक्त्यादेरि**ति । ऊर्ध्वादिसंस्थानमर्थक्रियाशक्तिश्च जलाद्याहरणादिसामर्थ्यलक्षणा मृत्पिण्डे पूर्वमविद्यमानैव घटादावुत्पन्नेति ॥

(१८-१९) **अन्यदा कारणस्वभावत्वेने**ति । मृत्पिण्डस्यैवायं स्वभावो यदुत अन्यदा—घटकाले सस्थानादेः कारणतां प्रतिपद्यते ॥

---

१ 'सिद्ध्यादीनि' इति क-पाठ । २ तत्त्वार्थाधिगमसूत्रे (अ० ५, सू० ४१)। ३ 'तदेव न' इति ङ-पाठ ।

(मूलम्)

**प्रतीत्यनुग्रहादित्यन्वयिन्येव संयोगोपचयात् परिणामसिद्धिः । अन्तक्षयेक्षणमप्यतत्स्वभावस्य वस्तुनस्तदभावात् न क्षणिकत्वसाधनम्। प्रतिक्षणं तत् तत्स्वभावमिति चेत्, कथमन्तवत् तदनुपलम्भः? । सादृश्यविप्रलम्भादिति चेत्, उभयाग्रहे क एतद् वेद? न च तयोस्तत्त्वेऽन्यतरग्रहणेऽप्यदोषः, तत्तत्त्वाप्रतीतेः । न च कथञ्चिदेकेनैवोभयग्रहणम्, अनभ्युपगमात् ॥**

(स्वो० व्या०)

मृत्पिण्डातादवस्थ्यात् **अन्यथा तदसिद्धेः**–अभवनभवनमात्रापत्त्या अतादवस्थ्यासिद्धेः **वस्तुधर्मत्वादतादवस्थ्यस्य निबन्धनोपपत्तेः** वस्तुधर्मत्व एव । एनामेवाह–**प्रतीत्यनुग्रहात्** तत्रातादवस्थ्यसंवित्त्या । **इति**–एवम**न्वयिन्येव** वस्तुनि **संयोगोपचयात्** कारणात् **परिणामसिद्धिः** अन्यथोक्तवदयोगादिति । **अन्तक्षयेक्षणमपि** परोपन्यस्तं क्षणिकत्वसाधनं किमित्याह–**अतत्स्वभावस्य**–अनन्तक्षयेक्षणस्वभावस्य **वस्तुनः**–घटादेः **तदभावात्**, अनन्तक्षयेक्षणाभावात् । किमित्याह–**न क्षणिकत्वसाधनं** प्रत्युत तावत्कालस्थितिस्वभावसाधनमिति । **प्रतिक्षणं**–क्षणं क्षणं प्रति **तत्**–वस्तु **तत्स्वभावं**, प्रक्रमात् क्षयेक्षणस्वभावम् । **इति चेत्**, एतदाशङ्क्याह–**कथमन्तवत्**–यथाऽन्ते तथा **तदनुपलम्भः**–प्रतिक्षणं क्षयेक्षणानुपलम्भः? । **सादृश्यविप्रलम्भात्** । **इति चेत्** 'मायागोलक'-न्यायेन, एतदाशङ्क्याह–**उभयाग्रहे**, तदन्याग्रह इत्यर्थः । **क एतत्**–सादृश्यं **वेद**–जानाति? । **न चे**त्यादि । न च **तयोः**–तदन्ययोः **तत्त्वे**–वस्तुस्थित्या सदृशत्वे सति **अन्यतरग्रहणेऽपि**, एकग्रहणेऽपीत्यर्थः, **अदोषो** न चानन्तरोदितः[1], किन्तु दोष एव । कुत इत्याह–**तत्तत्त्वाप्रतीतेः** तयोः–तदन्ययोः तत्त्वा[2]-प्रतीतेः–वास्तवसदृशत्वाप्रतीतेः । वास्तवसदृशत्वाप्रतीतिरुभयाग्रहादेवेति भावनीयम् । **न चे**त्यादि । न च **कथञ्चित्**–केनचित् प्रकारेण **एकेनैव**, ग्राहकेणेति प्रक्रमः, **उभयग्रहणं** तदन्यग्रहणमिति भावः । कुत इत्याह–**अनभ्युपगमात्** ।

"एकमर्थं विजानाति[3] नो विज्ञानद्वयं यथा ।
विजानाति न विज्ञानमेकमर्थद्वयं तथा ॥"[4]

इति वचनादनभ्युपगमः ॥

१ 'वानन्तरो' इति क-पाठः । २ 'तथाप्रतीतेः' इति ङ-पाठः । ३ 'जानाति न विज्ञान०' इति ङ-पाठः । ४ अनुष्टुप् ।

( मूलम् )

**कश्चायं क्षयो नाम? [१]ननु विनाशः। कथमस्येक्षणं स्यात्?। भावे को दोषः?। इन्द्रियस्य [२]तुच्छेऽप्रवृत्तिः। [३]न वै स तुच्छः। ननु किमन्तेक्षणेन? स विजातीयस्तस्य नाशत्वेऽन्वयः। स पूर्वाभावः। नान्येक्षणे तदीक्षणम्, तत एव तत्। कथं प्रतिबन्धाभावे?। तत्तत्स्वाभाव्यात्। न तस्यैकान्ततुच्छत्वम्। ततः किमिति?। तदतदात्मको नाशः, [४]क एवं दोषः?। गुणः, असद्दर्शनत्यागात्। कथं तत्त्यागः?। "न विनाशो नामान्य एव कश्चिद् भावात्"। स्वभाव एव हि नाशः, स एव क्षणस्थायी जात इति तमस्य मन्दाः स्वभावमूर्द्ध्वं**

( स्वो० व्या० )

अभ्युच्चयमाह **कश्चायमित्यादिना**। कश्चायं **क्षयो नाम** इति वाच्यम्। पर आह–**ननु विनाशः**–क्षयः। एतदाशङ्क्याह–**कथमस्य**–विनाशस्य **ईक्षणं**–दर्शन **स्यात्?**। पर आह–**भावे को दोषः** विनाशेक्षणस्य?। एतदाशङ्क्याह–**इन्द्रियस्य** चक्षुषस्**तुच्छे** विनाशे **अप्रवृत्तिः**, तुच्छत्वादेव। पर आह–**न चैष तुच्छो** विनाशः। एतदाशङ्क्याह–[५]**ननु किमन्तेक्षणेना**तुच्छस्यानन्तेऽपि दर्शनादित्यभिप्रायः। पर आह–**स विजातीयः** कपालादेरनन्तजस्तु सजातीयः। एतदाशङ्क्याह–[६]**तस्य नाशत्वे** अपि विजातीयस्य कपालादेः। किमित्याह–**अन्वयो** भावा[७]विच्छेदादिति गर्भः। पर आह–**स पूर्वाभावो** नाशः। एतदाशङ्क्याह–**नान्येक्षणे**–कपालादिदर्शने **तदीक्षणं**–पूर्वाभावदर्शनम्। पर आह–**तत एव तत्**–विजातीयदर्शनादेव पूर्वाभावस्य दर्शनम्। एतदाशङ्क्याह–**कथं प्रतिबन्धाभावे?** विजातीयपूर्वाभावयोरिति प्रक्रमः। पर आह–**तत्तत्स्वाभाव्यात्**–विजातीयपूर्वाभावयोः तत्स्वभावत्वात्। एतदाशङ्क्याह–**न तस्यैकान्ततुच्छत्वं** पूर्वाभावस्य। पर आह–**ततः किमिति** यदि नामैवम्। एतदाशङ्क्याह–न विनाशो [८]नामान्य एव, **तदतदात्मको नाशः** विजातीयपूर्वाभावात्मकः। अन्यथैकान्ततुच्छतया स्वभावासिद्धिः पूर्वाभावस्येत्यभिप्रायः। पर आह–[९]**क एवं दोषः** तदतदात्मकत्वे?। एतदाशङ्क्याह–**गुणः असद्दर्शनत्यागान्न** तु दोषः। पर आह–**कथं तत्त्यागः**–असद्दर्शनत्यागः?। एतदाशङ्क्याह–**"न विनाशो नामान्य एव कश्चिद् भावात्"** इति वचनादिति योगः। **स्वभाव एव हि नाशः**, पदार्थ एवेत्यर्थः।

१ 'न तु विनाश' इति क–पाठ। २ 'तुच्छे प्रवृत्ति' इति ग–पाठ। ३ 'न चैव स तुच्छ' इति ग–पाठ, टीकाधारेण तु 'न चैष तुच्छ' इति पाठो भाति। ४ 'स एव दोष' इति ग–पाठ; क–पाठस्तु 'क एव दोष' इति। ५ 'न तु' इति क–पाठ। ६ 'नश्यनाश्यत्वे' इति क–पाठ। ७ 'भावाविच्छेद इति' इति क–पाठ। ८ 'सामान्य एव' इति ङ–पाठ। ९ 'क एद(?) दोष' इति ङ–पाठ।

( मूलम् )

[1]व्यवस्यन्ति, न प्राग् दर्शनेऽपि, पाटवाभावादिति तद्वशेन पश्चाद् व्यवस्थाप्यते "विकारदर्शनेनेव विषमज्ञैः" इति वचनात्। इह भाव एव क्षणस्थायी नाशः, न तन्निवृत्त्यात्मकोऽन्यः, तस्य अन्यधर्मत्वानभ्युपगमात्, अभ्युपगमे च तस्यान्वयापत्तिः, तदनिवृत्तेरिव तन्निवृत्तेर्भावस्वभावत्वेन तस्यैव तथाभवनादिति । यच्च इदमुक्तम्[2]–'तमस्य मन्दाः स्वभावमूर्द्ध्वं व्यवस्यन्ति' तदयुक्तम्, ऊर्द्ध्वं तदभावात् तस्यैव तत्त्वाध्यवसायायोगात्, निर्विषयत्वात्। ततश्चैतदप्यनालोचिताभिधानमेव 'न प्राग् दर्शनेऽपि', दर्शनस्यैव व्यवसायत्वात्, तद्याथात्म्यप्रतिभासनात्, 'पाटवाभावात्' इत्यपि

( स्वो० व्या० )

**स एव क्षणस्थायी जातः** पदार्थ **इति तमस्य मन्दाः**–जडाः **स्वभावं**–क्षणस्थायित्वलक्षणं स्वभावमूर्ध्वं **व्यवस्यन्ति** क्षणात्, **न प्राक्**–क्षणकाल एव **दर्शनेऽपि** सति । कुत इत्याह–**पाटवाभावात्। इति**–एवं **तद्वशेन**–मन्दव्यवसायवशेन **पश्चाद् व्यवस्थाप्यते**ऽसौ स्वभावः । निदर्शनमाह–**विकारदर्शनेनेव**[3]–वमनादिना **विषमज्ञैः** पुरुषैः पश्चाद् व्यवस्थाप्यते, अन्यथा तत् प्रागपि विषमेव **इति वचनात्** तत्त्याग एव । इहैव भावार्थमाह इहेत्यादिना । इह–भवद्दर्शने **भाव एव क्षणस्थायी नाशो** वर्तते, **न तन्निवृत्त्यात्मकोऽन्यो** नाशः । कुत इत्याह–**तस्य**[4] अनिवृत्तेः **अन्यधर्मत्वानभ्युपगमात्**, विजातीयधर्मत्वानभ्युपगमादित्यर्थः । **अभ्युपगमे च तस्य**–अन्यधर्मत्वस्य किमित्याह–**अन्वयापत्तिः**। कथमित्याह–**तदनिवृत्तेरिव**–पूर्वाभावानिवृत्तेरिव **तन्निवृत्तेः**–अधिकृतभावनिवृत्तेः **भावस्वभावत्वेन** हेतुना विजातीयधर्मत्वाभ्युपगमे **तस्यैव तथाभवनादिति** अन्वयापत्तिः । एवं गुणोऽसद्दर्शनत्यागादिति[5] । **यच्चेदमुक्तमिहैवं**[6]–**'तमस्य मन्दाः स्वभावमूर्द्ध्वं व्यवस्यन्ति' तदयुक्तम्**। कथमित्याह–**ऊर्द्ध्वं तदभावात्**–अधिकृतभावाभावात् **तस्यैव** यस्योर्द्ध्वमभावः **तत्त्वाध्यवसायायोगात्** तद्भावस्तत्त्वं तदध्यवसायायोगात् । अयोगश्च **निर्विषयत्वात्** ऊर्द्ध्वं तदभावेन । यदा चैवं **ततश्चैतदप्यनालोचिताभिधानमेव न प्राग् दर्शने**ऽपीति । कथमित्याह–**दर्शनस्यैव व्यवसायत्वात्** कारणात् । एतदेव द्रढयन्नाह–**तद्याथात्म्यप्रतिभासनाद्** दर्शन एव । एवं **पाटवाभावा**-

१ 'वावस्यन्ति' इति ग–पाठः । २ २०३तमे पृष्ठे २०४तमे च । ३ 'दर्शनेन वमना०' इति ङ–पाठः । ४.'तस्यानिवृत्ते वृत्तेः' इति ङ–पाठः । ५ द्रष्टव्यं २०३तमं पृष्ठम् । ६ २०३तमे पृष्ठे २०४ तमे च ।

( मूलम् )

**[1]तदेकस्वभावत्वात् ग्राहकभेदायोगादिति, अतः 'तद्दर्शेन पश्चाद् व्यवस्थाप्यते'[2] इत्यप्यपाटवाभावादुक्तवत् तदयोगादिति। 'विकारदर्शनेनेव विषमज्ञैः' इत्यसुन्दरं ज्ञातम्, तत्र प्राक् [3]सर्वथा मारणात्मकशक्त्यभावात्, समग्रभावे विकारदर्शनात्, असमग्राया अदर्शनात्, तद्वत् तदितरत्र तथानिश्चयाभावादित्यन्वयिन्येव [4]तथाऽसमानोपलब्ध्यां तत्क्षयेक्षणमित्यलं प्रसङ्गेन ॥**

**यच्चोक्तम्[5]—'अन्यथाऽऽत्मनो व्यवस्थितत्वाद् वेदनाऽभावाद् भावे अपि विकारान्तराभावात् प्रतिपक्षाभ्यासेनाप्यनाधेयातिशयत्वाच्च मुक्त्यसम्भवः' इत्येतदपि न नः क्षतिमावहति, अनभ्युपगमात्। न**

( स्वो० व्या० )

दित्यपि पूर्वोक्त **तदेकस्वभावत्वात्** तस्य–वस्तुन एकस्वभावत्वात् कारणात् **ग्राहकभेदायोगादि**त्यनालोचिताभिधानमेव। **अतस्तद्दर्शेन पश्चाद् व्यवस्थाप्यत** इत्यपि किमित्याह–**अपाटवाभावात्** हेतोः **उक्तवत्**–यथोक्तम्। एकस्वभावत्वादिति तथा **तदयोगादिति**–पाटवाभावायोगादिति क्रिया पूर्ववत्। **विकार[6]दर्शनेनेव विषमज्ञैरित्यसुन्दरं ज्ञातम्**–उदाहरणम्। कथमित्याह–तत्रेत्यादि। तत्र–विषे **प्राक् सर्वथा**–फलकरणरूपेणापि **[7]मारणात्मकशक्त्यभावात्** अभावश्च **समग्रभावे** भक्षणे सति **विकारदर्शनात्**–वमनादिदर्शनात्, **असमग्रायाः**–शक्तेः केवलविषगताया **अदर्शनात्**। एतदेवाह **तद्वदि**त्यादिना। तद्वत्–समग्रभाव इव **[8]तदितरत्र**–असमग्रायां **तथा**–फलकरणरूपेण **निश्चयाभावात्**। **इति**–एव**मन्वयिन्येव तथा**–तेन प्रकारेण पूर्वाभावात्मकत्वलक्षणेन **असमानोपलब्ध्यां** विजातीयोपलब्ध्या हेतुभूतया **(तत्)क्षयेक्षणम्**–अन्तक्षयेक्षण नान्यथा **इत्यलं प्रसङ्गेन** ॥

**यच्चोक्तमित्यादि**। यच्चोक्तं मूलपूर्वपक्षे[9]–**अन्यथाऽऽत्मनो व्यवस्थितत्वात्** कारणात् **वेदनाऽभावात् भावेऽपि विकारान्तराभावात्** नित्यतया **प्रतिपक्षाभ्यासेनापि**। किमित्याह–**अनाधेयातिशयत्वाच्च मुक्त्यसम्भव इति,**

( विवरणम् )

(१८) **फलकरणरूपेणापीति**। प्रागवस्थाया हि विषे भवतां मते फलकरणरूपेणापि इदं विषं भक्षितं सत् मारयिष्यतीत्येवलक्षणेन मारणात्मशक्तेरभावः ॥

१ 'तदेकत्वस्वभाव०' इति क–पाठ। २ द्रष्टव्य २०४तम पृष्ठम्। ३ सर्वथा 'साधारणा०' इति क–पाठश्चिन्त्य। ४ 'तथा तथा' समानोप०' इति क–पाठ, ग–पाठस्तु 'तथा समानोप०' इति। ५ १३६तमे पृष्ठे। ६ 'दर्शनेन विष०' इति ङ–पाठ। ७ 'धारणा०' इति क–पाठ। ८ 'तदितरत्रापि समग्राय(या) तथा' इति ङ–पाठ। ९ १३६तमे पृष्ठे।

( मूलम् )

ह्येकान्तनित्यमस्माभिरात्मादि वस्त्विष्यते। किं तर्हि? कथञ्चित्। [1]यथा चास्य नित्यानित्यता तथोक्तमेव। नित्यानित्य एव ग्राह्य[2]ग्राहकभावस्वकृतकर्मफलभोगादयो युज्यन्ते, कथञ्चिदवस्थितत्वात्, तस्यैव [3]तथावृत्तेः, अनुभवसिद्धत्वात्, अतो विरोधिधर्माध्यासितस्वरूप एव वस्तुन्यनेकान्तवादिन एव सकलव्यवहारसिद्धिः, पीडानिर्वेदमार्गज्ञानभावनादीनामपि [4]कथञ्चिदेकाधिकरणत्वेन मुक्त्युपपत्तेरिति। न चानुभवसिद्धवस्तुतथाभावे विरोधिधर्माध्यासितस्वरूपाभिधानं न्याय्यम्, अतथाभावे तदभाव[5]प्रसङ्गतो विरोधासिद्धेरिति निदर्शितं प्राक्। न च परैरपि स्वलक्षणेषु साधारणा प्रमेयता भ्रान्तौ वाऽभ्रान्ता

---

( स्वो० व्या० )

एतदपि–पूर्वपक्षोक्तं न नः–अस्माकं क्षतिमावहति। कुत इत्याह अनभ्युपगमात्। एनमेवाह न हीत्यादिना। न यस्मादेकान्तनित्यमस्माभिः–जैनैः आत्मादि वस्त्विष्यते। किं तर्हि? कथञ्चित् नित्यम्, नित्यानित्यमित्यर्थः। यथा चास्य–वस्तुनो नित्यानित्यता तथा चोक्तमेव प्राक्। एवं नित्यानित्य एव आत्मादिवस्तुनि ग्राह्यग्राहकभावश्च स्वकृतकर्मफलप्रत्युपभोगादयश्चेति विग्रहः युज्यन्ते–घटन्ते। कथमित्याह–कथञ्चिदवस्थितत्वात् कारणात्। कथञ्चिदवस्थितत्वं च तस्यैव–ग्राह्यादेः तथावृत्तेः–विशिष्टग्राह्यादिरूपेण वर्तनात् अनुभवसिद्धत्वात् कारणादिति। अतो विरुद्धधर्माध्यासितस्वरूप एव वस्तुनि शब्दवृत्त्या अनेकान्तवादिन एव–वादिन एव सकलव्यवहारसिद्धिः, पीडानिर्वेदमार्गज्ञानभावनादीनामपि–व्यवहारभेदानां कथञ्चिदेकाधिकरणत्वेन हेतुना मुक्त्युपपत्तेरिति। न चेत्यादि। न च–नैव अनुभवसिद्धश्चासौ वस्तुतथाभावश्च–सदसद्रूपादिभावश्चेति विग्रहः, तस्मिन् सति विरोधिधर्माध्यासितस्वरूपाभिधानं न्याय्यं वस्तुनो न च। कुत इत्याह–अतथाभाव इत्यादि। अतथा[6]भावे–असदसद्रूपादिभावे तदभावप्रसङ्गतः–वस्त्वभावप्रसङ्गतः विरोधासिद्धेरिति–एवं निदर्शितं प्राक्। न चेत्यादि। न च परैरपि–बौद्धैः स्वलक्षणेषु–स्वाभ्युपगतेषु वस्तुषु साधारणा प्रमेयता तथा भ्रान्तौ वाऽ[7]भ्रान्ता स्वसंविन्नेष्यते, किन्त्विष्यत एव, तत्तथाभावापत्तेः

१ 'यथास्य नित्या०' इति ग–पाठः। २ 'ग्राहकस्वभावस्वकृत०' इति ग–पाठः। ३ 'तथा प्रवृत्तेः' इति ग–पाठः। ४ 'किञ्चिदेकाधि०' इति ग–पाठः। ५ 'प्रसङ्गात् विरोधा०' इति क–पाठः। ६ 'भावे सद०' इति क–पाठः। ७ 'भ्रान्ता संवि०' इति क–पाठः।

( मूलम् )

**स्वसंविन्नेष्यते, तत्तथाभावापत्तेरिति न विपश्चितस्तथा विरोधिधर्माभिधानं वैपश्चित्याविरोधि, तत्तथाऽभावे सकलव्यवहाराभावप्रसङ्गात्, अप्रमेयत्वेन स्वलक्षणेषु प्रमाणाप्रवृत्तेः, भ्रान्तौ च स्वसंविद्भावप्रसङ्गादिति ॥**

**न चैतदात्मा-ऽङ्गना-भवन-मणि-कनक-धन-धान्यादिकमनात्मकमनित्यमशुचि दुःखमेव, अन्वयस्यैवात्मत्वात्, तस्य च व्यवस्थापितत्वात्। एवं नानित्यमेव, तदतादवस्थ्यात्, अन्यथा [1]तदनुपपत्तेः। एवं नाशुच्येव, शुचिपरिणामभावात्, लोके तथोपलब्धेः। एवं न दुःखमेव, मुक्तिसुखजनकत्वात्, पारम्पर्येण तत्स्वभावत्वादिति ॥**

**किञ्चानात्मकं शून्यमसदित्यभिन्नोऽर्थः, अनित्यमस्थिरं सदिति**

---

( स्वो० व्या० )

तेषां—स्वलक्षणादीनां तथाभावापत्तेः—प्रमेयादिभावापत्तेः। **इति**—एव **न विपश्चितः**—[2]पण्डितस्य ते **तथा**—तेन प्रकारेण **विरोधिधर्माभिधानं वैपश्चित्त्याविरोधि**—पाण्डित्याविरोधि, किन्तु विरोध्येव, **तत्तथाऽभावे** तेषां—स्वलक्षणादीनां तथाऽभावे—साधारणप्रमेयतादिरूपेणाभावे । किमित्याह—**[3]सकलव्यवहाराभावप्रसङ्गात्।** एनमेव दर्शयति **अप्रमेयत्वेने**त्यादिना । साधारणप्रमेयताऽभावेऽप्रमेयत्वेन हेतुना **स्वलक्षणेषु**—परपरिकल्पितेषु **प्रमाणाप्रवृत्तेः** कारणात् तथा **भ्रान्तौ च** विकल्पात्मिकायां **स्वसंविदोऽभावप्रसङ्गात्** सकलसंव्यवहाराभाव इति भावनीयम् ॥

**न चैत**दित्यादि । न चैत**दात्मा-ऽङ्गना-भवन-मणि-कनक-धन-धान्या**दिकं वस्तु **अनात्मकमनित्यमशुचि दुःखमेव**—एकान्तेनैव । कुत इत्याह—**अन्वयस्यैवात्मत्वात्, तस्य च**—अन्वयस्य **व्यवस्थापितत्वात्। एवं नानित्यमेव**—एकान्तेन । कुत इत्याह—**तदतादवस्थ्यात्, अन्यथा तदनुपपत्तेः**—अतादवस्थ्यानुपपत्तेः तुच्छाभावत्वेन भावितमेतत् । **एवं नाशुच्येव**—एकान्तेन **शुचिपरिणामभावात्** । भावश्च **लोके तथोपलब्धेः** जलशुचिकरणेन । **एवं न दुःखमेव**—एकान्तेन वस्तु । कुत इत्याह—**मुक्तिसुखजनकत्वात्**। जनकत्वं च **पारम्पर्येण तत्स्वभावत्वात्**—मुक्तिसुखजनकस्वभावत्वात् ॥

अभ्युच्चयमाह **किञ्चे**त्यादिना। किञ्च **अनात्मकं शून्यमसदित्यभिन्नोऽर्थः,**

---

१ 'तदनुत्पत्ते' इति ग-पाठ । २ 'पाण्डतस्य तथा' इति ङ-पाठ । ३ 'सकललोकव्यव॰' इति क-पाठ ।

( मूलम् )

च। ततश्च यद्यनात्मकं कथमनित्यम्? अथानित्यं कथमनात्मकमिति?। कथं च बुद्धधर्मसङ्घलक्षणे परमनिर्वृत्तिहेतौ दोषकलङ्करहिते महारत्नत्रये सति वचनमार्गकुशलस्य तदपायभीरोः अपास्ताशङ्कमिदं वक्तुमुचितं यदुत सर्वमेवाशुचि सर्वमेव दुःखमिति, तदाशातनापत्तेः, असदभिधानात्, अन्यथा रत्नत्रयायोगः, तदन्याशुच्याद्यविशेषात्[1] योगे[2] वाऽतिप्रसङ्ग इति ॥

एवं च तथाहि 'एतदात्मा-ऽङ्गना-भवन-मणि-कनक-धन-धान्यादिकमनात्मकमनित्यमशुचि दुःखमिति कथञ्चिद् विज्ञाय (भावतः) तथैव भावयतो वस्तुतस्तत्राभिष्वङ्गास्पदाभावाद् भावनाप्रकर्षविशेषतो वैराग्यमुपजायते, ततो मुक्तिः। तथाहि–आत्माऽऽत्मीयदर्शनमेव मोहः, तत्पूर्वक एवा(?त्मा)त्मीयस्नेहो रागः, तत्पूर्विकैवानुरागविषयोपरोधिनि प्रतिहतिर्द्वेष इति कृत्वा' इति यदुक्तं[3] तत् परपक्षे

( स्वो॰ व्या॰ )

पर्यायशब्दाः खल्वेत इत्यर्थः। एवमनित्यमस्थिरं सदिति च अभिन्नार्थ इति। ततश्च यद्यनात्मकं वस्तु असदित्यर्थः ततः कथमनित्यं–कथं सदिति भावः?। अथानित्यं कथमनात्मकमिति?। तत्त्वतो वास्तवो विरोधः। कथं चेत्यादि। कथं च बुद्धधर्मसङ्घलक्षणे, महारत्नत्रये सतीति योगः। किंविशिष्ट इत्याह–परमनिर्वृत्तिहेतौ[4] सत्त्वानां दोषकलङ्करहिते, विष्कम्भणप्रहाणादिना रागादिरहित इत्यर्थः। वचनमार्गकुशलस्य वक्तुः तदपायभीरोः–वचनापायभीरोरपास्ताशङ्कमिति क्रियाविशेषणं इदं वक्तुमुचितं कथं यदुत सर्वमेवाशुचि सर्वमेव दुःखमिति?। कथमनुचितमेतदित्याह–तदाशातना[5]पत्तेः–रत्नत्रयाशातनापत्तेः। आपत्तिश्च असदभिधानात् असद्रत्नत्रयस्याशुच्यादि। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–अन्यथा रत्नत्रयायोगः। कथमित्याह–तदन्याशुच्याद्यविशेषाद् रत्नत्रयस्य। 'आदि'शब्दाद् दुःखपरिग्रहः। योगे वा रत्नत्रयस्याशुच्याद्यविशेषेऽपि किमित्याह–अतिप्रसङ्ग इति ॥

एवं चेत्यादि। एवं च कृत्वा तथाह्येतदात्माङ्गनेत्यादि यावत् तत्पूर्विकैवानुरागविषयोपरोधिनि प्रतिहतिर्द्वेष इति कृत्वेति यदुक्तं मूलपूर्वपक्षे[6]

१ 'शुच्यादविशेषात्' इति ग–पाठोऽशुद्धः। २ 'योगे चाति॰' इति ग–पाठः। ३ प्रथमे खण्डे २७तमे पृष्ठे २८तमे च। ४ 'निर्वृतिहेतौ' इति ङ–पाठः। ५ 'तथा तदासा(शा)तना॰' इति ङ–पाठः। ६ प्रथमे खण्डे २७तमे पृष्ठे २८तमे च।

( मूलम् )

उक्तिमात्रमेव, उक्तवन्निर्विषयत्वात् । यच्चेदमुक्तम्[1]–'यदा तु तदात्माङ्गनादिकं सात्मकाद्यपि तदा[2] यथोक्तभावनाभावाद् भावेऽपि मिथ्यारूपत्वाद् वैराग्याभावः, तदभावाच्च मुक्त्यभाव इति' तदेतदत्यन्तनिःस्वस्य महाधने दानभोगवति स्वदोषापादनम्[3] । तथाहि–कथञ्चित् सात्मकादावेव तस्मिन् भावकविषयभावेनानुपचरितरूपा सम्भवति भावना, नान्यथेति कथं यथोक्तभावनाभावः ? । कथं वा पररूपेण अनात्मके तत्तत्संयोगापेक्षयाऽनित्ये तदशुचिपरिणामभावादशुचौ तथासन्तापकरत्वेन दुःखे सत्यस्या मिथ्यारूपत्वम् ? । कथं वा तस्यास्तथाविधनिर्वेदभावेन विरतिपरिणामयोगात् तत्त्व-

( स्वो० व्या० )

तत् **परपक्षे**–बौद्धमते **उक्तिमात्रमेव** । कथमित्याह–**उक्तवत्**–यथोक्तं तथा **निर्विषयत्वात्** कारणात् । **यच्चेदमुक्तं** मूलपूर्वपक्षे[4] एव–**यदा तु तदात्माङ्गनादिकं सात्मकाद्यपि तदा यथोक्तभावनाभावात्** वस्तु तथाभावेन **भावेऽपि मिथ्यारूपत्वाद्** भावनाया उक्तादेव हेतोः । किमित्याह–**वैराग्याभावः, तदभावाच्च**–वैराग्याभावाच्च **मुक्त्यभाव इति** । **तदेतत्**–मूलपूर्वपक्षोक्त[5] **अत्यन्तनिःस्वस्य** कस्यचिन्**महाधने** कस्मिँश्चित् किंविशिष्ट इत्याह–**दानभोगवति स्व**[6]**दोषापादनं** किमसौ ददाति भुङ्क्ते वा यो महाधन इत्येवम्प्रायम् । एतदेवाह **तथाहीत्यादिना** । तथाहीति पूर्ववत् । **कथञ्चित्**–केनचित् प्रकारेण प्रतिपक्षनयानुसारिणा **सात्मकादावेव तस्मिन्**–वस्तुनि **भावकविषयभावेन** सता तात्त्विकेन **अनुपचरितरूपा**–मुख्या **सम्भवति भावना, नान्यथा । इति**–एवं **कथं यथोक्तभावनाभावः** ? नैवेत्यर्थः । **कथं वा पररूपेणानात्मके**–वस्तुनि **तत्तत्संयोगापेक्षया** बाह्यान्तरभाँवावधिकृत्य[7] **अनित्ये तदशुचिपरिणामभावा**न्नरकादिगतिमधिकृत्य **अशुचौ तथा**–संयोग-वियोगाभ्यां **सन्तापकरत्वेन** हेतुना **दुःखे सति** वस्तुनि **अस्याः**–भावनाया **मिथ्यारूपत्वम् ? कथं वा तस्याः**–भावनायाः **तत्प्रकर्षरूपवैराग्याभाव** इति योगः । कथ च न स्यादित्याह–**तथाविधनिर्वेदभावेन**–चित्तक्षयोपशँमभावतश्चित्तनिर्वेदभावेन[8] हेतुना

१ प्रथमे खण्डे २८तमे पृष्ठे । २ 'तथा यथोक्त०' इति क–पाठ । ३ 'पादकम्' इति ग–पाठ । ४ प्रथमे खण्डे २८तमे पृष्ठे । ५ 'द्रष्टव्य प्रथमस्य खण्डस्य २८तम पृष्ठम् । ६ 'दोषापादान' इति क–पाठ । ७ 'भावाधिकृत्यानि नित्यानित्ये' इति क–पाठ । ८ 'शमयोगभावात् चित्र०' इति ङ–पाठ ।

(मूलम्)

ज्ञानसम्भवेन वस्तुयाथात्म्यावसायात् औदासीन्यभावत उपायप्रवृत्त्या तत्प्रकर्षरूपवैराग्याभावः ?। कथं वा सत्यस्मिन् असत्प्रवृत्तिरहितस्य निःसङ्गभावात् साम्परायिकबन्धशून्यस्य परमार्थ(?)-गुणस्थानयोगतोऽपचीयमानकर्मराशेः सर्वपरिशातभावतो मुक्त्यभाव इति परिचिन्त्यतामेतत् ॥

यदा तु तदात्माङ्गनादिकमनात्मकाद्येव तदोक्तवद् युक्तो भावनाभावः, भावेऽपि मिथ्यारूपता वैराग्याभावो मुक्त्यभावश्चेति । इतश्चैतदेवं सर्वथाऽनात्मकत्वे निःस्वभावत्वेन अनित्यत्वासिद्धिः[1], अनित्यत्वस्य वस्तुधर्मत्वात्, अतद्धर्मत्वे तदभावेन वस्तुनो नित्यत्वापत्तेः, तद्धर्मत्वे च तदव्यतिरेकतः कथमनात्मकत्वं वस्तुन एवात्मकत्वात् ॥

(स्वो० व्या०)

विरतिपरिणामयोगात्, अत एव तत्त्वज्ञानसम्भवेन वस्तुयाथात्म्यावसायात् हेतोः औदासीन्यभावतः सनिबन्धनत्वेन उपायप्रवृत्त्या उक्तनीतितः तत्प्रकर्षरूपवैराग्याभावः–औदासीन्यप्रकर्षरूपवैराग्याभावः । कथं वा सत्यस्मिन्–वैराग्ये असत्प्रवृत्तिरहितस्य–प्राणिनः निःसङ्गभावात् कारणात् साम्परायिकबन्धशून्यस्य वीतरागतया परमगुणस्थानयोगतः–शैलेश्यवास्था अपचीयमानकर्मराशेः तदपराबन्धकत्वेन सर्वपरिशातभावतो भवोपग्राहिकर्माधिकृत्य मुक्त्यभाव इति कथं वा मुक्त्यभाव इति परिचिन्त्यतामेतत्॥

यदा त्वित्यादि । यदा तु तदात्माङ्गनादिकमनात्मकाद्येव–एकान्तेन तदा–तस्मिन् काले उक्तवत्–यथोक्तं प्राक् भावकभाव्याभावेन तथा युक्तो भावनाभावः, भावेऽपि भावनाया मिथ्यारूपता वस्त्वन्यथात्वेन एवं वैराग्याभावो मुक्त्यभावश्चेति युक्तः । अभ्युच्चयमाह इतश्चेत्यादिना । इतश्च एतदेवं यदधिकृतं कथमित्याह–सर्वथाऽनात्मकत्वेन वस्तुनः निःस्वभावत्वेन हेतुना । किमित्याह–अनित्यत्वासिद्धिः । अनित्यत्वासिद्धिश्च अनित्यत्वस्य वस्तुधर्मत्वात्, अतद्धर्मत्वे–अवस्तुधर्मत्वे तदभावेन–अनित्यत्वाभावेन अतद्धर्मतया वस्तुनो नित्यत्वापत्तेः, इतश्चैतदेवमिति वर्तते । तद्धर्मत्वे च–वस्तुधर्मत्वे च नित्यत्वस्य तदव्यतिरेकतः–वस्त्वव्यतिरेकतः कारणात् कथमनात्मकत्वं–निःस्वभावत्वं च वस्तुनः ?। कथं च न स्यादित्याह–वस्तुन एवात्मकत्वात् इति ॥

---

१ 'त्वसिद्धेः इति ग-पाठः ।

(मूलम्)

**द्वितीयक्षणे यतस्तदेव न भवति, अतस्तदनात्मकमनित्यमिति चोच्यते इति चेत्, यदेव भवति तदेव न भवतीत्येकत्र भवनाभवनयोर्विरोधः। यदा भवति न तदा न भवति, यदा च न भवति न तदा भवतीति विरोधाभाव इति चेत् एकाधिकरणत्वनिबन्धनोऽयम्। न च तदेवमपि नेति निभाल्यतामेतत् ॥**

**अभवनस्याभावाद् भवनमात्रस्यैव वस्तुत्वादुक्तदोषाभाव इति चेत्, तदभावेन सदाभवनापत्तिर्नाम दोषान्तरमिति यत्किञ्चिदेतत्। तस्यैव क्षणभवनस्वभावत्वात् तदतिरिक्ताभवनाभावान्न दोषान्तरमिति चेत्, एवमपि क्षणादूर्ध्वं तदेव न भवतीति उक्तदोषानतिवृत्तिः ॥**

(स्वो० व्या०)

पराभिप्रायमाह–**द्वितीयक्षणे**–वस्त्वात्मलाभानन्तरभाविनि **यतस्तदेव न भवति** वस्त्वेकान्तेन **अतस्तत्**–वस्तु **अनात्मकमनित्यमिति** [1]**चोच्यते**। **इति चेत्**, एतदाशङ्क्याह–**यदेव भवति** वस्तु **तदेव न भवतीति**–**एवमेकत्र भवनाभवनयोर्विरोधः**। **यदे**त्यादि। यदा **भवति न तदा न भवति**, आत्मलाभोत्तरकालमभवनात्। **यदा च न भवति न तदा भवति**, आत्मलाभकाल एव भवनात्। **इति**–एवं **विरोधाभावः**। **इति चेत्**, एतदाशङ्क्याह–**एकाधिकरणत्वनिबन्धनोऽयं**–विरोधः। **न च तदे**काधिकरणत्व**मेवमपि**–कालभेदेऽपि सति **नेति**। किं तर्हि? अस्त्येव। **निभाल्यतामेतत्** सूक्ष्मबुद्धिचक्षुषा ॥

**अभवनस्ये**त्यादि। अभवनस्य **अभावात्** कारणात् **भवनमात्रस्यैव वस्तुत्वात् उक्तदोषाभाव**स्तत्त्वत एकाधिकरणत्वाभावात्। **इति चेत्**, एतदाशङ्क्याह–**तदभावेन**–अभवनाभावेन। किमित्याह–**सदाभवनापत्तिर्नाम** अधिकृतभवनस्य **दोषान्तरम्**। **इति**–एवं **यत्किञ्चिदेतत्**–अनन्तरोदितम्। **तस्यैवे**त्यादि। तस्यैव–क्षणभवनस्य **क्षणभवनस्वभावत्वात्** कारणात् [2]**तदतिरिक्ताभवनाभावतः**–भवनातिरिक्ताभवनाभावात् **न दोषान्तरम्**–अनन्तरोदितम्। **इति चेत्**, एतदाशङ्क्याह–**एवमपि क्षणादूर्ध्व**मात्मलाभक्षणात् **तदेव न भवति**–यदेव भवति तदेव न भवति **इत्युक्तदोषानतिवृत्तिः**, तदेकाधिकरणतया विरोध एवेत्यर्थः ॥

१ 'वोच्यते' इति ङ–पाठ । २ 'तदन्यति०' इति ङ–पाठ. ।

( मूलम् )

स्यादेतदेककाले खलु भवनाभवनयोर्विरोधः। क्षणिके तु भवने क्षणादूर्ध्वमवश्यमेव तन्न भवति, अन्यथा क्षणिकत्वविरोधादित्युक्तदोषाभावः। यत्किञ्चिदेतत्, अधिकदोषापत्तेः। एवं हि न यदैव भवति, तदैव न भवति, अपि तूर्ध्वम्; अतः कादाचित्कं तदभवनमिति कादाचित्कत्वत एव तदुत्पत्तेः अत एव नाशयोगाद् भावोन्मज्जनप्रसङ्ग इत्यधिकदोषापत्तिः। निर्लोठितं चैतदधः। अतः सर्वथा अनात्मकत्वे निःस्वभावत्वेनानित्यत्वासिद्धिः[1]। अतो वस्त्वेव तत्स्वभावत्वात् तथा तथा भवत् पूर्वपूर्वपर्यायनिवृत्तिस्वभावं कथञ्चिदनित्यं तथाप्रतीतेरिति। एवं यदि सर्वथाऽशुचि दुःखं च कथं वस्त्वक्षये[2] तत्क्षयः?। केन चायमिष्ट[3] इति चेत्, कथं तद्विकलस्य भगवतो

(स्वो० व्या०)

स्यादेतत्–अथैवं मन्यसे–एककाले खलु इत्येककाल एव भवनाभवनयोर्विरोधः। क्षणिके तु भवने सति क्षणादूर्ध्वमवश्यमेव तत्–भवनं न भवति। अन्यथा–एवमनभ्युपगमे किमित्याह–क्षणिकत्वविरोधादिति–एवमुक्तदोषाभाव इति। एवं पूर्वपक्षमाशङ्क्याह–यत्किञ्चिदेतत्–अनन्तरोक्तम्। कुत इत्याह–अधिकदोषापत्तेः। एतामेवाह एवं हीत्यादिना। एवं यस्मात् यदैव न भवति तदैव (न) भवति, अपि तूर्ध्वम्–अन्यदा; अतः कादाचित्कं तदभवनं–अधिकृतभवनाभवनम्। इति–एवं कादाचित्कत्वत एव कारणात् तदुत्पत्तेः–अभवनोत्पत्तेः। अत एव–उत्पत्तेरेव नाशयोगात् कारणात् अभवनस्य किमित्याह–भावोन्मज्जनप्रसङ्गः[4]–अधिकृतभवनोन्मज्जनप्रसङ्गः तदभवननाशान्यथाऽनुपपत्तेः। इति–एवमधिकदोषापत्तिः। निर्लोठितं चैतदधः। अतः सर्वथाऽनात्मकत्वे वस्तुनो निःस्वभावत्वेन हेतुना अनित्यत्वासिद्धिरिति स्थितम्। अतो वस्त्वेव तत्स्वभावत्वात् कारणात् तथा तथा–तेन तेन पर्यायरूपेण भवत् पूर्वपूर्वपर्यायनिवृत्तिस्वभावं सत् कथञ्चिदनित्यं–तदन्यथाभवनेन तथाप्रतीतेरिति। एवमित्यादि। एवं यदि सर्वथा अशुचि दुःखं च वस्त्वेवं कथं वस्त्वक्षये सति तत्क्षयः–अशुचिदुःखक्षयः?। केन चायं–वस्त्वक्षये तत्क्षय इष्टः?। इति चेत्, एतदाशङ्क्याह–कथं तद्-

१ द्रष्टव्यं २१०तमं पृष्ठम्। २ 'वस्तुक्षये' इति ग–पाठः। ३ 'वाऽयमिष्ट' इति ग–पाठः। ४ 'भवनोन्मज्जन०' इति क–पाठः।

( मूलम् )

वस्तुत्वम् ? । असंस्कृतत्वादिति चेत्, एतदेव कथमिति चिन्त्यम् । सम्भूय प्रत्ययाभूतेरिति चेत्, सामग्रीजनिकेति त्यक्तोऽभ्युपगमः । पाक्षिक एवायमिति चेत्, किमत्र ज्ञापकमिति वाच्यम् । "असंस्कृतप्रभाविता ह्यार्यपुद्गलाः" इति वचनम् । कः खलु अस्यार्थः ? । किमुपादानमात्रजन्मानः किं वा[1] असन्त एवेति ? । यद्याद्यः पक्षो बोधमात्राद् बोधमात्रजन्मेति न तेन कस्यचिदवगमः । ततश्च परित्यक्तमस्य सर्वज्ञत्वमसमञ्जसं चैतत् । न च तदपरग्राह्यमित्यज्ञात-

( स्वो० व्या० )

विकलस्य-अशुच्यादिविकलस्य भगवतः-बुद्धस्य वस्तुत्वम् ? । असंस्कृतत्वात् । इति चेद् भगवत एतदेव-असंस्कृतत्वं कथमिति चिन्त्यम् । सम्भूय प्रत्ययाभूतेः । इति चेत्, एतदाशङ्क्याह-सामग्रीजनिकेति त्यक्तोऽभ्युपगमः । पाक्षिक एवायम् । इति चेत्, एतदाशङ्क्याह-किमत्र ज्ञापकमिति वाच्यम् । "असंस्कृतप्रभाविता हि आर्यपुद्गलाः" इति वचनं ज्ञापकम् । एतदाशङ्क्याह-कः खल्वस्यार्थो वचनस्य ? । किमुपादानमात्रजन्मान आर्यपुद्गलाः किं वा असन्त एवेति ? । उभयथाऽपि दोषमाह-यद्याद्यः पक्षो बोधमात्रादुपादानात् बोधमात्रजन्म इति-एवं न तेन कस्यचिदवगमो बोधमात्रेण अनालम्बनेन । ततश्च परित्यक्तमस्य-आर्यपुद्गलस्य सर्वज्ञत्वम् ।

( विवरणम् )

(११-१२) असंस्कृतत्वादिति । समेत्य हेतुभिरकृतत्वात् । स्वाभाविको ह्यसौ भगवतो गुणो यदुत शुचिरूपत्वमदुःखरूपता च ॥

(१२-१३) सम्भूय प्रत्ययाभूतेरिति । सम्भूय-मिलित्वा ये प्रत्ययाः-कारणानि कार्यं जनयन्ति तेभ्यः सकाशादभूतेः-अनुत्पादात् ॥

(१४) पाक्षिक एवायमिति । कचित् सामग्रीजनिका कचिन्नेत्यर्थः ॥

(१५) असंस्कृतप्रभाविता हीति । असस्कृताः सामग्र्यः अनिष्पादिताः सन्तः प्रभवम्-उत्पादं प्राप्ता हि-स्फुटम् ॥

(१५) आर्यपुद्गला इति । बुद्धात्मानः ॥

(१९) अनालम्बनेनेति । न विद्यते आलम्बनं यस्य तदनालम्बनं तेन । यदि हि विषयवस्त्वालम्ब्योत्पन्नं स्याद् बुद्धज्ञानं तदा तत् किञ्चिज्जानीयात् । यदा तु स्वोपादानक्षणमात्रात् तदुत्पद्यते तदा न किञ्चित् तेनावगम्यत इति ॥

१ 'वा सन्त एवेति' इति ग-पाठ ।

(मूलम्)

**प्रलापोक्तिमात्रं तर्ह्यभ्युपगमः। न चेदं परममुनिवचने बुद्धिमत आपादयितुं न्याय्यमिति परिभाव्यतामेतत्॥**

**अथापरः पक्षः–कथमसतां वस्तुत्वम्? कथं वा न पुष्करपुष्करादीनाम्? कथं वा सत् सर्वथाऽसद्[1] भवति कथं वा नासदपि सत्? [2]ततश्च नानादित्वमपि सन्तानानां प्राप्तमित्ययं सुतरामसमञ्जस-**

(स्वो० व्या०)

सर्वं न जानात्यकिञ्चिज्ज्ञोऽयमिति प्राप्तम्। **असमञ्जसं चैतत्।** उपचयमाह **न चेत्यादिना।** न च **तत्**–बोधमात्र**मपरग्राह्यम्। इति**–एव**मज्ञातप्रलापोक्तिमात्रं तर्ह्यभ्युपगमः। न चेद**मित्यादि। न चेदम्–अज्ञातप्रलापोक्तिमात्रत्वं **परममुनिवचने**–बुद्धवचने **बुद्धिमतः**–पुंस **आपादयितुं न्याय्यमिति**–एवं **परिभाव्यतामेतत्॥**

द्वितीयपक्षमधिकृत्याह–**अथापरः पक्षः**–असन्त एवेत्ययम्। एतदाशङ्क्याह–**कथमसताम्**–आर्यपुद्गलानां **वस्तुत्वम्? कथं वा न पुष्करपुष्करादीनां**–नाकाशपद्मादीनाम्?। **कथं वा सत्**–भावरूपं **सर्वथाऽसद् भवति**–अभावरूपतामापद्यते? **कथं वा नासदपि** सर्वथा **सद्** भवति?। **ततश्चे**त्यादि। ततश्च–एवं च [3]सति **न अनादित्वमपि सन्तानानां प्राप्तम**सद्भवनेन कादाचित्कतया

(विवरणम्)

(१०) **अपरग्राह्यमिति।** अपरेण–बुद्धव्यतिरिक्तेन गृह्यते यत् तदपरग्राह्यम्। अयमभिप्रायः–यदेतद् बुद्धस्य ज्ञानं तद् यदि स्वसंविदितबोधमात्रमेवाभ्युपगम्यते तदा अन्येन केनापि न तद् गृह्यते इत्यायातम्। अनालम्बनस्याग्राह्यत्वेन भवद्भिरभ्युपगमात्॥

(११) **अभ्युपगम** इति। असंस्कृतप्रभाविता ह्यार्यपुद्गला इत्येवंरूपः॥

(१७) **कथं वा नासदपि सर्वथा सद् भवतीति।** यदि ह्यार्यपुद्गललक्षणं वस्तु सदप्यसद् भवति तदा असन्तोऽपि खरविषाणादयः किमिति सन्तो न भवन्तीत्यर्थः?॥

(१८) **अनादित्वमपीति।** यदा ह्यसदपि सद् भवतीत्यभ्युपगम्यते तदा कश्चित् सन्तानपूर्वमात्रसन्नेव [3]सन्नित्यभ्युपगमः प्राप्नोतीत्यर्थः॥

१ 'सर्वथा सद् भवति' इति ग–पाठः। २ ततश्च न नादित्व०' इति क–पाठः। ३ 'सति अनशनादित्व०' इति ङ–पाठः।

(मूलम्)

कारी, न [1]चासतो ग्रहणमपीत्यप्रमाणकमेतत्। नाप्रमाणकम्, सत्संवेदनस्यैवात्र प्रमाणतोपपत्तेः। तथाहि–तदेव तथास्वभावं यदियता कालेन परम्परयाऽप्यजनकमिति स्वमात्रपरिच्छेदकत्वेऽप्यनेन तद्ग्रहणमिति। न, वचनमात्रत्वात्, तावत्कालाजनकत्वेऽस्य निरुपाख्यत्वप्रसङ्गात्, सोपाख्यत्वे च तत्तुच्छत्वविरोधात्, सर्वथैक-

(स्वो० व्या०)

[2]इत्ययम्–अभ्युपगमः सुतरामसमञ्जसकारी। न चासतः–एकान्ततुच्छस्य ग्रहणमपि इन्द्रिययोगाभावेनेत्यप्रमाणकमेतदिति। अधिकृतासत्त्वं आह–नाप्रमाणकम्। कथमित्याह–सत्संवेदनस्यैव–अधिकृतबोधमात्रसंवेदनस्यैव अत्र–असत्त्वे तदसत्त्व एव, प्रमाणत्वोपपत्तेः। एतदेव भावयति तथाहीत्यादिना। तथाहीति पूर्ववत्। तदेव–बोधमात्रं तथास्वभावं–एवम्प्रकारस्वभावं यदियता कालेन–कल्पादिना परम्परयाऽपि–अनेकक्षणरूपया अनन्तरूपतयाऽप्यजनकम्। इति–एवं स्वमात्रपरिच्छेदकत्वेऽप्यधिकृतबोधमात्रस्य अनेन–विशिष्टेन बोधमात्रेण तद्ग्रहणम्–अधिकृतासद्ग्रहणमिति। एतदाशङ्क्याह–न, वचनमात्रत्वात्, निरर्थकत्वादित्यर्थः। एतदेवाह तावत्कालेत्यादिना। तावत्कालाजननात्मकत्वेऽस्य–अधिकृतबोधमात्रस्य। किमित्याह–निरुपाख्यत्व-

(विवरणम्)

(९-१०) न चासतः–एकान्ततुच्छस्य ग्रहणमपीति। यदि ह्यार्यपुद्गला एकान्तत एव तुच्छाः खरविषाणप्रख्याः समभ्युपगम्यन्ते तदा अवस्तुत्वादेव न ते केनचित् प्रमाणेन गृह्यन्त इत्यर्थः॥

(१०) अधिकृतासत्त्वमिति। आर्यपुद्गलासत्त्वम्॥

(११) अधिकृतबोधमात्रसंवेदनस्यैवेति। अधिकृतं च तद् बोधमात्रं च, बुद्धज्ञानमित्यर्थः, तस्य संवेदनम्–आत्मनैवावबोधः, स्वसंवेदनमित्यर्थः॥

(१२) तदसत्त्व एवेति। बुद्धज्ञानासत्त्वे ग्राह्ये। अयमभिप्रायः–बुद्धो भगव(वा)नात्मीयेन ज्ञानेनात्मस्वरूपमेवरूपमेव बुध्यते यदुत कल्पात्ता(?)दौ काले मदीयज्ञानलक्षणसन्तानः क्षयं यास्यतीति [3]बुद्धा(?द्धे) ज्ञानमेव बुद्धज्ञानासत्त्वे प्रमाणमिति॥

(१४) अनन्तरूपतयाऽपीति। न विद्यतेऽन्तः–पर्यन्तो यस्य तदनन्तम्, अनन्तं रूपं यस्याः सा अनन्तरूपा तयाऽपीति। एतच्चानेकक्षणरूपे तस्यैव पदस्य सुखावबोधाय पर्यायख्यापनं कृतमिति॥

१ 'चासन्तो ग्रहण०' इति क-पाठ। २ 'इत्यभ्युप०' इति ङ-पाठ। ३ 'बुद्धा ज्ञान०' इति च-पाठ।

## ( मूलम् )

**स्वभावत्वेनास्यैव तत्त्वात्, अन्यथा तत्तद्भावासिद्धेः, स्वनिवृत्त्यपरजननस्वभावभेदाभेदयोस्तद्भेदाभेदाभ्यां विरोधान्वयापत्त्यादिदोषतोऽस्यैवायोगाच्च ॥**

## ( स्वो० व्या० )

**प्रसङ्गात्** अजनकस्य तुच्छत्वात् तदात्मकत्वाच्चास्येति भावः । **सोपाख्यत्वे च** अभ्युपगम्यमाने वस्तुत्व इत्यर्थः । किमित्याह–**तत्तुच्छत्वविरोधात्** तस्यैव–तावत्कालाजननस्य तुच्छत्वविरोधात् । विरोधश्च **सर्वथैकस्वभावत्वेन** हेतुनाऽ**स्यैव**–अधिकृतबोधमात्रस्य **तत्त्वात्**–तावत्कालाजननत्वात्[1] । इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा**–एवमनभ्युपगमे **तत्तद्भावासिद्धेः** तस्य–अधिकृतबोधमात्रस्य तद्भावासिद्धेः–तावत्कालाजननभावासिद्धेः[2] । दोषान्तरमाह **स्वनिवृत्ती**त्यादिना । स्वनिवृत्तिश्चापरजननं च स्वनिवृत्त्यपरजनने, ते एव स्वभावौ तयोः भेदाभेदौ **स्वनिवृत्त्यपरजननस्वभावभेदाभेदौ** तयोः सतोः **तद्भेदाभेदाभ्यां**–अधिकृतवस्तुभेदाभेदाभ्यां यथासङ्ख्यं **विरोधान्वयापत्त्यादिदोषतः अस्यैव**–अधिकृतबोधमात्रस्य **अयोगाच्च** कारणाद् वचनमात्रत्वमिति क्रिया । भावार्थस्तु यदि तौ स्वनिवृत्त्यपरजननस्वभावौ मिथो भिन्नौ तस्माच्च वस्तुनोऽभिन्नौ एवं विरोधः, एकस्य द्व्याव्यतिरेकेण, अथाभिन्नौ वस्तुनोऽप्यभिन्नावित्यन्वयः, अपरजननस्यैव स्वनिवृत्तित्वादिति ॥

## ( विवरणम् )

(७) **अजनकस्य तुच्छत्वात् तदात्मकत्वाच्चास्येति भाव** इति । यदि हि बुद्धज्ञानं परम्परयाऽप्यजनकमित्यभ्युपगम्यते तदा वस्त्वेव तन्न भवति, अजनकत्वादाकाशकुसुमवत् ॥

(९) **एकस्वभावत्वेन हेतुने**ति । आनन्तर्येण जनकं परम्परया त्वजनकमिदं बुद्धज्ञानमित्येवंरूपं स्वभावद्वयं नास्त्येव, विज्ञानस्यैकस्वभावत्वादित्यर्थः । ततो यदि तज्जनकस्वभावं तदा सर्वदैव जनकमस्तु । किमनया जडत्वसूचिकया कल्पनया यदुतानन्तर्येण जनकं परम्परया त्वजनकत्वमिति ? । अथाजनकस्वभावं तर्हि सर्वदैवावस्तु, तत् कथं कदाचिदपि जनकं स्यादिति ? ॥

(१३) **स्वनिवृत्तिश्चापरजननं** चेत्यादेरयमभिप्रायः–एतदधिकृतबोधमात्रं बुद्धज्ञानसम्बन्धि क्षणिकत्वादात्मानं [3]द्वितीयसमये निवर्त्तयति अपरं च क्षणं जनयतीति

१ 'जनकत्वात्' इति क–पाठः । २ 'जननस्वभाव०' इति ङ–पाठः । ३ 'द्वितीयस्य समये' इति क–पाठः ।

(मूलम्)

**स्यादेतत्–स एव स्वनिवृत्तिः, तस्यैव तदवधिकत्वात्। अपरजननं च जनयतीति जननात्। नैतदेवं भावस्यैव तदभावत्वविरोधात्, स एव स्वनिवृत्तिरित्यभ्युपगमे चैतदापत्तेः तदवधिकत्वायोगात् तदाभावे प्रागूर्ध्वं च तदभावे तदुपपत्तेः निवृत्तेः प्रसज्यप्रतिषेधत्वाभ्युप-**

(स्वो० व्या०)

**स्यादेतदि**त्यादि। अथैवं मन्यसे–**स एव**–अधिकृतो बोधः **स्वनिवृत्तिः**। कुत इत्याह–**तस्यैव**–अधिकृतबोधस्य **तदवधिकत्वात्**–निवृत्तेस्तदाश्रयत्वेन। **अपरजननं च** स एव, **जनयतीति जननादि**ति कृत्वा। एतदाशङ्क्याह–**नैतदेवमि**त्यादि। नैतदेवं यदुक्तं परेण। कुत इत्याह–**भावस्यैव**–अधिकृतबोधाख्यस्य **तदभावत्वविरोधात्**। यदि नामैवं ततः किमित्याह–**स एव स्वनिवृत्तिरित्यभ्युपगमे च** सति[1] **एतदापत्तेः**–अधिकृतविरोधापत्तेः **तदवधिकत्वायोगात्**–निवृत्त्यवधिकत्वायोगात्। अयोगश्च **तदाभावे**–स्वभावकाले **प्रागूर्ध्वं च तद-**

(विवरणम्)

स्वभावद्वयमस्य स्वनिवृत्त्यपरजननलक्षणं वर्तते। एतच्च स्वभावद्वयं मिथो भिन्नमभिन्नं वा। भिन्नमपि सद्बोधमात्राद् भिन्नमभिन्न वा। अभिन्नमपि सद्बोधमात्रादभिन्न भिन्नं वा। इति परमार्थतो विकल्पचतुष्टयम्। तत्र यदि मिथो भिन्नौ सन्तौ बोधादपि भिन्नावेतौ स्वभावावभ्युपगम्येते तदा तस्य बोधमात्रस्यैतौ स्वभावाविति सञ्ज्ञायोगः[2] ॥ १ ॥

अथ मिथो भिन्नावपि बोधमात्रादभिन्नावभ्युपगम्येते तर्हि स्फुट एव विरोधः। यौ हि मिथो भिन्नौ तौ कथमेकत्र वर्त्तेते इति? ॥ २ ॥

अथ परस्परमभिन्नावेतौ स्वभावौ बोधमात्रादपि अभिन्नाविति तृतीयः पक्षस्तर्हि अन्वयापत्तिः, यैव स्वनिवृत्तिस्तदेवापरजननमिति कृत्वा ॥ ३ ॥

अथ परस्परमभिन्नौ वस्तुनश्च भिन्नाविति पक्षस्तर्हि तस्येति सञ्ज्ञायोगो[3] विरोधश्च स्फुट एव। यौ परस्परभिन्नौ तौ कथ वस्तुनोऽभिन्नौ भवत इति? ॥ ४ ॥

वृत्तिकृता च विकल्पयुगलकमेव भाषितम्। इतरत् तु विकल्पयुगलकमुपलक्षणद्वारेणैव गतमिति कृत्वेति सम्भाव्यते ॥

(१०) **जनयतीति जननादिति कृत्वेति**। जनयतीति जनक इत्युत्पाद(क) इत्यर्थः॥

(११) **तदभावत्वविरोधादि**ति। तस्य–भावस्याभावस्तदभावः, तस्य भावः–तत्त्वं तदभावत्वमित्यर्थः, तस्य विरोधात्। भाव एवाभावो न भवतीत्यर्थः ॥

१ 'सति तदापत्ते' इति ङ–पाठ। २ 'सञ्ज्ञीयोग' इति ख–पाठ, क–पाठस्तु 'सयोगा' इति। ३ 'सयोगा' इति क–पाठ।

(मूलम्)

गमाच्च । "न हि कस्यचिद् भावेन भावो न भूतो नाम तदा न भूतो यदि स्वयं न भवेत् न भवतीति च प्रसज्यप्रतिषेध [1]एष न पर्युदासः" इति वचनादिति निर्लोठितमेतदात्मसिद्धावित्यलं [2]प्रसङ्गेन ॥

यच्चोक्तम्[3]-'स्यादेतत् किमनेन (इत्थम्) असम्भविना मुग्धविस्मय[4]करेण भावनावादेन? कृत्स्नकर्मक्षयान्मोक्षः, स च कायसन्तापलक्षणेन तपसा प्रागुपात्ताशुभकर्मनिर्जरणतोऽनागतस्य [5]चाकरणेनेत्याशङ्क्य तदप्यसत् कायसन्तापस्य कर्मफलत्वात्' इत्यादि, तदपि भगवदर्हन्मताश्रवणसूचकमेव केवलं नेष्टार्थसाधकमपि, तपःस्वरूपापरिज्ञानात् । न खलु कायसन्तापरूपं तप इत्यार्हतः कृतान्तः । किं तर्हि? ज्ञानसंवेगशमगर्भं क्षायोपशमिकभाववृत्ति क्लिष्टकर्मक्षयहेतु

(स्वो० व्या०)

भावे-अधिकृतभावे तदुपप[6]त्तेः-निवृत्त्युपपत्तेर्न तदाश्रयत्वम् । अभ्युच्चयमाह-निवृत्तेः प्रसज्यप्रतिषेधत्वाभ्युपगमाच्च तदधिकत्वायोगः । अभ्युपगमं दर्शयति न हीत्यादिना । न हि कस्यचिद् भावेन उत्तरस्य भावो न भूतो नाम प्राक्तनः तदा न भूतोऽसौ भावः । यदि स्वयं न भवति-आत्मनैव न भवति-न भवति इति च प्रसज्यप्रतिषेध एष तुच्छोऽभवनमात्रं न पर्युदासो भवनान्तररूपम् इति वचनाद् वार्त्तिक इति निर्लोठितमेतत्-अधिकृतं वस्तु आत्मसिद्धौ इत्यलं प्रसङ्गेन ॥

यच्चोक्तं मूलपूर्वपक्षे [7]एवं-स्यादेतत् किमनेनेत्यादि यावत् कायसन्तापस्य कर्मफलत्वादित्यादि, तदपि किमित्याह-भगवदर्हन्मताश्रवणसूचकमेव केवलं नेष्टार्थसाधकमपि । कथं न साधकमित्याह-तपःस्वरूपापरिज्ञानात् । कथमपरिज्ञानमित्याह-न खलु-नैव कायसन्तापरूपं तप इति आर्हतः कृतान्तः-आर्हतः सिद्धान्तः । किं तर्हि? ज्ञानसंवेगशमगर्भम्, ज्ञानाद्यभावे तदभावात् । एतदेव विशेष्यते क्षायोपशमिकभाववृत्ति औदयिक-

(विवरणम्)

(१४) न तदाश्रयत्वमिति । न-नैव तदाश्रयत्वं भावनिवृत्तेः । यस्मिन् समये भावः तस्मिन्नेव न भावनिवृत्तिरित्यर्थः ॥

१ 'एव न' इति ग-पाठः । २ 'प्रपञ्चेन' इति क-पाठः । ३ प्रथमे खण्डे २८तमे पृष्ठे २९तमे च । ४ 'कारणभावना' इति क-पाठः । ५ 'वाऽकरणे०' इति क-पाठः । ६ 'पत्तेः एतदाश्रय०' इति ङ-पाठः । ७ प्रथमे खण्डे २८तमे पृष्ठे ।

( मूलम् )

**विशिष्टावबोधकारणं परमपदासन्नताकर्तृ दैन्यौत्सुक्यवर्जितं पारमार्थिकसुखवृत्ति महासत्त्वसेवितं सदनुष्ठानहेतु शुभात्मपरिणामरूपं तप इति । न चैवम्भूतपरिणामरूपमेतत् कायसन्तापलक्षणमिति युज्यते वक्तुम्, अत एव नेदं कर्मफलमेव, तत्क्षयोपशमतः प्रवृत्तेः तत्त्वत आत्मधर्मत्वात् । न चैवंविधपरिणामवतः सदनशनाद्यनुष्ठानेन प्रायः कायसन्तापोऽपि भवति । न चासौ सन्नपि शुभाबहिश्चरचेतसः चित्तसन्तापाय । न च तत्सन्तापरहितः कायखेदोऽपि**

( स्वो० व्या० )

भावनिषेधेनेति । एतदेव विशेष्यते **क्लिष्टकर्मक्षयहेतु,** अस्मिन्नेव विषये तपसो विधानात् । एतदेव विशेष्यते **विशिष्टावबोधकारणं,** तपःपूर्वकसद्ध्यानविधानात् । एतदेव विशेष्यते **परमपदासन्नताकर्तृ,** कर्मनिर्जरणतः । एतदेव विशेष्यते **दैन्यौत्सुक्यवर्जितं** गाम्भीर्यधैर्याश्रयसम्पन्नत्वेन । एतदेव विशेष्यते **पारमार्थिकसुखवृत्ति,** शमसारतया । एतदेव विशेष्यते **महासत्त्वसेवितमि**हलोकाद्यपेक्षाभावेन । एतदेव विशेष्यते **सदनुष्ठानहेतु**[1] प्रवृत्तिमत् ज्ञानगर्भतया एवम्भूतं[2] **शुभात्मपरिणामरूपं तप** इत्याहतः कृतान्तः । **न चैवम्भूतपरिणामरूपमेतत्**–तपः **कायसन्तापलक्षणमिति**–एवं **युज्यते वक्तुं** एवम्भूतपरिणामरूपस्य विशुद्धध्यानात्मकत्वेन वेद्यसंवेद्यपदरूपतया सुखरूपत्वादिति योऽर्थः **अत एव** हेतोः **नेदं**–तपः **कर्मफलमेव**–एकान्तेन । कुत इत्याह–**तत्क्षयोपशमतः**[3]–कर्मक्षयोपशमतः **प्रवृत्तेः** कारणात् **तत्त्वतः**–परमार्थेन **आत्मधर्मत्वात्** तपसः । **न चे**त्यादि । न **चैवंविधपरिणामवतः**–पुंसः **सदनशनाद्यनुष्ठानेन** अधिकारिणि आगमविहितं सत् तेन **प्रायः कायसन्तापोऽपि भवति । न चासौ**–कायसन्तापः **सन्नपि शुभाबहिश्चरचेतस**स्तपस्विनश्चि**त्तसन्तापाय,** शुभाबहिश्चरचेतस्त्वादेव । **न चे**त्यादि । न च **तत्सन्तापरहितः**–चित्त-

( विवरणम् )

(१९) **वेद्यसंवेद्यपदरूपतयेति** । वेद्यं तत्त्व संवेद्यते–सम्यक् परिच्छिद्यते यत्र तद् वेद्यसंवेद्यम्, तच्च तत् पदं चावस्थानलक्षण वेद्यसंवेद्यपदम्, तद्रूपं स्वभावो यस्य तत् तथा तस्य भावस्तत्ता तया ॥

१ 'हेतु प्रवृत्ति०' इति ङ-पाठ । २ 'एव शुभा०' इति ङ-पाठ । ३ 'शमत क्षयोपशमे कर्म०' इति क-पाठ ।

( मूलम् )

**परमार्थतः खेद एव । [1]न च तत्सन्तापकृदपि तदिष्टं परमज्ञानदर्शनधरैस्तीर्थकृद्भिः तद्वचनप्रामाण्यात् मनोमङ्कुलकर्तृतपःप्रतिषेधात चित्तेन्द्रियवश्यमात्रविधानात्, अन्यथाऽऽर्त्तध्यानापत्तेः । न च अल्पकायखेदेऽपि महाव्याधिपीडितस्येव तद्दुःखज्ञातुस्ततो निर्विण्णस्य सुवैद्योपदेशात्[2] सम्यक् तन्निवृत्त्युद्यतस्य लङ्घनौषधपानाद्यैः दुःखनिवृत्तिदर्शिनः तथाविधारोग्यभाजः समुपजातरसान्तरस्य**

( स्वो० व्या० )

सन्तापरहितः **कायखेदोऽपि परमार्थतः खेद एव**, अभिप्रेतार्थसिद्धौ कायखेदस्याखेदतयाऽनुभवात् । **न चे**त्यादि । न च **तत्सन्तापकृदपि**—न च कायसन्तापकृदपि **तत्**—तप **इष्टम्**—अभ्युपगतम् । कैरित्याह—**परमज्ञानदर्शनधरैः तीर्थकृद्भिः** । कथं नेष्टमित्याह—**तद्वचनप्रामाण्यात्**—तीर्थकरवचनप्रामाण्यात् । प्रामाण्यं च **मनो[3]मङ्कुलकर्तृतपःप्रतिषेधात्** । तथा चार्षम्—

"सो हु तवो कायव्वो जेण मणो मङ्कुलं न चिन्तेइ ।
जेण न इन्दियहाणी जेण य जोगा न हायन्ति[4] ॥"[5]

तथा **चित्तेन्द्रियवश्यमात्रविधानात्** । विधानं च—

"कायो न केवलमयं परितापनीयो
मिष्टै रसैर्बहुविधैर्न च लालनीयः ।
चित्तेन्द्रियाणि न चरन्ति यथोत्पथेषु
वश्यानि येन च तदाचरितं जिनानाम् ॥"[6]

इत्थं चैतदङ्गीकर्त्तव्यमित्याह—**अन्यथे**त्यादि । अन्यथा—एवमनभ्युपगमे **आर्त्तध्यानापत्तेः**, प्रतिषिद्धं चैतत् भगवतेति भावनीयम् । **न चे**त्यादि । न च **अल्पकायखेदेऽपि** सति **महाव्याधिपीडितस्ये**वेति निदर्शनं **तद्दुःखज्ञातु**रसम्मूढस्य **ततः**—दुःखा**न्निर्विण्णस्य सुवैद्योपदेशात्**—सुवैद्योपदेशेन **तन्निवृत्त्युद्यतस्य**—दुःखनिवृत्त्युद्यतस्य **लङ्घनौषधपानाद्यैः** तथाविधकायखेदेऽपि **दुःखनिवृत्ति[7]दर्शिनः** सतः **तथाविधारोग्यभाजो**ऽन्तःसुखावेशेन **समुपजातरसान्तरस्य** आरोग्यसम्भावनया **चित्तखेदो** न चाल्पकायखेदेऽपीति वर्तते एष दृष्टान्तः ।

१ 'न च सन्ताप०' इति ग-पाठः । २ 'देशात् तन्निवृ०' इति ग-पाठः । ३ मङ्कुलम्—असुन्दरम् । ४ छाया—

तत् खलु तपः कर्तव्यं येन मनो मङ्कुलं न चिन्तयति ।
येन नेन्द्रियहानिर्येन च योगा न हायन्ते ॥

५ आर्या । ६ वसन्ततिलका । ७ 'दर्शिनसन्तः तथा०' इति क-पाठः ।

( मूलम् )

**चित्तखेदः। एवं भावतपस्विनः संसारमहाव्याधिपीडितस्य मिथ्याविकल्पदुःखज्ञातुस्तत्त्वतस्ततो निर्विण्णस्य भाववैद्यतीर्थकरोपदेशात् सम्यक् तन्निवृत्त्युद्युक्तस्य [1]तथाविधविहितानुष्ठानात् मिथ्याविकल्पदुःखनिवृत्तिदर्शिनः तत्त्वसंवेदनभावारोग्यभाजः [2]समुद्भूतशुभरसान्तरस्य न भवति चित्तसन्तापः, अपि तु तथाविधव्याबाधानिवृत्तितस्तथाऽनुभवसिद्धा भवति परमनिवृत्तिरिति। दृष्टा चेष्टार्थसंसिद्धावन्यत्रापि रत्नवणिक्प्रभृतीनां तथाऽनशनादिकायपीडा मनोनिवृत्तिहेतुरिति न कायसन्तापलक्षणं तपो जैनानामिति। भवति चानेन प्रागुपात्तकर्मनिर्जरणम्, अनुतापभावादाग्रहनिवृत्तेः, कुशलपरिणामयोगाद् भावनासिद्धेराज्ञाराधनात् सर्वतो निवृत्तेः सद्ध्यान-**

( स्वो॰ व्या॰ )

इदानीं दार्ष्टान्तिकयोजनामाह **एवमपीत्यादिना**। एव **भावतपस्विनः** साधोः **संसारमहाव्याधिपीडितस्य** जन्मादिविकारभावतः **मिथ्याविकल्पदुःखज्ञातु**र्नैतेभ्यो[3]ऽन्यत् तत्त्वतो दुःखमिति **तत्त्वतः**—परमार्थेन **ततः**—मिथ्याविकल्पदुःखान्निर्विण्णस्य **भाववैद्यतीर्थकरोपदेशात्**—तीर्थकरोपदेशेन **सम्यग्**—अविपरीतेन विधिना **तन्निर्वृत्त्युद्युक्तस्य**[4]—मिथ्याविकल्पदुःखनिवृत्तावुद्युक्तस्य **तथाविधविहितानुष्ठानात्**—चित्रविहितानुष्ठानात् **मिथ्याविकल्पदुःखनिवृत्तिदर्शिनो** मात्रया **तत्त्वसंवेदनभावारोग्यभाजः** सतः **समुद्भूतशुभरसान्तरस्य** प्रशान्तवाहितया **न भवति चित्तसन्तापो** न चाल्पकायखेदेऽप्येवमिति वर्तते। उपचयमाह—**अपि तु तथाविधव्याबाधाविनिवृत्तितः**—क्लिष्टव्याबाधानिवृत्त्या **तथा**—असङ्गशक्तितयाऽ**नुभवसिद्धा**। किमित्याह—**भवति परमनिवृत्तिरिति** [5]योग्यनुभवसिद्धमेतदिति। लौकिकं दृष्टान्तमाह **दृष्टा चेत्यादिना**। दृष्टा च लोके **इष्टार्थसिद्धौ** सत्यामन्य**त्रापि**—[6]अध्वगमनादौ **रत्नवणिक्प्रभृतीनां**—प्राणिनां **तथाऽनशनादिकायपीडा** आहाराद्यभावेन **मनोनिवृत्तेः हेतु**—लौंकिकमेत**दिति**—एवं **न कायसन्तापलक्षणं तपो जैनानामिति** स्थितम्। **भवति चानेन**—तपसा **प्रागुपात्तकर्मनिर्जरणम्**। कुत इत्याह—**अनुताप-भावात्**। भवति च तपस्विनः प्राग्दुश्चरितेऽनुतापः तथा **आग्रहनिवृत्ते**र्निरभिष्व[7]ङ्गाशयभावेन। एवं **कुशलपरिणामयोगात्** अत एव **भावनासिद्धेः** एव**माज्ञा-**

१ 'तथा विहिता॰' इति क-पाठ। २ 'समुद्भूतशमरसान्तरस्य' इति ग-पाठ। ३ 'ऽन्यतत्वतो' इति ङ-पाठ। ४ 'वृत्त्याद्युक्तस्य' इति ङ-पाठ। ५ 'योऽप्यनु॰' इति क-पाठ। ६ 'अवगमनादौ' इति क-पाठ। ७ 'ष्वङ्गशमभावेन' इति क-पाठ।

( मूलम् )

**योगान्निराकाङ्क्षत्वादनागतस्य चाकरणमिति, अतः "कृत्स्नकर्मक्षयान्मोक्षः" इति युक्तियुक्तमेव ॥**

**एतेन यत् परैश्चोद्यते 'भावनाहेयाः क्लेशाः किमत्र कायसन्तापेन[1] व्यधिकरणत्वात्' इतिः(त्यादि) तदपि परिहृतमेव, कायसन्तापस्य तत्त्वतस्तपस्त्वानभ्युपगमात् तस्योक्तवत् कुशलपरिणामरूपत्वात्, तद[न]ङ्गत्वेन तु ब्रह्मचर्यभिक्षाटनादिवत् तदभिधानादिति ॥**

**किञ्च भावनाऽपि नस्तपोभेद एव, ध्यानस्य तपोरूपत्वात्, तस्य**

( स्वो० व्या० )

**राधनात्** अत एव **सर्वतो निवृत्तेः** समतया एवं **सद्ध्यानयोगात्** ध्यन्तरयोगाख्या **निराकाङ्क्षत्वा**दिहलोकादौ, न केवलमित्थं प्रागुपात्तकर्मनिर्जरणं **अनागतस्य चाकरणमिति, अतः**–अस्मात् कारणात् **कृत्स्नकर्मक्षयाद्** भवोपग्राहिकर्माण्यधिकृत्य **मोक्ष इति युक्तियुक्तमेव**–न किञ्चिदत्र प्रमाणविरुद्धम् ॥

**एतेन**–अनन्तरोदितेन **यत् परैश्चोद्यते** बौद्धैः यदुत **भावनाहेयाः क्लेशाः**–रागादयः **किमत्र कायसन्तापेन व्यधिकरणत्वा**दित्यादि **तदपि परिहृतमेव**। कथमित्याह–**कायसन्तापस्य**–पराभिमतस्य **तत्त्वतः**–परमार्थेन **तपस्त्वानभ्युपगमात्**। **तस्ये**त्यादि तस्य–तपसः **उक्तवत्**–यथोक्तम्। तथा किमित्याह–**कुशलपरिणामरूपत्वात्, तदङ्गत्वेन**–कुशलपरिणामाङ्गत्वेन पुन**र्ब्रह्मचर्यभिक्षाटनादिवदिति** निदर्शनं **तदभिधानात्**–कायसन्तापाभिधानात् कायक्लेशवचनेन **इति** ॥

अभ्युच्चयमाह **किञ्चे**त्यादिना। किञ्च **भावनाऽपि नः**–अस्माकं **तपोभेद एव**। कथं द्वादशभेदमध्ये भाव इत्याह–**ध्यानस्य तपोरूपत्वात्**। यदि नामैवं

( विवरणम् )

(११-१२) **ध्यन्तरयोगाख्ये**ति। धियः–बुद्धेरन्तरं–विशेषो ध्यन्तरम्, विशिष्टबुद्धिरित्यर्थः। ततो ध्यन्तरेणोपलक्षितो यो योगः–सम्यग्मनोवाक्कायव्यापाररूपोऽसम्यग्मनोवाक्कायनिषेधरूपश्च तस्याप्तिः–प्राप्तिस्तया ॥

(१६) **व्यधिकरणत्वा**दिति। कायसन्तापलक्षणं हि तपः काय एव वर्त्तते, न तु रागादिमलव्याकुले विज्ञाने इति कथमन्यत्र मलप्रलयं प्रत्यलं भवेदिति ?। न तस्य कर्मण इत्थमनेन तपउपक्रमेण[2] प्रकारेण अफलतेति। यदि हि तपः सङ्क्लिष्टं कर्मादत्तफलमेवोपक्रम्यते तदा तत् कर्म विफलमेव प्राप्तमिति न वाच्यमित्यर्थः ॥

१ 'सन्तापेनेत्यादि तदपि' इति ग–पाठः। २ 'क्रमणप्रकारेण' इति ख–पाठः।

( मूलम् )

**च भावनापूर्वकत्वात् तदनिष्पत्तौ ध्यानासिद्धेः। न च सर्वथा योगनिरोधलक्षणलेश्यातीतानुपमशुक्लध्यानव्यतिरेकेण मोक्षः, क्रियाभावे तन्निबन्धनकर्मानुपरतेः[1], अन्यथा न तस्या मनागपि कर्महेतुत्वम्, न चैतद् दृष्टेष्टाविरोधि तथालोकाभ्युपगमक्षतेरित्येतदङ्गत्वेन मोक्षविद्यासाधनपूर्वक्रियारूपैवानित्यत्वादिभावना, तथाविधपरिणामजनकत्वेन क्लिष्टानुष्ठाननिवृत्तिहेतुत्वात्, विदिततत्त्वानां तु न किञ्चिदनया तदनुवादरूपया, निरतिचारसामायिकगर्भमेका[2]-**

( स्वो० व्या० )

ततः किमित्याह–**तस्य च**– ध्यानस्य **भावनापूर्वकत्वात्**। भावनापूर्वकत्वं च **तदनिष्पत्तौ**–भावनाऽनिष्पत्तौ **ध्यानासिद्धेः** कारणात्। **न चे**त्यादि। न च **सर्वथा**–एकान्तेन **योगनिरोधलक्षणं** च तत् **लेश्यातीत**[3]परम**शुक्लध्यानं** चेति विग्रहः, तद्**व्यतिरेकेण मोक्षो** न च। कथमित्याह–**क्रियाभावे** सति **तन्निबन्धनकर्मानुपरतेः**–क्रियानिबन्धनकर्मानुपरतेः। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा न तस्याः**–क्रियाया **मनागपि कर्महेतुत्वम्**, तद्भावेऽपि तदभावोपपत्तेः। **न चैतत्**–अकर्महेतुत्वं **दृष्टेष्टाविरोधि**, किन्तु विरोध्येव, इह क्रियाफलदर्शनात् सयोगकेवलिनोऽपि ईर्यापथककर्मबन्धाभ्युपगमाच्च। अत एवाह–**तथालोकाभ्युपगमक्षतेः**। **इति**–एव**मेतदङ्गत्वेन**, प्रक्रमादधिकृतध्यानाङ्गत्वेन **मोक्षविद्यासाधनपूर्वक्रियारूपैव**। [4]केत्याह–**अनित्यत्वादिभावना**। 'आदि'शब्दादशरणत्वादिग्रहः। यथोक्तम्–

"भावयितव्यमनित्यत्वमशरणत्वं तथैकताऽन्यत्वे।
अशुचित्वं संसारः कर्माश्रवसंवरविधिश्च॥[5]
निर्जरणलोकविस्तरधर्मस्वाख्याततत्त्वचिन्ताश्च।
बोधेः सुदुर्लभत्वं च भावना द्वादश विशुद्धाः॥"[6]

उपयोगं दर्शयति **तथाविधे**त्यादिना। तथाविध**परिणामजनकत्वेन**–शुद्धचित्तपरिणामजनकत्वेन हेतुना किमित्याह–**क्लिष्टानुष्ठाननिवृत्तिहेतुत्वात्** अनित्यत्वादिभावनाया **विदिततत्त्वानां तु**–योगिनां सामायिकवतां **न किञ्चिदनया**–अनित्यत्वादिभावनया। किंविशिष्टयेत्याह–**तदनुवादरूपया**। किं तर्हि? **ध्यानमेव प्रधानसिद्ध्यङ्गभूतं श्रेय** इति योगः। एतदेव विशेष्यते

१ 'कर्मबन्धानुपरते' इति ग–पाठ। २ 'काग्र चित्तनिरोध०' इति ग–पाठ। ३ 'तानुपमशुक्ल०' इति स्यात्। ४ 'किमित्याह' इति ङ–पाठ। ५–६ आर्या।

( मूलम् )

ग्रचिन्तानिरोधलक्षणं तथासूक्ष्मप्रवृत्तिभावतः प्रचुरकर्मक्षयहेतुः ध्यानमेव प्रधानसिद्ध्यङ्गभूतं श्रेयः। एतद्धि निरुपमं कर्मामय[1]भैषजं विख्यातं विपश्चितां फलं सच्चेष्टितस्य प्रकर्ष उपादेयानां निराबाधं प्रकृत्या एकान्तेनापरोपतापि प्रशमसुखसङ्गतं समुल्लसद्-यथावस्थितज्योतिरित्यस्मात् तत्प्रकर्षमासादयतोऽक्षेपेण केवलं प्रकृष्टाच्च मोक्ष इति ॥

एतेन 'नारकादिकायसन्तापवत् तत्त्वतस्तपस्त्वायोगात् इत्यादि यावदतपस्विनश्चैवं योगिनः स्युः कायसन्तापाभावात् न चैतदपि न्याय्यम्, अभ्युपगमादिविरोधादेव'[2] इति निराकृतमवगन्तव्यम्, अनभ्युपग[3]मेन भावतो निरवकाशत्वादिति। यच्चोक्तम्[4]–'अथ न कायसन्तापस्तप इति, अपि त्वन्यदेव' इत्येतदाशङ्क्याह[5]—'हन्तैवमपि

( स्वो० व्या० )

निरतिचारसामायिकगर्भम्[7]। एतदभावे तत्त्वतोऽधिकृतध्यानानुपपत्तेः एकाग्रचिन्तानिरोधलक्षणं अप्रमादातिशययोगात् तथासूक्ष्मप्रवृत्तिभावतः। एतदेव विशेष्यते प्रचुरकर्मक्षय[6]हेतुः असङ्गानुष्ठानान्तर्गतत्वेन ध्यानमेव प्रधानसिद्ध्यङ्गभूतं श्रेय इति। तद्धि ध्यानं निरुपमं कर्मामयभैषजम्। एतच्च विख्यातं विपश्चितां–पण्डितानां निरुपमकर्मामयभैषजत्वेन फलं सच्चेष्टितस्यानेकभवाभ्यासजं प्रकर्ष उपादेयानां वास्तवं न्यायमधिकृत्य निराबाधं प्रकृत्या सर्वौत्सुक्याभावेन एकान्तेनापरोपतापि, सर्वाश्रवनिरोधात् प्रशमसुखसङ्गतं रागादिप्रहाणेन समुल्लसतः यथावस्थितज्योतिः प्रतिसमयं मोहनिवृत्तेः। इति–एवमस्मात्–ध्यानात् तत्प्रकर्ष–ध्यानप्रकर्षमासादयतः सतः अक्षेपेण केवलं प्रकृष्टाच्च अस्मादेव शैलेश्यवस्थासङ्गात् मोक्ष इति ॥

एतेनेत्यादि। एतेन–अनन्तरोदितेन नारकादिकायसन्तापवत् तत्त्वतः तपस्त्वायोगादित्यादि पूर्वपक्षोदितं[8] यावदतपस्विनश्चैवं योगिनः स्युः कायसन्तापाभावात्, न चैतदपि न्याय्यमभ्युपगमादिविरोधादेवेति एतन्निराकृतमवगन्तव्यम्। कुत इत्याह–अनभ्युपगमेन भावतः–परमार्थेन निरवकाशत्वादिति। यच्चोक्तं मूलपूर्वपक्ष एवं[9]–'अथ न काय-

१ 'कर्मामयमेषजं' इति ग–पाठः। २ द्रष्टव्यं प्रथमस्य खण्डस्य २९तमं पृष्ठं ३०तमं च। ३ 'गमेनाभावतो' इति ग–पाठः। ४ प्रथमे खण्डे ३०तमे पृष्ठे। ५ प्रथमे खण्डे ३०तमे पृष्ठे। ६ 'हेतु असङ्गा०' इति ङ–पाठः। ७ 'भावे न एका०' इति क–पाठः। ८ द्रष्टव्यमाद्यस्य खण्डस्य २९तमं पृष्ठम्। ९ आद्ये खण्डे ३०तमे पृष्ठे।

(मूलम्)

**न तदे[1]करूपं चित्रशक्तिकस्य कर्मणः क्षयायालम्, अन्यतमशक्तितोऽभावात्[2] इत्यादि तदप्ययुक्तम्, तस्यैकान्तत एकरूपत्वासिद्धेः, चित्रकुशलात्मपरिणामरूपत्वात् तत्तद्वचनादिनिमित्तभेदोपपत्तेः, अनशनप्रायश्चित्तादिभेदाभ्युपगमादिति ॥**

**न चास्य कर्मशक्तित एव भावः, तत्क्षयोपशमतः प्रवृत्तेः तत्त्वत [3]आत्मधर्मत्वात्, आवरणात् तदनभिव्यक्तेः, तदपगमादभिव्यक्तिभावादिति । आह–कः पुनरस्यावगमहेतुः? परमगुरुवचन[4]श्रवणादिः । तदवाप्तावपि क इति वाच्यम्, तथाभ[5]व्यत्वसहकारिणः**

(स्वो० व्या०)

**सन्तापस्तप इत्यपि त्वन्यदेवेत्येतदाशङ्क्याह–हन्तैवमपि न तदेकरूपं**–तपः **चित्रशक्तिकस्य कर्मणः**–ज्ञानावरणीयादेः **क्षयायालम्** । कुत इत्याह–**अन्यतमशक्तितोऽभावात्** तपस **इत्यादि, तदप्ययुक्तम्, तस्य**–तपस **एकान्तत एकरूपत्वासिद्धेः** । असिद्धिश्च **चित्रकुशलात्मपरिणामरूपत्वात्** तपसः । **तच्च तद्वचनादिवत्** तन्निमित्तं च, 'आदि'शब्दाद् विनयादिग्रहः, **तद्भेदोपपत्तेः अनशनप्रायश्चित्तादिभेदाभ्युपगमात्** बाह्याभ्यन्तररूपतया तपस **इति** । उक्त च–

"अनशनमूनोदरता वृत्तेः सङ्क्षेपणं रसत्यागः ।
कायक्लेशः सलीनतेति बाह्य तपः प्रोक्तम् ॥[6]
प्रायश्चित्त-ध्याने वैयावृत्त्य-विनयावथोत्सर्गः ।
स्वाध्याय इति तपः षट्प्रकारमाभ्यन्तर भवति ॥"[7]

**न चेत्यादि** । न **चास्य**–तपसः **कर्मशक्तित एव** सकाशाद् **भावः, तत्क्षयोपशमतः**–कर्मक्षयोपशमतः **प्रवृत्तेः** कारणात् **तत्त्वत आत्मधर्मत्वात्** तपसः । आत्मधर्मत्वे कथं न सदाभाव इत्याह–**आवरणात्**–चारित्रमोहनीयलक्षणात् **तदनभिव्यक्तेः** तस्य–तपसोऽनभिव्यक्तेरिति । **तदपगमात्**–आवरणापगमात् **अभिव्यक्तिभावादिति** । **आह** परः–**कः पुनरस्य**–प्रस्तुतव्यतिकरस्य **अवगमहेतुः**–परिच्छेदहेतुरिति? एतदाशङ्क्याह–**परमगुरुवचनश्रवणादिः** । 'आदि'-शब्दात् समुत्थानादिग्रहः । आह–**तदवाप्तावपि**–परमगुरुवचनश्रवणाद्यवाप्तावपि

१ 'तदैकरूप' इति क–पाठ । २ 'तो भावात्' इति क–पाठ । ३ 'श्वात्म०' इति क–पाठ । ४ 'श्रवणादि तद०' इति क–पाठ । ५ भव्यसह०' इति ग–पाठ । ६–७ आर्या । अनेकान्त० २९

( मूलम् )

**काल-स्वभावादयः । किं पुनरत्रेत्थम्भूतभावावगमनिमित्तम्? न परमगुरुवचनतोऽन्यत् । कथमर्वाग्दृशां तदवसायः? तथाविधक्लिष्टकर्मविगमात्, तस्यापि च तथाविधकालस्वभावादिहेतुत्वात् परमगुरुवचनप्रामाण्यात्, अन्यथैवंविधव्यवहारोच्छेदापत्तेः, सर्वत्र संशयानिवृत्तेरिति । एवं कुशलरूपपरिणामरूपाच्च तपसः तथास्वभावत्वेन न न युक्तः सकलकर्मविगमः । न च तस्येत्थमफलता, व्यवहारतस्तथाप्राप्तफलानामपि योग्यतया लोके सफलतासिद्धेः, उद्यमि-**[1]

( स्वो० व्या० )

**क इति वाच्यम्**–को हेतुरिति? । एतदाशङ्क्याह–**तथाभव्यत्वसहकारिणः**–अनादिपारिणामिकभावसहकारिणः **काल-स्वभावादयः** । उक्तं च वादिमुख्येन[2]–

"कालो सहाव णियई पुव्वकयं पुरिसकारणेगन्ता[3] ।
मिच्छत्तं ते चेव य समासओ होन्ति सम्मत्तं ॥"[4][5]

आह–**किं पुनरत्र**–व्यतिकरे **इत्थम्भूतभावाधिगमनिमित्तं** यदुत तथाभव्यत्वसहकारिणः कालस्वभावादयो हेतुरिति? । एतदाशङ्क्याह–**न परमगुरुवचनतोऽन्यत्** निमित्तमिति । आह–**कथमर्वाग्दृशां**–छद्मस्थानां **तदवसायः**–परमगुरुवचनावसायः? । एतदाशङ्क्याह–**तथाविधक्लिष्टकर्मविगमात्** तदवसाय इति । **तस्यापि च**–क्लिष्टकर्मविगमस्य **तथाविधकालस्वभावादिहेतुत्वात्** । तद्धेतुत्वं च **परमगुरुवचनप्रामाण्यात्**, सर्वज्ञवचनप्रामाण्यादित्यर्थः । इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथा एवंविधव्यवहारोच्छेदापत्तेः**–अतीन्द्रियव्यवहारोच्छेदापत्तेः । आपत्तिश्च **सर्वत्र संशयानिवृत्तेरिति** । **एवं कुशलरूपपरिणामरूपाच्च तपसः** किमित्याह–**तथास्वभावत्वेन**–कर्मापनयनस्वभावत्वेन हेतुना **न न युक्तः सकलकर्मविगमः**, किन्तु युक्त एव । **न चे**त्यादि । न च **तस्य**–कर्मण **इत्थम्**–अनेन तपउपक्रमणप्रकारेण **अफलता** । कुत इत्याह–**व्यवहारत** इत्यादि । व्यवहारतः–व्यवहारेण **तथा**–[6]क्रिययैवा**प्राप्तफलानामपि** निश्चयतः **योग्यतया** कारणेन **लोके सफलतासिद्धेः** । निदर्शनमाह–**उद्यमी**त्यादि ।

१ 'उद्यमे निष्फला०' इति ग–पाठः । २ **सिद्धसेनदिवाकरेण** ।
३ छाया–कालः स्वभावो नियतिः पूर्वकृतं पुरुषकारणमेकान्तात् ।
मिथ्यात्वं ते चैव च समासतो भवन्ति सम्यक्त्वम् ॥
४ 'कारणे संत' इति ङ–पाठः । ५ आर्या । ६ 'क्रियै वा' इति ङ–पाठः ।

( मूलम् )

**निष्फलारम्भाङ्कुराजनकबीजादीनां फलवच्छ्रुतिप्रवृत्तेः[1], निश्चयतस्तु तावत्सामग्र्यन्तर्गतस्य तथाऽपगमभावात् न न तथास्वभावत्वमपि, तदभावे[2] तदपगमानुपपत्तेः, अपगमे वाऽतिप्रसङ्गात्, सर्वेषां तदपगमापत्तेः; असमञ्जसत्वमिति सूक्ष्मधिया भावनीयम् ॥**

**एतेन 'सर्वशक्तिविरोधासिद्धेः' इत्यादि[3] यावत् 'तपःकर्मक्षयवादोऽप्यबुधजनमनोहर एवेत्यपकर्णयितव्यः'[4] इत्येतद् व्युदस्तं प्रत्येतव्यम्, उक्तवत् सर्वशक्तिविरोधोपपत्तेः, तथाविधकुशलपरिणामस्य तत्प्रच्यावकत्वादिति ॥**

**यच्चोक्तम्[5]–'न चास्मिन् सत्यपि मोक्षसौविहित्यम्, अनेकान्तोप-**

( स्वो० व्या० )

उद्यमिनां **निष्फलारम्भ** उद्यमिनिष्फलारम्भतश्च[6] **अङ्कुराजनका बीजादयश्चेति** समासः, एतेषां **फलवच्छ्रुतिप्रवृत्तेः** व्यवहारतस्तथाविधफलाभावेऽपीति भावः । **निश्चयतस्तु**–निश्चयेन पुनः तावती चासौ सामग्री च तावत्सामग्री चित्रतपोरूपा[7] तस्या अन्तर्गतं **तावत्सामग्र्यन्तर्गतं** तस्य, कर्मण इति प्रक्रमः, **तथा**–विशिष्टफलादानेन **अपगमभावात्** कारणात् **न न तथास्वभावत्वम्**–अभ्युपक्रमणस्वभावत्व**मपि**, किन्त्वस्त्येव, **तदभावे**–तथास्वभावत्वाभावे **तदपगमानुपपत्तेः**–कर्मापगमानुपपत्तेः, **अपगमे वा** तत्स्वभावस्य कर्मणः **अतिप्रसङ्गात्** । ततः किमित्याह–**सर्वेषां**–प्राणिनां **तदपगमापत्तेः**–कर्मापगमापत्तेः, अतत्स्वभावत्वाविशेषादित्यभिप्रायः । एव**मसमञ्जसत्वमित्येतत् सूक्ष्मधिया भावनीयम्** ॥

**एतेनेत्यादि** । एतेन–अनन्तरोदितेन वस्तुना **सर्वशक्तिविरोधासिद्धेरित्यादि** मूलपूर्वपक्षोक्तं[8] **यावत् तपःकर्मक्षयवादोऽप्यबुधजनमनोहर एवेत्यपकर्णयितव्य इत्येतत्**–सर्वं **व्युदस्तं प्रत्येतव्यम्** । कथमित्याह–**उक्तवत्**–यथोक्तं तथा **सर्वशक्तिविरोधोपपत्तेः** । **तथाविधकुशलपरिणामस्य** उक्तलक्षणतपोरूपस्य **तत्प्रच्यावकत्वात्**–सर्वशक्तिप्रच्यावकत्वात् **इति** ॥

**यच्चोक्तमित्यादि** । यच्चोक्तं पूर्वपक्षे[9] एव–**न चास्मिन्**–अनेकान्तवादे **सत्यपि**

१ 'वत्सूति०' इति ग–पाठ । २ 'तदभावेन तद०' इति ग–पाठ । ३ 'इत्यादिवत् तप' इति क–पाठ । ४ द्रष्टव्यं प्रथमस्य खण्डस्य ३०तम पृष्ठ ३१तम च । ५ आद्ये खण्डे ३१तमे पृष्ठे । ६ 'रम्भश्च अङ्कुरा०' इति ङ–पाठ । ७ 'तपोऽतस्या' क–पाठ । ८ द्रष्टव्यमाद्यस्य खण्डस्य ३०तम पृष्ठ ३१तम च । ९ प्रथमे खण्डे ३१तमे पृष्ठे ।

( मूलम् )

द्रवानिवृत्तेः, तथाहि–मुक्तोऽपि न मुक्त एव, अनेकान्तवादहानेः, अपि त्वमुक्तोऽपि' इत्यादि तदप्ययुक्तम्, न मुक्त एवेत्यवधारणनिषेधेनैव अनेकान्तवादसाफल्यात् अमुक्तोऽपीति [1]विधानासिद्धेः। आह–कथं न मुक्त एवेत्यनेकान्तवादसाफल्यम्?। उच्यते–स्यान्मुक्त इति वाक्यार्थापत्तेः। वाक्यार्थापत्तिश्च स्वमुक्तत्वेनैव मुक्तत्वात्, मुक्तान्तरमुक्तत्वेन तदयोगात्, स्वपरभावाभावोभयाधीनात्मकत्वात् सर्ववस्तूनामिति निर्णीतमेतत्॥

अथवा सत्त्व-चैतन्य-सर्वज्ञत्वा-ऽसङ्ख्यातप्रदेशत्वादिभ्यो मुक्तामुक्तसामान्यादमुक्तपर्यायेभ्यः कथञ्चिदव्यतिरिक्तत्वात् सकलकर्मक्षयाभिव्यक्तमुक्तपर्यायस्य स्यान्मुक्तः स्यादमुक्त इति न कश्चिद्

( स्वो० व्या० )

मोक्षसौविहित्यम्, अनेकान्तवादोपद्रवानिवृत्तेः, तथाहि–मुक्तोऽपि न मुक्त एव, अनेकान्तवादहानेः, अपि त्वमुक्तोऽपीत्यादि यच्चोक्तं तदप्ययुक्तम्। कथम्? न मुक्त एवेति–एवमवधारणनिषेधेनैव। किमित्याह–अनेकान्तवादसाफल्यात् हेतोः अमुक्तोऽपीति–एवं विधानासिद्धेः। आह–कथं न मुक्त एवेति–एवमनेकान्तवादसाफल्यम्?। एतदाशङ्क्य आह–उच्यते–स्यान्मुक्तः–कथञ्चिन्मुक्त इति–एवं वाक्यार्थापत्तेः कारणात्। वाक्यार्थापत्तिश्च अर्थवृत्त्या स्वमुक्तत्वेनैव मुक्तत्वात्, मुक्तान्तरमुक्तत्वेन तदयोगात्–मुक्तत्वायोगात्। अयोगश्च स्व[2]परभावाभावोभयाधीनात्मकत्वात् स्वपरयोर्भावाभावौ तावेवोभयम्, एतदधीनात्मकत्वात् सर्ववस्तूनामिति निर्णीतमेतदधस्तात् सदसद्रूपाधिकारे[3]॥

प्रकारान्तराभिधित्सयाऽऽह–अथवेत्यादि। अथवैवं स्यान्मुक्तः स्यादमुक्त इति कथमित्याह–सत्त्वं च चैतन्यं च सर्वज्ञत्वं च असङ्ख्यातप्रदेशत्वादयश्चेति द्वन्द्वः, तेभ्यो मुक्तामुक्तसामान्यात् कारणात् अमुक्तपर्यायेभ्यः–सत्त्वादिभ्यः कथञ्चित्–केनचित् प्रकारेण अव्यतिरिक्तत्वात् हेतोः। कस्येत्याह–सकलकर्मक्षयाभिव्यक्तश्चासौ मुक्तपर्यायश्चेति विग्रहस्तस्य। स्यान्मुक्तः–कथञ्चिन्मुक्तः मुक्तत्वपर्यायापेक्षयैव, स्यादमुक्तः सत्त्वादिपर्यायापेक्षया इति न कश्चिद्

१ 'विधानसिद्धेः' इति ग–पाठः। २ 'परभावोभया०' इति ङ–पाठः। ३ प्रथमे खण्डे।

( मूलम् )

**दोषः। न च य एव सत्त्वादिपर्यायः स एव मुक्तपर्यायः, प्रतीतिभेदात्, एकान्तैकत्वे सत्त्वादेरेव मुक्तत्वप्रसङ्गात्। अस्त्वेवमपि न दोष एवेति चेत्, न, देवदत्तादिषु सत्त्वादिभावेन तद्भावप्रसङ्गात्। सोऽन्य एव सत्त्वादिरिति चेत्, [1]कस्तयोरन्यत्वहेतुरिति वाच्यम्। मुक्तत्वामुक्तत्वे एवेति चेत्, न, तयोस्तद[2]न्यत्वहेतुत्वेन तद्भेदसिद्धेः, सर्वथैकत्वे तु द्वयोरपि सत्त्वादिमात्रत्वाविशेषाद् भेदाभावः, तथा**

( स्वो० व्या० )

**दोषः। न** चेत्यादि। न च **य एव सत्त्वादिपर्यायः स एव मुक्तपर्यायः।** कुत इत्याह–**प्रतीतिभेदात्** अधिकृतपर्याययोः। **एकान्तैकत्वे** तयोः किमित्याह–**सत्त्वादेरेव**–[3]पर्यायस्य **मुक्तत्वप्रसङ्गात्। अस्त्वि**त्यादि। अस्तु–भवतु एव**मपि** सत्त्वादेरेव मुक्तत्वप्रसङ्गेऽपि **न दोष एव। इति चेत्,** एतदाशङ्क्याह–**ने**त्यादि। न–नैतदेवं **देवदत्तादिषु**–प्राणिषु **सत्त्वादिभावेन** हेतुना **तद्भावप्रसङ्गात्**–मुक्तत्वभावप्रसङ्गात्। **स** इत्यादि। सः–**देवदत्त**सम्बन्धी **अन्य एव सत्त्वादिः** पर्यायः। **इति चेत्,** एतदाशङ्क्याह–**क** इत्यादि। कः **तयोः**–**देवदत्त**सत्त्वादि-मुक्तसत्त्वाद्योः **अन्यत्वहेतुरिति** एतद् **वाच्यम्। मुक्तत्वामुक्तत्वे एवेति चेत्** तयोरन्यत्वहेतू। एतदाशङ्क्याह–**ने**त्यादि। न–नैतदेव **तयोः**–मुक्तत्वामुक्तत्वयो**स्तदन्यत्वहेतुत्वेन**–मुक्तसत्त्व**देवदत्त**सत्त्वान्यत्वहेतुत्वेन हेतुना **तद्भेदसिद्धेः**–मुक्तस[4]त्त्व-**देवदत्त**सत्त्वाभ्यां मुक्तत्वभेदसिद्धेः। **सर्व[5]थे**त्यादि। सर्वथा–एकान्तेन **[6]तदेकत्वे**–मुक्तसत्त्वाद्यमुक्तसत्त्वाद्येकत्वे पुनः **द्वयोरपि**–मुक्तसत्त्व-**देवदत्त**सत्त्वयोः **सत्त्वादिमात्रत्वाविशेषात्,** 'आदि'शब्दाच्चैतन्यादिग्रहः, **भेदाभावः** विशेषणविशेष्याव्यतिरिक्ततया तन्मात्रत्वोपपत्तेरिति भावार्थः। **तथा च**

( विवरणम् )

(२३) **विशेषणविशेष्याव्यतिरिक्ततया तन्मात्रो(?)पपत्तेरि**ति। चैतन्य-संसारित्व-मुक्तत्वादीनि विशेषणानि, सत्त्वं तु विशेष्यम्। ततो विशेषणानां विशेष्यस्य चाव्यतिरिक्ततया, विशेषणानां विशेष्यमात्रतयेत्यर्थः। तस्मात् सत्त्वोपपत्तेरिति। चैतन्यं ससारित्वमात्रात् कथञ्चिद् [7]व्यतिरिक्त नाभ्युपगम्यते तदा सत्त्वमात्रस्य सर्वत्राविशेषात् ससारी मुक्तः स्यात्, मुक्तो वा ससारी इति ॥

१ 'क स, मुक्तत्वा०' इति **ग**–पाठ। २ 'न्यत्वे हेतुत्वेन' इति **ग**–पाठ। ३ 'पर्यायस्यामुक्त०' इति **ङ**–पाठ। ४ 'सत्त्वादिपर्याय' इति **क**–पाठ। ५ 'सत्त्वे देव०' इति **ङ**–पाठ। ६ 'तदहेतुकत्वे तु मुक्तसत्त्वाद्येकत्वे' इति **क**–पाठ। ७ 'व्यतिरिक्तानि नाभ्युप०' इति **च**–पाठ।

(मूलम्)

**च सत्युक्तो दोष इति। सत्त्वाद्यन्यत्वे तु तस्यासत्त्वादित्वप्रसङ्ग इति चेत्, क एवमाह तदन्यदेव तत्, अपि तु स्याद्वादः कथञ्चिदन्यत् कथञ्चिदनन्यत्। एकान्तान्यत्वानन्यत्वयोस्त्वितरेतरविकलतोभयस्वरूपानुपपत्तिभ्यां तदसत्त्वापत्तिलक्षणो[1]ऽनिवारितप्रसरो दोषः सूक्ष्मधिया भावनीय इति ॥**

(स्वो० व्या०)

**सति**—एवं च सति **उक्तो दोषः, देवदत्तादिषु** सत्त्वादिभावेन तद्भावप्रसङ्गलक्षण **इति। सत्त्वे**त्यादि। सत्त्वाद्यन्यत्वे पुनः **तस्य**—मुक्तत्वादेः किमित्याह—**असत्त्वादित्वप्रसङ्गः**। 'आदि'शब्दादज्ञेयत्वादिपरिग्रहः। **इति चेत्**, एतदाशङ्क्याह—**क एवमाहे**त्यादि। क एवमाह यदुत **तदन्यदेव** तस्मात्—सत्त्वादेः अन्यदेव—अर्थान्तरभूतमेव **तत्**—मुक्तत्वादि, **अपि तु स्याद्वादः**। किंविशिष्ट इत्याह—**कथञ्चिदन्यत्**[2] स्वलक्षणादिभेदात् **कथञ्चिदनन्यद्**इतरेतरानुवेधादेरिति। विपक्षे बाधामाह **एकान्ते**त्यादिना। एकान्तान्यत्वं चानन्यत्वं च मुक्तसत्त्वादि, मुक्तत्वादीनामिति प्रक्रमः। **एकान्तान्यत्वानन्यत्वे** तयोः पुनः किमित्याह—इतरेतरविकलता चैकान्तान्यत्वे उभयरूपानुपपत्तिश्च एकान्तानन्यत्वे **इतरेतरविकलतोभयस्वरूपानुपपत्ती** आभ्याम्। किमित्याह—**तदसत्त्वापत्तिलक्षणः** तेषां—मु[3]क्तसत्त्वादि-मुक्तत्वादीनामसत्त्वापत्तिः तदसत्त्वापत्तिः सैव लक्षणमस्येति विग्रहः। **अनिवारितप्रसरो दोष** आपद्यत एवेत्यर्थः। **सूक्ष्मधिया भावनीय इति** अक्षरगमनिका। भावार्थस्तु यदि मुक्त[4]सत्त्वादि-मुक्तत्वादीनामेकान्तेन भेदः, तत इतरेतरविकलता द्वयोरपि। एवं चासत्त्वं द्वयोरपि, तथा परस्परविकलयोर्विशेष्यत्वाद्ययोगात्। अथाभेदः तत उभयस्वरूपानुपपत्तिः, मुक्तसत्त्वादेर्मुक्तत्वाद्यभेदात् तत्स्वरूपतया, मुक्तत्वादेर्वा मुक्तादिसत्त्वरूपतयेति ॥

(विवरणम्)

(१४) **स्वलक्षणादिभेदादि**ति। स्वलक्षणं—स्वरूपं तद्भेदात्। तथाहि—मुक्तत्वस्य सर्वकर्मनिर्मूलप्रलयः स्वरूपम्, सत्त्वस्य तु विद्यमानता स्वरूपम्। 'आदि'शब्दाद् दिक्कालादिभेदपरिग्रहः। तथाहि—सार्वत्रिकं सत्त्वम्, भवेऽपवर्गे च भावात्। मुक्तत्वं निर्वाणपुरप्रविष्टानामेव प्राणिनामिति ॥

१ 'लक्षणो निवारित०' इति ग-पाठः। २ 'दन्यत्वस्वलक्षणा०' इति क-पाठः। ३ 'मुक्तत्वादिमुक्तत्वा०' इति क-पाठः। ४ 'सत्त्वादिमुक्तसत्त्वादीना०' इति ङ-पाठः।

(मूलम्)

**एवमनेकान्तत एव भावतो मुक्तिसिद्धिः, अन्यथाऽयोगात्। सकलकर्मविगमाच्च सर्वथा सङ्क्लेशाभावान्नेदमपुष्कलमिति कथं नोपादेयफलप्रकर्षः, उक्तवत् तदन्यसाधारणत्वासिद्धेः नेदं सापवादमिति कथमस्य संसारिष्वपि भावः? ॥**

**एतेन 'तथाहि न वः संसार्यपि सर्वथा संसार्येव, एकान्तवादापत्तेः, अपि त्वसंसार्यपीति नेदमकृत्स्नं हेयानर्थोत्कर्षः' इति[1] एतदपि प्रत्युक्तम्, अर्थतस्तुल्ययोगक्षेमत्वात्, [2]संसार्यन्तररूपेणासंसारित्वम्, अन्यथा तदभावप्रसङ्ग इत्युक्तप्रायम्। सङ्क्लेशकृत्कर्मयोगश्च संसारित्वमिति तद्भावेन नेदमकृत्स्नम्, अपि तु कृत्स्नमेवेति कथं न हेयानर्थोत्कर्ष इति भावनामात्रमेतत् ॥**

(स्वो० व्या०)

एवमित्यादि। **एवम्**–उक्तनीत्या **अनेकान्तत एव भावतः**–परमार्थेन **मुक्तिसिद्धिः, अन्यथाऽयोगात्** मुक्तिसिद्धेः। **सकले**त्यादि। **सकलकर्मविगमाच्च** कारणात् **सर्वथा**–एकान्तेन **सङ्क्लेशाभावात् नेदं**–मुक्तत्वम् **अपुष्कलं** किन्तु पुष्कलमेव, संसारित्वेनाननुविद्धत्वात्। **इति**–एवं **कथं नोपादेयफलप्रकर्षः?** एतत्प्रकर्ष एव। कथमित्याह–**उक्तव**दित्यादि। उक्तवत्–यथोक्त तथा **तदन्यसाधारणत्वासिद्धेः**, प्रक्रमात् ससारित्वसाधारणत्वासिद्धेः। अत एव **नेदं**–मुक्तत्व **सापवादम्। इति**–एवं **कथमस्य**–[3]मुक्तत्वस्य **संसारिष्वपि भावः?** नैवेत्यर्थः ॥

**एतेने**त्यादि। एतेन–अनन्तरोदितेन **तथाहि न वः संसार्यपी**त्यादि मूलपूर्वपक्षोक्त[4] याव**न्नेदमकृत्स्नं** ससारित्व **हेयानर्थोत्कर्ष** इत्ये**तदपि प्रत्युक्तम्।** कथमित्याह–**अर्थतस्तुल्ययोगक्षेमत्वात्।** एतदेवाह **संसार्यन्तरे**त्यादिना। **संसार्यन्तररूपेण** विवक्षितससारिणः **असंसारित्वम्; अन्यथा**–एवमनभ्युपगमे **तदभावप्रसङ्गः**–विवक्षितससार्यभावप्रसङ्गः संसार्यन्तररूपेणापि भावात् तत्स्वरूपवदि**त्युक्तप्रायं**–प्रायेणोक्तम्। **सङ्क्लेशकृ**दित्यादि। सङ्क्लेशकृत् **कर्मयोगश्च**–सङ्क्लेशकरणशीलकर्मसम्बन्धश्च **संसारित्वमिति** कृत्वा **तद्भावेन**–सङ्क्लेशकृत्कर्मयोगभावेन **नेदं**–ससारित्व**मकृत्स्नम्**–असम्पूर्णम्, **अपि तु कृत्स्नमेव। इति**–एवं **कथं न हेयानर्थोत्कर्षः?।** एतदिति–एवं **भावनामात्रमेतत्**–अनन्तरोदितमिति ॥

१ द्रष्टव्यमाद्यस्य खण्डस्य ३२तम पृष्ठम्। २ 'समार्युत्तररूपे०' इति ग–पाठ। ३ 'मुक्तस्य ससारि०' इति ङ–पाठ। ४ आद्ये खण्डे ३२तमे पृष्ठे।

( मूलम् )

**यच्चोक्तम्[1]–'किञ्चानेकान्तवादिनो मानमपि न मानमेव, स्यान्मानमिति तत्त्वनीतेरित्थं तदाभासमपि, ततश्चैवं तदतदात्मके प्रमाणप्रमेयरूपे सर्वस्मिन्नेवास्मिन् वस्तुतत्त्वे विरोधाभाजि अस्य तदतद्वादिनो निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारतः सर्वमेव प्रमाणप्रमेयादि प्रतिनियतं न घटते' इति एतदप्ययुक्तम्, अनेकान्तवादापरिज्ञानात्, प्रलापमात्रत्वात्, तज्ज्ञाने सत्यस्याप्रवृत्तेः। तत्र यत् तावदुक्तम्[2]–'अनेकान्तवादिनो मानमपि न मानमेव' इत्यत्र सिद्धसाध्यता, विजातीयादिमानान्तरत्वेनामानत्वात्, अन्यथा तदभावप्रसङ्गात् इतरेतररूपतापत्तेः। तथाहि–प्रत्यक्षं प्रत्यक्षमानत्वेन मानम्, अनुमानादिमानत्वेनामानम्; एवमनुमानाद्यपि; अन्यथा तत्प्रतिनियतत्वाभाव इति स्यान्मानमिति शोभनैव तत्त्वनीतिः, कथञ्चित्**

---

( स्वो० व्या० )

**यच्चोक्तमित्यादि**। यच्चोक्तं मूलपूर्वपक्षे[3]–**किञ्चानेकान्तवादिन** इत्यादि यावत् **सर्वमेव प्रमाणप्रमेयादि प्रतिनियतं न घटते इति एतदप्ययुक्तम्**–अघटमानकम्। कथमित्याह–**अनेकान्तवादापरिज्ञानात्**, अत एव **प्रलापमात्रत्वात् तज्ज्ञाने सति[4]**–अनेकान्तवादपरिज्ञाने सति **अस्य**–प्रलापमात्रस्य **अप्रवृत्तेः** कारणात्। एतद्विशेषेणोपदर्शयन्नाह–**तत्रे**त्यादि। तत्र **यत् तावदुक्तं** मूलपूर्वपक्षे[5]–**अनेकान्तवादिनः**–वादिनः किमित्याह–**मानमपि न मानमेवे**त्यत्र **सिद्धसाध्यता**। कथमित्याह–**विजातीयादिमानान्तरत्वेन** प्रत्यक्षेऽधिकृतेऽनुमानमानान्तरत्वेन **अमानत्वात्**। 'आदि'शब्दात् सजातीयव्यक्त्यन्तरमानत्वपरिग्रहः। इत्थं चैतदङ्गीकर्त्तव्यमित्याह–**अन्यथे**त्यादि। अन्यथा–एवमनभ्युपगमे **तदभावप्रसङ्गात्**–विवक्षितमानाभावप्रसङ्गात्। प्रसङ्गश्चे**तरेतररूपतापत्तेः**–प्रत्यक्षादेरनुमानादिरूपतापत्तेः अनुमानादेश्च प्रत्यक्षादिरूपतापत्तेरिति। विजातीयादिमानान्तरत्वेनामानत्वमुपदर्शयति **तथाही**त्यादिना। तथाहीत्युपप्रदर्शने। **प्रत्यक्षं प्रत्यक्षमानत्वेन मानम्, अनुमानादिमानत्वेन अमानम्। एवमनुमानाद्यपि** स्वगतेनैव मानत्वेन मानम्, मानान्तरमानत्वेन त्वमानमिति। **अन्यथा**–एवमनभ्युपगमे **तत्प्रतिनियतत्वाभावः**–प्रत्यक्षादेर्नियतत्वाभावः।

---

१ प्रथमे खण्डे ३२तमे पृष्ठे ३३तमे च। अत्र 'प्रमाणप्रमेयादि' इति पाठो नास्ति, किन्तु 'प्रमाणादि' इति पाठः। २ आद्ये खण्डे ३२तमे पृष्ठे। ३ प्रथमे खण्डे ३२तमे पृष्ठे ३३तमे च। ४ 'सति अस्य अनेका०' इति क–पाठः। ५ प्रथमे खण्डे ३२तमे पृष्ठे।

(मूलम्)

**स्वव्यक्तिमानत्वेन मानत्वात्, मानान्तरमानत्वेन त्वमानत्वात् ॥**

**इत्थं तदाभासमपि भावनीयम्, तस्याप्यनेकात्मकत्वात् विसंवादेन तदाभास[1]तया व्याप्तेः, तत्राव्यभिचारेण मानलक्षणयोगः तस्यापि ज्ञेयत्वात् ततस्तत्प्रतीतेश्चेति भावना ॥**

**न च प्रमेयवदपरिच्छित्त्यात्मकमेवैतत्, तथाऽप्रतीतेर्लोकादिविरोधात् अदृष्टविभ्रमप्रतीत्यात्मकतया तु तदाभासता ॥**

**एवं हेत्वाभासेऽप्यसिद्धादौ साध्यविपर्ययप्रतिबद्धतया तत्र हेतु-**

(स्वो० व्या०)

इति-एवं **स्यान्मानं**-कथञ्चिन्मानं स्वगतमानत्वेनैव । इति-एवं **शोभनैव तत्त्वनीतिः** । एतदेवाह-**कथञ्चित् स्वव्यक्तिमानत्वेन मानत्वात्, मानान्तर[2]मानत्वेन त्वमानत्वात्** इति ॥

**इत्थम्**-एवं **तदाभासमपि**-प्रमाणाभासमपि **भावनीयं** तदतदात्मकमेव । कथमित्याह-**तस्यापि**-तदाभासस्य । किमित्याह-**अनेकात्मकत्वात्**, तदतदात्मकत्वादित्यर्थः । एतदेवाह-**विसंवादेन**, विषयगतेनेति प्रक्रमः । **तदाभासतायाः**-प्रमाणाभासतायाः **व्याप्तेः** । किमित्याह-**तत्र**-[3]विसंवादे **अव्यभिचारेण** हेतुना तदाभासतायाः । किमित्याह-**मानलक्षणयोगः** [4]स्वव्याप्यगमकत्वात् । **तस्यापी**त्यादि । तस्यापि-विसवादस्य **ज्ञेयत्वात्** तथाज्ञायमानत्वेन **ततः**-तदाभासात् **तत्प्रतीतेश्च**-विसवादप्रतीतेश्च यथावस्थितज्ञेयाधिगमनिमित्तं च मान**मिति भावना** ॥

**न चे**त्यादि । न च **प्रमेयवदि**ति निदर्शनं व्यतिरेकि, **अपरिच्छित्त्यात्मकमेव**-एकान्तेन **एतत्**-तदाभासम् । कुत इत्याह-**तथाऽ[5]प्रतीतेः**-अपरिच्छित्त्यात्मकत्वेनाप्रतीतेः । अप्रतीतिश्च **लोकादिविरोधात्**, लोकसमययुक्तिविरोधादित्यर्थः । **अदृष्टे**त्यादि । अदृष्टात्-कर्मणो विभ्रमः अदृष्ट**विभ्रमः**, तत्प्रधाना **प्रतीतिः तदात्मकतया** पुनः कारणेन **तदाभासता**-मानाभासता परिच्छित्त्यात्मकत्वेऽपि ॥

एवं सामान्येन मानाभासस्य कथञ्चिन्मानतामभिधायाधुनाऽनुमानाभासमधिकृत्य आह-**एवमि**त्यादि । एवम्-उक्तनीत्या **हेत्वाभासेऽपि** । किम्भूते इत्याह-**असिद्धादौ**-असिद्धानैकान्तिकविरुद्धे **साध्यविपर्ययप्रतिबद्धतया** कारणेन **तत्र**-

(विवरणम्)

(१७) प्रमाणाभासतया व्याप्तेरिति । सर्वमपि प्रमाणाभास विषयविसंवादेन व्याप्तमित्यर्थः । ततो विसवादे साध्ये प्रमाणाभासमपि प्रमाणमित्यायातमिति ॥

१ 'तया व्याप्ते' इति ग-पाठ । २ 'मानत्वेनामान०' इति ङ-पाठ । ३ 'वादेन अव्यभि०' इति क-पाठ । ४ 'स्वव्यापकत्वात्' इति क-पाठ । ५ 'प्रतीते परि०' इति ङ-पाठ ।
अनेकान्त० ३०

( मूलम् )

त्वेऽन्यत्राहेतुत्वमित्यनेकात्मकता। ततश्चैवं तदतदात्मकमेव प्रमाणप्रमेयरूपं सर्वं वस्तुतत्त्वम्। न च विरोधभाग्, विरोधासिद्धेः सदसदादीनामितरेतरानुवेधात्, अन्यथा तदनुपपत्तेः प्रमाणाविरोधात्, तथैव तत्प्रवृत्तेः, प्रतिनियतत्ववेदनादन्वयव्यतिरेकसिद्धेः, अन्यथा प्रतीत्यभावाद् वस्तुन एवानुपपत्तेः, नियमतो विरोधात्, सर्वत्रैकान्तवादिनस्तदसत्तापत्तिलक्षणो[1] विरोध इति निदर्शितं प्राक्[2]॥

एतेनैकदा वस्तुवस्त्वन्तरानापत्तिलक्षणो विरोधः प्रत्युक्तो य उच्यते परैः छाया-ऽऽतपवत् शीतोष्णवत् सुख-दुःखवद् वेति। कुतः? असमानत्वात्। न हि छाया-ऽऽतपादिवदितरेतराननुविद्धाः

( स्वो० व्या० )

साध्यविपर्यये हेतुत्वे तद्धर्मकत्वेन अन्यत्र—साध्ये अहेतुत्वमिति—एवं अनेकात्मकता हेत्वाभासेऽपि। ततश्चेत्यादि। ततश्चैवम्—उक्तनीत्या तदतदात्मकमेव प्रमाणप्रमेयरूपं सर्वं वस्तुतत्त्वम्। न च विरोधभागेतत्, विरोधासिद्धेः। असिद्धिश्च सदसदादीनाम्। 'आदि'शब्दान्नित्यानित्यादिग्रहः। किमित्याह—इतरेतरानुवेधात् कारणात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथा तदनुपपत्तेः—सदसदाद्यनुपपत्तेः तथा प्रमाणाविरोधात्। अविरोधश्च तथैव—सदसदादिप्रकारेणैव तत्प्रवृत्तेः—प्रमाणप्रवृत्तेः प्रतिनियतत्ववेदनात् नेदं सदसद्रूपताभावे। तथाऽन्वयव्यतिरेकसिद्धेः नेयं[3] नित्यानित्यताभावे। इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथा प्रतीत्यभावात् कारणात् वस्तुन एवानुपपत्तेः, नियमतो विरोधात्। एतदेव निगमयति—सर्वत्रेत्यादि। सर्वत्र—सदसदादौ एकान्तवादिनः किमित्याह—तदसत्तापत्तिलक्षणः—सदाद्यसत्तापत्तिलक्षणः विरोधः। इति—एवं निदर्शितं प्राक्—सदसद्रूपाधिकारे[4]॥

एतेनेत्यादि। एतेन—अनन्तरोदितेन एकदा—एकस्मिन् काले वस्तुनो वस्त्वन्तरानापत्तिर्वस्तुवस्त्वन्तरानापत्तिः सैव लक्षणं यस्य विरोधस्य स तथाविधो विरोधः प्रत्युक्तो य उच्यते परैः—एकान्तवादिभिः। एनमेवाह छाया-ऽऽतपेत्यादिना। छायाऽऽतपवदिति निदर्शनम्। एवं शीतोष्णवत् सुखदुःखवद् वेति निदर्शनम्। बहुत्वं विरोधव्याप्तिसन्दर्शनार्थम्। कुतोऽयं प्रत्युक्त इत्याह—असमानत्वात्। असमानत्वमेवाह—न हि छायाऽऽतपादिवत् प्रतिनियततया इतरेतरा-

१ 'सत्त्वापत्ति०' इति ग–पाठः। २ प्रथमे खण्डे प्रथमेऽधिकारे। ३ 'नेयं निपात्या नित्य०' इति ङ–पाठः। ४ प्रथमे खण्डे।

( मूलम् )

**सदसदादयः, तद्वत् केवलानुपलम्भात् तथास्वभावत्वात् तथाऽनुभवसिद्धेरिति छायाऽऽतपानुविद्धा न भवतीति विरोधकल्पनायामपि कः प्रसङ्गः सदसदादिषु? । न ह्यणुरचेतन इति ज्ञानेऽपि [1]तद्वत् तद्विरोधाभिधानं युक्तम्, तत्स्वभावभेदोपपत्तेः इत्येवं शीतोष्णादिष्वपि योज्यम् ॥**

**एवं च 'अस्य तदतद्वादिनो निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारतः सर्वमेव प्रमाणप्रमेयादि प्रतिनियतं न घटते'[2] इति वचनमात्रम्, तदतद्वादिन एव स्वपरभावाभावोभयात्मकतया सर्ववस्तूनां प्रतिनियतत्वसिद्धेः, [3]अन्यथा चासिद्धेः, इतरेतरात्मक-**

---

( स्वो० व्या० )

**नन्वनुविद्धाः सदसदादयः,** किन्त्वितरेतरानुविद्धा इति । कुत इत्याह–**तद्वत्**–छाया-ऽऽतपादिवत् **केवलानुपलम्भात्** सदसदादीनाम् । अनुपलम्भश्च **तथास्वभावत्वात्**–इतरेतरानुविद्धस्वभावत्वात् । तथास्वभावत्वं च **तथाऽनुभवसिद्धेः** इतरेतरानुविद्धसदसदाद्यनुभवोपलब्धेः । **इति**–एव **छायाऽऽतपानुविद्धा न भवति । इति**–एव **विरोधकल्पनायामपि** सत्यां छाया-ऽऽतपादीनां **कः प्रसङ्गः सदसदादिषु** लक्षणभेदात्? । एतत्प्रकटनायैवाह **न ह्यणुरि**त्यादिना । **न ह्यणुः अचेतन इति** कृत्वा **ज्ञानेऽपि** चेतने **तद्वत्**–अणुवत् **तद्विरोधाभिधानं**–चेतनत्वविरोधाभिधानं **युक्तम्** । कथं न युक्तमित्याह–**तत्स्वभावभेदोपपत्तेः** तयोः–अणु-ज्ञानयोः स्वभावभेदस्तत्स्वभावभेदस्तदुपपत्ते**रिति । एवं शीतोष्णादिष्वपि** निदर्शनेषु **योज्यम्** ॥

**एवं चे**त्यादि । **एवं च**–उक्तनीत्या **अस्य तदतद्वादिनः**–स्याद्वादिनः **निष्कलङ्कमतिसमुत्प्रेक्षित**श्चासौ **सन्न्याय**श्च **तदनुसारतः**–तदनुसारेण । किमित्याह–**सर्वमेव प्रमाणप्रमेयादि प्रतिनियतं न घटते इति वचनमात्रं** निरर्थकं मूलपूर्वपक्षोक्तमिति । कथमित्याह–**तदतद्वादिन एव**–अनेकान्तवादिन एव **स्वपरभावाभावोभयात्मकतया** कारणेन **सर्ववस्तूनां**–प्रमाणादीनां **प्रतिनियतत्वसिद्धेः** कारणात्, **अन्यथा चासिद्धेः** प्रतिनियतत्वस्य । असिद्धिश्च

---

१ 'तत्तद्विरोधा०' इति ग–पाठ । २ द्रष्टव्य खण्डस्याद्यस्य ३२तम पृष्ठ ३३तम च । अत्र 'प्रमाण॰प्रमेयादि'रूपपाठस्य स्थाने 'प्रमाणादि'पाठ । ३ 'अन्यथा , तदसिद्धे , इतरे०' इति क–पाठ. । ४ द्रष्टव्यमाद्यस्य खण्डस्य ३२तम पृष्ठ ३३तम च ।

(मूलम्)

**त्वेन तत्स्वरूपहानिप्रसङ्गात् ॥**

**एतेन 'यः पश्यत्यात्मानम्'[1] इत्ययमपि सङ्ग्रहग्रन्थः प्रत्युक्तः, उक्तार्थसङ्ग्रहपरत्वात्, तस्य च निराकृतत्वात्, अतोऽनेकान्तात्मक एव वस्तुतत्त्वे प्रमाणप्रमेयव्यवहारसिद्धिरुक्तवत् सकलदोषविरहादिति ॥**

**एवमनेकान्तात्मकमिह तत्त्वं दर्शितं मया लेशात् ।**
**जडजनहिताय कृपया गुरुप्रसादाज्जडेनापि ॥ १ ॥[2]**
**प्रतिपक्षदोषवत्या ये खल्वेकान्तवादयुक्त्याऽपि ।**
**विस्मयमुपनीयन्ते त इह जडाः प्रस्तुता नान्ये ॥ २ ॥[3]**

---

(स्वो० व्या०)

**इतरेतरात्मकत्वेन** पररूपाभावाभावेन पररूपप्राप्त्या । इतरेतरात्मकत्वमनेनेतरेतरात्मकत्वेन **तत्स्वरूपहानिप्रसङ्गात्**–प्रमाणादिवस्तुस्वरूपहानिप्रसङ्गात् । प्रमाणस्य प्रमेयरूपापत्त्या प्रमेयस्यापि प्रमाणरूपापत्त्या स्वरूपहानिप्रसङ्ग इति ॥

उपसंहरन्नाह–**एतेने**त्यादि । एतेन–अनन्तरोदितेन सर्वेणैव[4] **यः पश्यत्यात्मानमित्ययमपि सङ्ग्रहग्रन्थः**–मूलपूर्वपक्षोपन्यस्तः[5] **प्रत्युक्तः** । कुत इत्याह–**उक्तार्थसङ्ग्रहपरत्वात्** तस्य, **तस्य च**–उक्तार्थस्य **निराकृतत्वात्** । **अतः**–अस्मात् कारणात् **अनेकान्तात्मक एव वस्तुतत्त्वे** किमित्याह–**प्रमाणप्रमेयव्यवहारसिद्धिः** । कुत इत्याह–**उक्तवत्**–यथोक्तं तथा । किमित्याह–**सकलदोषविरहादिति** ॥

उपसंहरन्नाह–**एवमि**त्यादि । एवम्–उक्तनीत्या **अनेकान्तात्मकमिह**–प्रकरणे **तत्त्वं दर्शितं मया लेशात्** लेशेन । किमित्याह–**जडमतिहिताय** । केन हेतुनेत्याह–**कृपया** । कुतो हेतोरित्याह–**गुरुप्रसादात्** । किंविशिष्टेन मयेत्याह–**जडेनापि**–मन्दबुद्धिनाऽपि ॥ १ ॥

अधिकृतार्थमेव[6] विशेषेण व्याचिख्यासुराह–**प्रतिपक्षे**त्यादि । प्रतिपक्ष**दोषवत्या** नित्याद्यर्थगोचरया **ये खलु**–य एव **एकान्तवादयुक्त्याऽपि** नित्यस्य क्रम-यौगपद्याभ्यामर्थक्रियाविरोधादिलक्षणया प्रतिपक्षदोषवती चेयमनित्यस्यापि तथैव तद्विरोधादिति **विस्मयमुपनीयन्ते** ये तथाविधालोचनारहिताः **त इह**–प्रक्रमे **जडाः प्रस्तुताः, नान्ये**–एकान्ताभिनिविष्टा अभिगृहीतमिथ्यादृष्टय इति ॥ २ ॥

---

१ द्रष्टव्यं प्रथमस्य खण्डस्य ३३तमं पृष्ठम् । २–३ आर्या । ४ 'स वैणैव यः' इति ङ–पाठः ।
५ द्रष्टव्यं प्रथमे खण्डे ३३तमं पृष्ठम् । ६ 'अधिकृतार्यार्थमेव' इति ङ–पाठः ।

( मूलम् )

**प्रतिपक्षदोषदर्शनविधिना शक्यं च कर्तुमेतेषाम् ।**
**सद्बोधहितं प्रायः कृपाऽप्यतः सङ्गतैतेषु ॥ ३ ॥[1]**

---

( स्वो० व्या० )

**प्रतिपक्षे**त्यादि । **प्रतिपक्षदोषदर्शनविधिना** निरन्वयनाशपक्षे तदुत्तराहेतुकत्वाद्यापत्तिलक्षणेन **शक्यं च कर्तुमेतेषां**–प्रस्तुतजडानां किमित्याह–**सद्बोधहितं प्रायः**–बाहुल्येन **कृपाऽप्यतः** कारणात् **सङ्गता** मोहासुखसंवेगयुतकृपात्यागतः अन्यहितयुतत्वेन **एतेषु**–अधिकृतजडेषु ॥ ३ ॥

---

( विवरणम् )

(८-९) **मोहासुखसंवेगयुतकृपात्यागतोऽन्यहितयुतत्वेनेति** । इह त्रिविधः संवेगः–मोहगर्भः असुखगर्भः स[2]ज्ज्ञानगर्भश्चेति । तथा च पठन्ति–

"आर्त्तध्यानाख्यमेकं स्यान्मोहगर्भं तथा परम् ।
सज्ज्ञानसङ्गतं चेति वैराग्यं त्रिविधं मतम् ॥[3]
[4]ईष्टतरवियोगादिनिमित्तं प्रायशो हि यत् ।
यथाशक्त्याऽपि हेयादावप्रवृत्त्यादि[5]वर्जितम् ॥[6]
[7]उद्वेगकृद्विषादाढ्यमात्मघातादिकारणम् ।
[8]आर्त्तध्यानं ह्यदो मुख्यं वैराग्यं लोकसम्मतम् ॥[9]
एको नित्यस्तथा कक्षेऽस्य [10]सम्बन्धेहः(?)
सर्वं निश्चयाद् भूयो भवनैर्गुण्यदर्शनात् ॥[11]
तत्त्यागायोपशान्तस्य सद्वृत्तस्यापि भावतः ।
वैराग्यं तद्गतं यत् तन्मोहगर्भमुदाहृतम् ॥[12]
भूयांसो [13]नामिनो बद्धा [14]बाह्येनेच्छादिना ह्यमी ।
आत्मानस्तद्वशात् कष्टं भवे तिष्ठन्ति दारुणे ॥[15]
एवं विज्ञाय तत्त्यागविधित्यागश्च सर्वथा ।
वैराग्यमाहुः सज्ज्ञानसङ्गतत्त्व[16]दर्शिनम् ॥"[17]

ततः मोहयुक्तस्यासुखयुक्तस्य प्राणिनो यः सवेगस्तद्युक्ता याऽसौ कृपा तस्याः त्यागतः–परिहारात् सकाशाद् यदन्यत् लक्षण[18]माभ्या कृपाभ्यां तृतीय[19]कृपालक्षणं हितं तद्युतत्वेनेति ॥

---

१ आर्या । २ 'सज्ञान०' इति च–पाठ । ३ अनुष्टुप् । ४ 'सवेगश्च वैराग्य इष्टतर०' इति च–पाठ । ५ 'वर्तेता' इति ख–च–पाठ । ६ अनुष्टुप । ७ 'उद्वगकृषिदाद्यमात्म०' इति ख–च–पाठ । ८ 'आर्त ध्यान यदो' इति च–पाठ । ९ अनुष्टुप् । १० 'सम्बन्धेह' इति च–पाठ । ११–१२ अनुष्टुप् । १३ 'नमिनो' इति च–पाठ । १४ 'बाह्येने स्यादिना' इति च–पाठ । १५ अनुष्टुप् । १६ 'दर्शनम्' इति च–पाठ । १७ अनुष्टुप् । १८ 'मात्रा कृपा+या' इति च–पाठ । १९ 'क्रियालक्षण' इति ख–पाठ. ।

